सारं **गन्धसारम्**, पुं क्लीबलिङ्ग । भद्रा श्रीरस्य **भद्रश्रीः** । **तैलपर्णिको** गिरि. आकरोऽस्यस्य **तैलपर्णिकम्**, पुं-क्लीबलिङ्ग. । फलकम-इष्टसिद्धिगवरं वा, तदस्यास्तीति **फलकी**, "प्रेक्षादेरिन्" [सिद्ध० ६ २ ८०] इतीन । **सुरभि** गन्धाढ्यत्वात्, रभुङ् शब्दे" सुष्ठु रम्भते **सुरभिरि**ति वा, "पदि पठि-" [हैमोणादिसू० ६०७] इति बहुवचनादि, 'आगमशासनमनित्यम्" इति [ "रभोऽपरोक्षा-शवि" सिद्ध० ४ ४ १०२ इति ] नागमाभाव. । **सारं** गन्धसारत्वात्, पदैकदेशे पदसमुदायोपचारात्, यथा "सेनो भीमसेन, भामा सत्यभामा" इति **न्यायात्** । महश्च तदर्हं च **महार्हम्** । **रोहणाचले** उद्भव —उत्पत्तिर्यस्य तदिति **रोहणोद्भवम्**, अत एव **रोहणद्रुमः** । आह च

चन्दनं गन्धसारं च महार्हं श्वेतचन्दनम् ।
भद्रश्रीकं मलयजं गोशीर्षं तैलपर्णिकम् ॥

[ ] इति ।

एतस्य लोके 'चन्दन' इति प्रसिद्धि ॥२३॥

**अथ बर्बरके श्वेतं निर्गन्धं बर्बरोद्भवम् ।**

"बर्ब गतौ" बर्बति **बर्बरम्**, "ऋच्छि चटि" [हैमोणादिसू० ३९७] इत्यर, **बर्बरदे**शोत्पन्नत्वाद्वा, स्वार्थिके के **बर्बरकम्** तत्र । **श्वेतं** धवलत्वात् । निर्गतो गन्धोऽस्मात् तदिति **निर्गन्धम्** । **बर्बरदेशे** उद्भव - उत्पत्तिर्यस्य तद् **बर्बरोद्भवम्** चन्दन **विशेषोऽयम्** । लोके तु एतस्य 'बावरउ' इति प्रसिद्धि ।

**स्याद् रक्तचन्दने क्षुद्रचन्दनं भास्करप्रियम् ॥२४॥**
**ताम्रसारं रक्तसारं लोहितं हरिचन्दनम् ।**

रक्तं च तच्चन्दनं च **रक्तचन्दनम्**, तत्र । क्षुद्रं च तत् चन्दनं च **क्षुद्रचन्दनम्** । भास्करस्य प्रियं **भास्करप्रियम्** ॥२४॥

ताम्रेषु- अरुणेषु सारं **ताम्रसारम्** । रक्तेषु सारं **रक्तसारम्** । रुह जन्मनि" रुत्वे रोहति **लोहितम्**, "हृ-श्या-रुहि-" [हैमोणादिसू० २१० ] इतीत, रक्तत्वाद्वा । हरे:—इन्द्रस्य चन्दनं **हरिचन्दनम्**, पुं क्लीबलिङ्ग, हरि -कपिलं वा, तच्चाति-शीतं पीतं चाहु । आह च –

रक्तचन्दनमप्यन्यल्लोहितं हरिचन्दनम् ।
रक्तसारं ताम्रसारं निर्दिशेत् क्षुद्रचन्दनम् ॥

[ ] इति ।

एतस्य लोके 'रतांजणी' इति प्रसिद्धिः ।

**कुचन्दनं तु पत्राङ्गं पतङ्गं पट्टरञ्जनम् ॥ २५ ॥**
**सुरङ्गकं रक्तकाष्ठं पत्तूरं तिलपर्णिका ।**

कौ चन्दनं **कुचन्दनम्**, तत्र । पत्रेष्वङ्गति **पत्राङ्गम्** । पतति–याति रङ्गोऽस्य **पतङ्गः**, "पति तमि–" [ हैमोणादिसू० ९८ ] इत्यङ्गः । "अपभ्रंशोऽयम्" इत्येके । पट्टस्य रञ्जनं **पट्टरञ्जनम्** ॥२५॥

शोभनो रङ्गोऽस्येति **सुरङ्गम्**, के **सुरङ्गकम्** । **सुरक्तक**मित्यपि । रक्तं च तत् काष्ठं च **रक्तकाष्ठम्** । "पत्लृ गतौ" पत्यते **पत्तुरम्**, "सिन्दूर-कर्चूर-पत्तूर-धत्तूरा-दयः" [ हैमोणादिसू० ४३० ] इत्यूरे निपात्यते । तिलस्येव पर्णान्यस्या**स्तिलपर्णी**, सैव **तिलपर्णिका** । "**तिलपर्णी** नदी आकरो अस्या अस्ति" इत्यपरे ऊचिरे । आह च —

कुचन्दनं पतङ्गं च रक्तकाष्ठं सुरक्तकम् ।
पत्तूरं पट्टरागं च पट्टरञ्जनमेव च ॥
[ ] इति ।

अमरोऽप्याह —

तिलपर्णी तु पत्राङ्गं रञ्जनं रक्तचन्दनम् ।
कुचन्दनं च [ का० २ वर्ग ६ श्लो० १३२ ] इति ।

पत्राङ्गनामानि । लोके तु 'पतंग' इति प्रसिद्धिः । सर्वे एते चन्दनविशेषाः ।

यदवादि —

सर्वाण्येतानि तुल्यानि रसतो वीर्यतोऽपि च ।
गन्धेन च विशेषः स्यात् पूर्वं श्रेष्ठतमं गुणैः ॥
[ ] इति ।

**अथ द्रुमोत्पले व्याधः परिव्याधः सुगन्धिकः ॥ २६ ॥**

द्रुमजानि उत्पलानीव पुष्पाण्यस्य **द्रुमोत्पलः**, तत्र । "व्यधंच् ताडने" विध्यते अम्भसा **व्याधः**, परिविध्यते **परिव्याधः** । उभयत्र "तन्-व्यधी–" [सिद्ध०५.१. ६४] इति णः । शोभनो गन्धोऽस्यस्य **सुगन्धिकः**, "अतोऽनेकस्वरात्" [सिद्ध० ७.२.६] इति कः । एतस्य लोके 'कणयर' इति प्रसिद्धिः ॥२६॥

**निर्गन्धेऽस्मिन् कर्णिकारो निषीधः पीतपुष्पकः ।**

अस्मिन् निर्गन्धे द्रुमोत्पले कर्णिकामियर्त्ति **कर्णिकारः** । निषिध्यते अम्भसेति **निषीधः**, पृषोदरादित्वात् । पीतानि पुष्पाण्यस्य **पीतपुष्पः**, स्वार्थिके के **पीतपुष्पकः** । गन्धरहितकणयरनामानि ॥

**पुन्नागे तु महानागः केसरो रक्तकेसरः** ॥ २७ ॥
**देववल्लभ-कुम्भीकौ तुङ्गः पुरुषनामकः** ।

पूजित' पुमान् **पुन्नागः**, स इव प्राधान्यात, [तत्र] । महानाग इव **महानागः**, स इव प्राधान्यात्, महांश्चासौ नागश्चेति वा । प्रशस्ताः केसरा' सन्त्यस्य **केसरः**, अभ्रादित्वादः । रक्ता' केसरा अस्य **रक्तकेसरः** ॥२७॥

देवानां वल्लभो **देववल्लभः**, **कुम्भीको** रसाधारत्वात्, अनयोर्द्वन्द्वः । **तुङ्गः** उच्चैस्तरत्वात्, "तमृच् काङ्क्षायाम्" ताम्यते वा **तुङ्गः**, "कमि-तमि-शमिभ्यो डित्" [ हैमोणादिसू० १०७ ] इति डिदुङ्गः । **पुरुषनामकः** पुरुषाख्यत्वात् । यदवादीन्दुना–

तुङ्ग' पुष्पकसञ्ज' स्यात् पुन्नागो रक्तकेसरः ।
पुन्नागः पुरुषाह्वश्च केषाञ्चित् पद्मकेसरः ॥
[ ] इति ।

**अमरेणापि—**

पुन्नागे पुरुषस्तुङ्गः केसरो देववल्लभः ॥ [का० २ वर्ग ४ श्लो० २५] इति । एतस्य लोके 'पुन्नाग' इति प्रसिद्धि. ।

**अगस्त्ये तु बहुसेनः शुकनाशो मुनिद्रुमः** ॥ २८ ॥

अगं स्तभ्नाति **अगस्त्यः**, "अग-पुलाभ्यां स्तम्भेर्डित्" [हैमोणादिसू० ३६३] इति डिद य', [तत्र] । बह्व्य' सेना अस्य **बहुसेनः** । शुकं नाशयति **शुकनाशः**, शुकस्य नाशोऽस्मादिति वा । मुनीनां द्रुमो **मुनिद्रुमः** । आह च —

अगस्त्याह्वो बङ्ग('बहु)सेनो मधु शिग्रुर्मुनिद्रुमः ।
[ ] इति ।

एतस्य लोके 'अगथियउ' इति प्रसिद्धिः ॥ २८ ॥

**करवीरे कणवीरः श्वेतपुष्पोऽश्वमारकः** ।
**प्रतिहासः शतप्रासोऽश्वरोहः कुमुदोद्भवः** ॥ २९ ॥

---

१ अथागस्त्ये बङ्गसेनः नि० ॥ २ °रोध. कु नि० ॥

किरति—क्षिपति **करवीरः**, "जम्बीरा-ऽऽभीर-" [हैमोणादिसू० ४२२] इतीरे निपात्यते, कृणोति—हिनस्ति **करः**, स वीर इव मारकत्वाद्वा **करवीरः**; कराः—कर्तारो वीरा अत्रेति वा, तत्र । कणा वीरा इव अस्य **कणवीरः**; "कण् आर्तस्वरे" इति **बोपदेवधातुपाठोक्तेः** कणन्ति कणाः, कणाः वीरा अस्मादिति वा । श्वेतानि पुष्पाण्यस्य **श्वेतपुष्पः** । अश्वान् उपभुक्तो मारयति **अश्वमारकः** । प्रतीपः—अश्वघ्नत्वाद् हासः—विकासोऽस्य **प्रतिहासः** । शतं—बहूनि प्रासाः—कुन्ता इव पुष्पाण्यस्य **शतप्रासः** । अश्वं रोहति **अश्वरोहः** । कुमुदमिव उद्भवोऽस्य **कुमुदोद्भवः** । आह च—

शतकुन्तः श्वेतपुष्पः प्रतिहासोऽश्वरोहकः ।
[ ] इति ।

**अश्वहा अश्वघ्नः श्वेतकुन्दश्च** श्वेतकणवीरनामानि ॥ २९ ॥

**रक्तपुष्पेऽत्र लगुडश्चण्डातश्चण्ड-गुल्मकौ ।**

'अत्र' इति रक्तपुष्पे कणवीरे "लगे सङ्गे" लगति **लगुडः**, "लगेरुडः" [हैमोणादिसू० १७७] इत्युडः प्रत्ययः । चण्डमतति तीक्ष्णत्वात् **चण्डातः** । **चण्डातकोऽपि** । चण्ड इव **चण्डः** तैक्ष्ण्यात् । गुल्मं किरति—क्षिपति **गुल्मकः**, "क्वचित्" [सिद्ध० ५.१.१७१] इति डः । यदाह—

द्वितीयो रक्तपुष्पस्तु चण्डातो लगुडस्तथा ।
चण्डातको गुल्मकश्च प्रचण्डः करवीरकः ॥
गुल्महरोऽपि [ ] इति ।

रक्तकणवीरनामानि ।

**तमाले तु कालस्कन्धस्तापिच्छो रञ्जनो वसुः ॥ ३० ॥**

"तमूच् काङ्क्षायाम्" ताम्यति **तमालः**, "ऋ-कृ-मृ-" [हैमोणादिसू० ४७५] इत्यालः, पुं-क्लीबलिङ्गः, तत्र । कालः स्कन्धोऽस्य **कालस्कन्धः** । तापिनश्छादयति **तापिच्छः**, "क्वचित्" [सिद्ध० ५.१.१७१] इति डः । पृषोदरादित्वाच्चानुस्वारागमे **तापिञ्छोऽपि** । रञ्जयति **रञ्जनः** । वसति श्यामवर्णोऽत्र **वसुः**, "भृ-मृ-तॄ-त्सरि-" [हैमोणादिसू० ७१६] इत्युः । एतस्य लोके 'तमाल' इति प्रसिद्धिः ॥ ३० ॥

**तमालपत्रे वस्त्राख्यं रोमसं तामसं दलम् ।**

---

१ कालस्कन्धस्तमाले स्यात् तापि° नि० ॥ २. वस्त्राख्यं नि० ॥

तमालस्य पत्रं **तमालपत्रम्**, तत्र । **वस्त्राख्यं** वसुनामत्वात् । रोमाणि स्यति **रोमसम्** । तमोऽस्त्यस्य **तामसम्**, श्यामत्वात्, ज्योत्स्नादित्वादण । **दलम्** पत्राख्यत्वात् । यदाह—

तमालपत्र पत्र स्यात् पलाशं च दलं छदम् ।

[ ] इति ।

तमालपत्रनामानि ॥

**सूक्ष्मैलायां चन्द्रबाला द्राविणी निष्कुटिस्तुटिः ॥ ३१ ॥**
**कपोतवर्णिका तुच्छा कोरङ्गी बहुला तुला ।**

एलयति मुखदौर्गन्ध्यं प्रेरयति **एला**, सूक्ष्मा चासौ एला च **सूक्ष्मैला**, तस्याम् । चन्द्रस्य-कर्पूरस्य बाला-पुत्रीव चमत्कारादिति **चन्द्रबाला** । द्रावयति-मुखदौर्गन्ध्यमवश्यमिति **द्राविणी**. आवश्यके णिन्निति णिन् । निष्क्रान्ता कुटे -कोशाद् **निष्कुटिः** । "तुटत् कलहे" तुटति **तुटिः**. "नाम्युपान्त्य -" [सिद्ध० ५.१.५४] इति किदि, स्त्रीलिङ्ग । "त्रुटत् छेदन" रोपान्त्योऽयम्. "नाम्युपान्त्य–" [सिद्ध० ५, १.५४] इति किदिप्रत्यये **त्रुटिरि**त्यपि ॥ ३१ ॥

कपोतस्येव वर्णोऽस्या **कपोतवर्णा**, स्वार्थिके के **कपोतवर्णिका** । **तुच्छा** लघीयसीत्वात् । कुरति-शब्दायते **कोरङ्गी**, "शृङ्ग-शार्ङ्गादय" [हैमोणादिसू० ९६] इति गे निपात्यते, गौरादित्वाद् ङी । बंहते **बहुला**, "स्था-वङ्कि-बंहि-" [हैमोणादिसू० ४८६] इति उलो न लोपश्च, बहूनि पर्णानि लाति वा । तोल्यते **तुला**, भिदादित्वात साधुः । आह च —

सूक्ष्मैला द्राविडी तुच्छा कोरङ्गी बहुला त्रुटि ।
एला कपोतवर्णा च चन्द्रबाला च निष्कुटि ॥

[ ] इति ।

सूक्ष्मैलानामानि । लोके 'एलची' इति प्रसिद्धि ।

**स्थूलैलायां बृहदेला पत्रैला त्वक्सुगन्धिका ॥ ३२ ॥**
**त्रिदिवोद्भवा पृथ्वीका कर्णिका त्रिपुटा पुटा ।**

---

१. द्राविडी नि० ॥ २ भद्रैला नि० ॥

स्थूला चासौ एला च **स्थूलैला** तस्याम्। बृहती चासौ एला च **बृहदेला**। पत्रोपलक्षिता एला **पत्रैला**। त्वचा सुगन्धिका **त्वक्सुगन्धिका** ॥ ३२ ॥

त्रिदिवे—स्वर्गे उद्भव—उत्पत्तिर्यस्या सा **त्रिदिवोद्भवा**। पृथ्वी प्रतिकृति **पृथ्वीका** बहुप्रत्वात्, "तस्य तुल्ये क संज्ञा-प्रतिकृत्यो" [सिद्ध०७.१.१०८] इति कः। कर्णयति **कर्णिका,** णके आप्। त्रीणि पुटान्यस्या **त्रिपुटा** त्र्यस्रि। पुटानि सन्ति अस्याः **पुटा,** अभ्रादित्वादः। आह च —

भद्रैला बृहदेला च त्रिदिवा त्रिपुटोद्भवा।
स्थूलैला त्वक्सुगन्धा च पृथ्वीका धान्यका पुटा ॥

[ ] इति।

बृहदेलानामानि। लोके तु 'कङ्कोली एला' इति प्रसिद्धिः।

**कर्पूरे स्याद् घनसारो हिमाह्वो हिमवालुका ॥ ३३ ॥**
**सिताभ्रः शीतलरजः स्फटिकश्चन्द्रनामकः।**

कल्पते **कर्पूरः,** पुं-क्लीबलिङ्ग. "मी-मसि-" [हैमोणादि सू०४२७] इत्युरः, [तत्र]। घनस्येव सारोऽस्य **घनसारः**। हिमस्याऽऽह्वाऽस्य **हिमाह्वः,** शीतलत्वात्। हिमा—शीता चासौ वालुका च **हिमवालुका** ॥ ३३ ॥

सिताभ्रसदृशत्वात् **सिताभ्रः,** दन्त्यादि। शीतलं रजोऽस्य **शीतलरजः**। स्फटिक इव **स्फटिकः,** निर्मलत्वात्। चन्द्रस्य नाम अस्य **चन्द्रनामा,** स्वार्थिके के **चन्द्रनामकः,** आह्लादकत्वात्। [चन्द्रपर्याया अपि]। आह च —

कर्पूर शीतलरज सिताभ्र स्फटिको हिम।
चन्द्रस्तुषारस्तुहिन शशीन्दु-हिमवालुका ॥

[ ] इति।

कर्पूरनामानि। लोके 'कपूर' इति प्रसिद्धिः।

**कक्कोलके कटुफलं कोलकं माधवोषितम् ॥ ३४ ॥**
**कोलं कोशफलं कोरं मारीचं क्षोपमित्यपि।**

कचते—दीप्यते **कक्कोलम्,** "पिञ्छोल-कल्लोल-" [हैमोणादि सू०४९५] इत्योले निपात्यते; "ककि लौल्ये, ककतेऽत्र क कोलति-संस्त्यायति वा" इति **क्षीरस्वामी;**

१ कर्पूरे घनसार स्याद् हिमा॰ नि० ॥ २ कोमक मागधोत्थितम् नि० ॥

स्वार्थिके के कक्कोलकम्, तत्र । कटु–क्षारं फलमस्य कटुफलम् । कोलति–संस्त्यायति कोलम्, स्वार्थिके के कोलकम् । माधवे उष्यते स्म माधवोषितम् ॥३४॥

कोलति कोलम्, अच् । कोशे फलान्यस्य कोशफलम् । कोलशब्दस्य र-लयोरैक्ये कोरम् । "मृंत् प्राणत्यागे" म्रियते अनेन मारीचम्, "म्रियतेरीचण" [ हैमोणादिसू० ११८ ] इतीचण्, पुं-क्लीबलिङ्ग । द्वीपमिव द्वीपम् । आह च--

कक्कोलकं कृतफलं कोलकं कटुकाफलम् ।
तैलं कटुफलं द्वीपं मारीचं माधवोषितम् ॥

[ ] इति ।

एतस्य लोके 'कङ्कोल' इति प्रसिद्धि' ।

**लवङ्गं शिखरं दिव्यं भृङ्गारं वारिजं लवम् ॥ ३५ ॥**
**श्रीपुष्पं श्रयाह्वयं देवपुष्पं चन्दनपुष्पकम् ।**

"लूग्श् छेदने" लूयते लवङ्गम्, "पति-नमि-" [ हैमोणादिसू० ९८ ] इत्यङ्ग, तत्र । "शाखृ व्याप्तौ" शाखति शिखरम्, "शाखेरिदेतौ चात" [ हैमोणादि सू० ४०० ] इत्यर, धातोराकारस्य चेकार', शिखरकारत्वाद्वा । दिवि भव दिव्यम्, "द्युप्रागपागुदक्प्रतीचो य" [सिद्ध०६ ३.८] इति य । भ्रियते भृङ्गारम्, "द्वार-शृङ्गार-" [ हैमोणादिसू०४११ ] इत्यारे निपात्यते। वारिणि जले जात वारिजम्, "क्वचित" [सिद्ध०५ १ १७१] इति ड । लूयते लवम् ॥ ३५ ॥

श्रिया' पुष्पं श्रीपुष्पम् । श्रिया आह्वयो यस्य तत श्रयाह्वयम् । देवं–द्युतिमद देवाना वा पुष्पं देवपुष्पम् । चन्दनस्य पुष्पम चन्दनपुष्पम्, स्वार्थिके के चन्दनपुष्पकम् । आह च-–

लवङ्गं देवकुसुमं भृङ्गारं शिखरं लवम् ।
दिव्यं चन्दनपुष्पं च श्रीपुष्पं वारिसम्भवम् ॥

[ ] इति ।

एतस्य लोके 'लवङ्ग' इति प्रसिद्धि ।

**नलिकायां कपोनांह्रिर्निर्मध्या शुषिरा नटी ॥ ३६ ॥**
**अञ्जनकेशी धमनी शून्या विद्रुमवल्ल्यपि ।**

१ धमन्यञ्जनकेशी च शू॰ नि॰ ॥

"णल गन्धे" नलति **नली**, स्वार्थिके के **नलिका**, तस्याम् । कपोतांह्रिरिव **कपोतांह्रिः**, नलिकत्वात् । निर्गतं मध्यमस्या **निर्मध्या** । शुषिः–छिद्रमस्या अस्ति **शुषिरा**, "मध्वादिभ्यो रः" [सिद्ध० ७.२.२६] इति रः । नटति–नृत्यति वायुना **नटी**, नर्तकीत्वात्, अच्, गौरादित्वाद् ङी ॥ ३६ ॥

अञ्जनाभाः केशा अस्याः **अञ्जनकेशी** । धमनीव **धमनी**, शौषिर्यात् । शुने हिता **शून्या**, "शुनो वश्चोदूत्" [ सिद्ध० ७.१.३३ ] इति **यः** । विद्रुमवल्लीव **विद्रुमवल्ली** नलीयम् । आह च—

नलिका विद्रुमलता कपोतचरणा नली ।
शुषिरा धमनी शून्या निर्मध्या नर्तकी नटी ॥

[ ] इति ।

नलिकानामानि ।

**अतिमुक्ते मण्डकः स्यात् पुण्ड्रको भ्रमरोत्सवः ॥ ३७ ॥**
**पराश्रयः सुवसन्तः[1] कामुको माधवी लता ।**

अतिक्रान्तो मुक्तान् विरक्तान् **अतिमुक्तः**, तत्र । मण्डयति **मण्डकः**, णक । पुण्ड्रदेशोद्भवत्वात् **पुण्ड्रः**, स्वार्थिके के **पुण्ड्रकः** । भ्रमराणामुत्सवोऽस्मादिति **भ्रमरोत्सवः** ॥३७॥

परः–श्रेष्ठ आश्रयोऽस्य **पराश्रयः**, परैराश्रीयते वा । शोभनो वसन्तोऽस्मादिति **सुवसन्तः** । कमनशील **कामुकः**, "शृ कम–" [ सिद्ध० ५.२.४० ] इत्युकण् । मधौ–वसन्ते भवा **माधवी**, "भर्तु-सन्ध्यादेरण्" [ सिद्ध० ६.३.८९ ] इत्यण् । लाति **लता**, "पृषि रञ्जि-" [ हैमोणादिसू० २०८ ] इति किदतः । आह च–

अतिमुक्तः पुण्ड्रकः स्याद् वासन्ती माधवी लता ।
[ अमर० का०२ वर्ग४ श्लो०७२ ] इति ।

अन्योऽप्याह—

अतिमुक्तो माधवी च सुवसन्तः पराश्रयः ।
अतिमुक्तः कामुकश्च मण्डको भ्रमरोत्सवः ॥

[ ] इति ।

---

१ सुवासन्ती का° नि० ॥

अतिमुक्तनामानि । लोके ' अमीतउ ' इति प्रसिद्ध ।

**पिप्पलो बोधिरश्वत्थः श्रीवृक्षश्चलपत्रकः ॥ ३८ ॥**
**मङ्गल्यः केशवावासः श्यामलो द्विरदाशनः ।**

" पल गतौ " पलति पिप्पलः, " पृ-पलिभ्यां टित् पिप् च पूर्वस्य " [ हैमोणादिसू० ११ ] इति अः प्रत्ययः पिप् च पूर्वस्य, पिप्पलानि—**देश्यां** पत्राणि, तानि सन्त्यस्य वा, अभ्रादित्वात् । " अपि प्लवते " इति **नैरुक्ताः** । " एवमाद्याः प्राकृता अपि " इति **धन्वन्तरिः** । यदाह—

प्रायो जनाः सन्ति वनेचराद्या गोपादयः प्राकृतनामतज्ज्ञाः ।
प्रयोजनार्थाः वचनप्रवृत्तिर्यतस्ततः प्राकृत इत्यदोषः ॥
[ ] इति ।

किञ्च—

रस-वीर्य-विपाकेभ्यो मूलात् पुष्पात् फलाद दलात ।
आकाराद देश-कालादेर्वनौषध्यर्थमुन्नयेत् ॥
[ ] इति ।

तत्र । बुध्यते **बोधिः**, " किलि-पिलि- " [ हैमोणादि सू० ६०८ ] इति इः, बोधिसत्त्वाख्य सर्वोपकारित्वात् तनुवृत्तत्वाद् गुरुपर्णत्वाच्च । अश्वेषु तिष्ठति **अश्वत्थः** अश्वाश्रयः, पृषोदरादित्वात् सस्य तत्वम् । श्रिया युक्तो वृक्षः **श्रीवृक्षः** । स्वल्पवातेऽपि चलानि पत्राण्यस्य **चलपत्रः**, स्वार्थिके के **चलपत्रकः** ॥३८॥

मङ्गले साधुर्मङ्गल्यः, " तत्र साधौ " [ सिद्ध० ७.१.१५ ] इति यः । केशवस्य आवासः केशवः आवसत्यत्रेति वा **केशवावासः** । अत एव **कृष्णावासः** । श्यामो वर्णोऽस्त्यस्य **श्यामलः**, सिध्मादित्वाद् लः । द्विरदस्य अशनः— भक्तं **द्विरदाशनः**, पुं-क्लीबलिङ्गः । आह च—

पिप्पलः केशवावासश्चलपत्रः पवित्रकः ।
मङ्गल्यः श्यामलोऽश्वत्थो बोधिवृक्षो गजाशनः ॥
[ ] इति ।

**एतस्य लोके 'पीपल' इति प्रसिद्धिः ।**

**गर्दभाण्डे कन्दरालश्छायावृक्षः कमण्डलुः ॥३९॥**
**प्लक्षो वटः प्लवः शुङ्गी सुपार्श्वश्चारुदर्शनः ।**
**कपीतनः कपीतः स्यात् पीतन-प्लवकावपि ॥४०॥**

गर्दभ इवाण्डमस्य **गर्दभाण्डः**: गर्दं–सशब्दं भाण्डमस्येति वा, तत्र । कन्दरां लाति **कन्दरालः**, गोणादित्वात् कन्दराशब्दस्यावन्तत्वम । छायायुक्तश्छायाया वा वृक्ष **छायावृक्षः** । क–पानीयमनिति–प्राणित्यस्मिन्निति **कमण्डलुः**, "गूहलु-गुग्गुलु-कमण्डलव " [ हैमोणादिसू० ८२४ ] इति आलुप्रत्यये निपात्यते, निपातनाच्च कम्पूर्वादनितेर्डाऽन्तो ह्रस्वश्च प्रत्ययादे , पुंलिङ्ग ॥३९॥

प्लक्षति--अधो गच्छति **प्लक्षः** "प्लुषू दाहे" प्लोषत्यशिवमिति वा, "प्लुषे प्लक्ष् च" [ हैमोणादिसू० ५६६ ] इति स प्रत्ययो धातोश्च प्लक्ष् इत्यादेश । वटति–वेष्टयति मूलैर्वटः, अच् , त्रिलिङ्ग । 'प्लुङ् गतौ ' प्लवते अशिवमस्मादिति **प्लवः** । शाम्यति **शुङ्गी**, "कमि-नमि- " [ हैमोणादिसू० १०७ ] इति डिदुङ्ग , गौरादित्वाद् ङीः । शोभन पार्श्वमस्य **सुपार्श्वः** । चारु–मनोहर दर्शनमस्य **चारुदर्शनः** । कं पीतयति **कपीतनः**, " इणक् गतौ " कपीन् एति वा, पृषोदरादित्वात् । कं पीतयति **कपीतः**, अच् । कपीतनशब्दसम्बन्धिककारस्य पृषोदरादित्वाल्लोपे **पीतनः**, पीतयति वा **पीतनः** । प्लवने वातेन **प्लवकः** । आह च —

प्लक्ष कपीतन' शुङ्गी सुपार्श्वश्चारुदर्शनः ।
प्लवको गर्दभाण्डश्च कमण्डलुर्वट' प्लव' ॥

[ ] इति ।

**अमरो**ऽपि- —

गर्दभाण्डे कन्दराल-कपीतन-सुपार्श्वका' ।

[ का०२ वर्ग ४ श्लो०४३ ] इति ।

गर्दभाण्डनामानि । लोके तु 'पींपरी' इति प्रसिद्धि' ॥४०॥

**पर्कट्यां पर्कटी प्लक्षः सतीदो लक्षणो जटी ।**

" पृचैप् सम्पर्के " पृच्यते **पर्कटी**, " कपट-कीकटादयः " [ हैमोणादिसू० १४४ ] इत्यटे निपात्यते, गौरादित्वाद् ङी' । यत **शाश्वतः**—

१ कर्पटी पर्कटी प्लक्ष' सतीदो लक्षणे नटी नि०॥

विज्ञेया पर्कटी प्लक्षः प्लक्षः पिप्पलपादपः ।

[ ] इति ।

तस्याम् । पर्कटाख्यं फलमस्त्यस्य **पर्कटी**. इन्नन्तोऽयम् । यद् **वाचस्पतिः**–

"फलं त्वेतस्य पर्कटम् " [ ] इति ।

**प्लक्ष**शब्दस्य साधना अत्र पूर्ववत् । सतां दयते पालयति **सतीदः** । लक्षयति **लक्षणः** । जटा सन्त्यस्य **जटी**, शिखादित्वादिन् ।

**वटे वैश्रवणावासो न्यग्रोधो बहुपाद् ध्रुवः ॥४१॥**
**स्कन्धजन्मा रक्तफलः क्षीरी शुङ्गी वनस्पतिः ।**

वटति–वेष्टयति मूलैर्**वटः**, तत्र । वैश्रवणस्य–धनदस्य आवासो **वैश्रवणावासः** । न्यग् रोहति **न्यग्रोधः**, "वीरुन्न्यग्रोधौ" [सिद्ध० ४.१.१२१] इति धत्वे साधुः, न्यक्–तिर्यग्मार्गे मूलैः रुणद्धि वा । बहवः पादाः- मूलान्यस्य **बहुपाद्**, "सुसङ्ख्यात्" [सिद्ध० ७.३.१५०] इति पाद्भावः । "ध्रुत् गति-स्थैर्ययोः" ध्रुवति **ध्रुवः**, "तुदादिविषि-" [हैमोणादिसू० ५] इति किदः प्रत्ययः ॥ ४१ ॥

स्कन्धात्–प्रकाण्डाद् जन्माऽस्य **स्कन्धजन्मा** । रक्तानि फलान्यस्य **रक्तफलः** । क्षीरमस्त्यस्य **क्षीरी** । **शुङ्गी**शब्दस्य साधना प्राग्वत् । वनस्य पतिः **वनस्पतिः**, वर्चस्कादित्वात् साधुः । आह च– –

वटो रक्तफलः शुङ्गी न्यग्रोधः स्कन्धजो ध्रुवः ।
क्षीरी वैश्रवणावासो बहुपादो वनस्पतिः ॥

[ ] इति ।

न्यग्रोधनामानि । लोकेऽस्य 'वड्ड' इति प्रसिद्धिः ।

**उदुम्बरे जन्तुफलो यज्ञाङ्गो हेमदुग्धकः ॥४२॥**
**सदाफलो वसुवृक्षः श्वेतवल्को मशकयपि ।**

"उन्दी (उन्दैप्) क्लेदने" उनत्ति **उदुम्बरः**, 'तीवर-धीवर-' [हैमोणादिसू० ४४४] इति वरटि निपात्यते, निपातनाद् उन्देर्धातो किदुम् चान्त , उल्लङ्घितोऽम्बर इति वा, पृषोदरादित्वाद् उत्वम् , तत्र । मशकगर्भाणि फलान्यस्य **जन्तुफलः** । अत एव **कृमिफल** इति पर्यायेणोक्त । यज्ञ एवाङ्गोऽस्य **यज्ञाङ्गः** । हेमवर्णं दुग्धमस्य **हेमदुग्धः**, के **हेमदुग्धकः** ॥ ४२ ॥

सदा फलति **सदाफलः** । वसोर्वृक्षो **वसुवृक्षः** । श्वेतो वल्कः—छल्लिरस्य **श्वेतवल्कः** । मशकाः सन्त्यस्य **मशकी** । आह च—

क्षीरवृक्षे हेमदुग्ध उदुम्बर-सदाफलौ ।
अपुष्प-फलसम्बद्धो यज्ञाङ्ग' श्वेतवल्कलः ॥

[ ] इति ।

इन्दुरपि जगाद—

उदुम्बरस्तु यज्ञाङ्ग मुचक्षु श्वेतवल्कल ।
हेमदुग्ध कृमिफल क्षीरवृक्ष सकाञ्चन. ॥

[ ] इति ।

उदुम्बरनामानि । लोके 'उंबरा' इति प्रसिद्धि' ।

**काकोदुम्बरिकायां तु फाल्गुनी फल्गुवाटिका ॥४३॥**
**फल्गुराजी फलभारी मलयूर्जघनेफला ।**

काकप्रिया उदुम्बरिका **काकोदुम्बरिका**, तस्याम् । फल्गुनस्येयं **फाल्गुनी**, "तस्येदम्" [सिद्ध० ६.३.१६०] इत्यण् । फल्गुश्चासौ वाटिका च **फल्गुवाटिका** ॥४३॥

फलति **फल्गुः**," फलि-वल्यमेर्गु' " [ हैमोणादिसू० ७५८ ] इति गुः । अजति **आजिः**,"पादाच्चात्यजिभ्याम" [ हैमोणादिसू० ६२० ] इति णिदि', "पद' पादस्याऽऽज्याति-गोपहते" [सिद्ध० ३.२.९५] इति निर्देशाद् ङीभावाभाव', ङ्याम् **आजी** । फलानि बिभर्ति **फलभारी**, "कर्मणोऽण्" [सिद्ध० ५ ३.१४] इत्यण्, गौरादित्वाद् ङीः । "युणि जुगुप्सायाम " मलं श्वित्रं यावयते **मलयूः**, पृषोदरादित्वात् । जघने—बुध्ने फलान्यस्याः **जघनेफला**, सप्तम्यलुक् । एते स्त्रीलिङ्गाः । आह च—

काकोदुम्बरिका फल्गुराजी [च] फल्गुवाटिका ।
फाल्गुनी फलभारी च मलयू' श्वित्रभेषजम् ॥

[ ] इति ।

काकोदुम्बरिकानामानि । लोके 'कालुम्बरी' इति प्रसिद्धि' ।

**राजादने तु राजन्या क्षीरिका प्रियदर्शनः ॥४४॥**
**कपिप्रियो दृढस्कन्धो मधु-रौलफलो नृपः ।**

१ फलराजी फलभारी फल्यु॰ नि० ॥ २ ॰राजफलो नि० ॥

राज्ञाम् अदनं मृष्टत्वाद् **राजादनम्**, पु-क्लीबलिङ्ग, तत्र । राज्ञे हिता **राजन्या,** "तस्मै हिते" [सिद्ध० ७.१ ३५] इति हितेऽर्थे य । क्षीरमस्त्यस्या **क्षीरिका,** क्षीरस्वादुत्वात, "अतोऽनेकस्वरात्" [सिद्ध० ७.२.६] इतीक । प्रियं दर्शन-मस्य **प्रियदर्शनः** ॥४४॥

कपे प्रिय **कपिप्रियः** । दृढ स्कन्ध प्रकाण्डोऽस्य **दृढस्कन्धः** । ['मधु-रालफल'] मधुरालाभ्या फलमिति योज्यते, तत मधु—मृष्ट फलमस्य **मधुफलः,** रालवर्णं फलमस्य **रालफलः** । नृपप्रियत्वात् **नृपः** । आह च

क्षीरिकोक्ता च राजन्या क्षीरभृद् रूपको नृप ।
राजादनो दृढस्कन्ध कपीष्ट प्रियदर्शन ॥

[ ] इति ।

राजादननामानि । लोके तु 'रायणी' इति प्रसिद्धि ।

**पियाले तु राजवृक्षो बहुवल्को धनुष्पटः ॥ ४५ ॥**
**सन्नकद्रुः खरस्कन्धश्चारस्तापसवल्लभः ।**

"पां पाने" पीयते **पियालः,** 'कुलि-पिलि-बिशि-बिडि-मृणि-कुणि-पी-प्रांभ्य कित' [हैमोणादिसू० ४७६] इत्याल प्रत्यय, तत्र । राज्ञा वृक्षो **राजवृक्षः** । बहवो वल्का अस्य **बहुवल्कः** । धनुष इव पट -विस्तारोऽस्य **धनुष्पटः** ॥४५॥

सन्नकः—स्वरो द्रु—स्कन्धोऽस्य **सन्नकद्रुः** । खर—कठोर स्कन्धोऽस्य **खर-स्कन्धः** । "चर भक्षण च" चर्यते—अद्यते **चरः** चर एव **चारः,** प्रज्ञादित्वादण् । तापसाना वल्लभ **तापसवल्लभः** । आह च

पियालोऽथ खरस्कन्धश्चारो बहुलवल्कल ।
सन्नकद्रुश्चापपटो ललनस्तापसप्रिय ॥

[ ] इति ।

**चापपट** इति पर्यायेणोक्त । पियालनामानि । लोके 'चारु' इति प्रसिद्धि ।

**आम्रातके वर्षपाकी कपिचूतः कपिप्रियः ॥ ४६ ॥**
**कपीतनः पीतनकस्तनुक्षीरोऽम्लपाटकः ।**
**शृङ्गी कपिरमाख्यश्च दृण्यफलो बिभीषणः ॥ ४७ ॥**

"अम शब्द-भक्त्यो" अमति **आम्रातकः** "श्लष्मातका-ऽऽम्रातक-" [हैमोणादि-सू० ८३] इति निपात्यते आम्रमततीति कपिचूतन्वादिति वा, तत्र । वर्षेण पाकोऽस्त्यस्य **वर्षपाकी** । कपेश्चूत आम्र **कपिचूतः** । कपे प्रिय **कपिप्रियः** ॥ ४६ ॥

कपीस्तनोति **कपीतनः** । पीतीक्रियते अनेन पीतयति वा **पीतनः**, स्वार्थिके के **पीतनकः** । "कपीतनशब्दस्य **पीतनो**ऽपभ्रंशः" इत्येके । तनु–तुच्छं क्षीरमस्य **तनुक्षीरः** । अम्लं पाटयति **अम्लपाटकः** । पटधातुर्भासार्थश्चौरादिकः । शाम्यति **शृङ्गी**, "कमि-तमि-" [ हैमोणादिसू० १०७] इति डिदुङ्गः, गौरादित्वाद् ङी । यन्**महेश्वरः**

शृङ्गी वटा-ऽऽम्रातकयोः कर्कट्यामपि विश्रुता ।

[ ] इति ।

कपिरसेन आढ्यः **कपिरसाढ्यः** । दृष्यं फलमस्य **दूष्यफलः** । भीषि बिभीषयते **बिभीषणः**, "नन्द्यादिभ्योऽनः" [सिद्ध० ५. १. ५२] इत्यनः । आह च—

आम्रातकः पीतनकः कपिचूतोऽम्लपाटकः ।
शृङ्गी कपिरसाढ्यश्च तनुक्षीरः कपिप्रियः ॥

[ ] इति ।

आम्रातकनामानि । लोके 'अम्बाडआ' इति प्रसिद्धिः ॥ ४७ ॥

## अर्के विकीरणोऽर्काह्वो जम्भला-ऽऽस्फोट-विष्किराः । क्षीरा-ऽर्कपर्णः

अर्च्यते–स्तूयतेऽ**र्कः** । यदाह **श्रीधरः**

"अर्कः सूर्येऽर्कपर्णे च" । [ ] इति ।

**महेश्वरोऽपि—**

"अर्कोऽर्कपर्णे स्फटिके" । [ ] इति ।

तत्र । विकिरति पुष्पाणि **विकीरणः**, पृषोदरादित्वात् साधुः । अर्कः सूर्यस्तस्य आह्वा–नाम अस्य **अर्काह्वः** । तेन **भास्करः रवि**रित्यादयोऽप्यवसेयाः । जम्भं लाति **जम्भलः** । "स्फुटत् विकसने" आस्फुटति पुष्पैः **आस्फोटः**, स्फुटति गुणः, अच् (घञ्) प्रत्ययः । विकिरति **विष्किरः**, "वौ विष्किरो वा" [सिद्ध० ४. ४. ९६] इति सडागमः । उपलक्षणोऽयम्, तेनान्यत्रापि । 'क्षीरा ऽर्कपर्णः' इति क्षीरा-ऽर्कयोः पर्णः इति सम्बध्यते, तेन क्षीरं पर्णेऽस्य **क्षीरपर्णः**, अर्काभानि पर्णान्यस्य **अर्कपर्णः** । आह च—

अर्कः सूर्याह्वयः पुष्पी विष्किरोऽथ विकीरणः ।
जम्भलः क्षीरपर्णः स्यादास्फोटो भास्करो रविः ॥

[ ] इति ।

एतस्य लोके 'आकु' इति प्रसिद्धिः । तन्नामानि -

**राजार्के त्वलर्को गणरूपकः ॥ ४८ ॥**
**एकाष्ठीलः सदापुष्पी मन्दारश्च प्रतापसः ।**

राजा चासौ अर्कश्च **राजार्कः**, श्वेतोऽयम्, तत्र । शुक्लोऽर्के **अलर्कः**, पृषोदरादित्वात् साधुः, अलति--भूषयतीति वा, "निष्क-तुरुष्क" [हैमोणादिसू० २६] इति के निपात्यते । यत् **श्रीधरः**

"अलर्को धवलार्के स्यात्" [ ] इति ।

गणाः--बहवो रूपाण्यस्य **गणरूपः**, स्वार्थिके के **गणरूपकः** ॥ ४८ ॥

एकोऽष्ठीलः--मज्जाऽस्य **एकाष्ठीलः** । सदा पुष्पाणि सन्त्यस्य **सदापुष्पी** । मन्दान् इयर्ति **मन्दारः**, मन्दा आरा अस्य वा । प्रतापं स्यति **प्रतापसः**, "षोंच् अन्तकर्मणि" इत्यस्माद् डप्रत्ययः । आह च

राजार्को वसुकोऽर्कोऽयोऽर्को मन्दारो गणरूपकः ।
एकाष्ठीलः सदापुष्पी सुधा-ऽलर्कः प्रतापसः ॥
[ ] इति ।

एतस्य लोके 'आकुमन्दारु' इति प्रसिद्धिः । यदमरः

अर्काह्व-वसुका-ऽऽस्फोट-गणरूप-विकीरणाः ॥
मन्दारश्चार्कपर्णोऽत्र शुक्लेऽलर्क-प्रतापसौ ।

[ का० २ वर्ग ४ श्लो० ८० -८१ ] इति ।

**स्नुह्यां वज्रो महावृक्षोऽसिपत्रः स्नुक् सुधा गुडा ॥४९॥**
**समन्तदुग्धा सीहुण्डो गण्डीरो वज्रकण्टकः ।**

"ष्णुहौच् उद्गिरणे" स्नुह्यति क्षीरं **स्नुहिः**, "नाम्युपान्त्य-" [हैमोणादिसू० ६०९] इति किदिः, स्नुहीति वैद्याः, तस्याम् । वज्र इव **वज्रः**, भेदकत्वात् । महांश्चासौ वृक्षश्च **महावृक्षः** । असि--खड्गस्तदाभानि पत्राण्यस्य **असिपत्रः** । "स्नुक् प्रस्रवणे" स्नौति क्षीरं **स्नुक्** स्नुकौ स्नुकः, "ऋगादय" [हैमोणादिसू० ८७०] इति क्विप्प्रत्ययान्तो निपात्यते । सुधां दधाति धयन्ति एना वा **सुधा** । "गुङ् शब्दे" गवते गूयते वा **गुडा**, "कु-गु-हु-नी" [हैमोणादिसू० १७०] इति कित् डः, गुडति रक्षति वा, "नाम्युपान्त्य-" [सिद्ध० ५ १ ५४] इति कः । यच्छाश्वतः—

१ पुष्पो म" नि० ॥ २ 'ऽज्योऽर्को पु १ ॥ ३ त्रुटया वज्रो नि० ॥ ४ स्नुक् नि० ॥ ५ संहुण्ड शण्डेरी वज्रकण्टक नि० ॥

गुडौ गोलेक्षु-विकृती स्नुही-गुलिकयोर्गुडा ।

[ ] इति ॥ ४९ ॥

समन्ततो दुग्धमस्याः समन्तदुग्धा, पृषोदरादित्वात् तकारलोपः। "हुडुड् सङ्घाते" सीति हुण्डते सीहुण्डः, सिंहतुण्डापभ्रंशः । यद् मेखला—

"कुलिशतरुः सीहुण्डः" [ ] इति ।

गुडति गण्डीरः. "जम्बीरा-ऽऽभीर-" [ हैमोणादिसू० ४२२ ] इति ईरे निपात्यते, गण्डीन् ग्रन्थीन् ईर्यति वा । वज्रवद् भेदकानि कण्टकान्यस्य वज्रकण्टकः। आह च

स्नुक् सुधा च महावृक्षो गुडा निस्त्रिंशपत्रकः ।
समन्तदुग्धा गण्डीरः सीहुण्डो वज्रकण्टकः ॥

[ ] इति ।

एतस्या लोके 'थोहरी' इति प्रसिद्धिः ।

**करमर्दे करमन्दः कराम्लक-सुषेणकौ ॥ ५० ॥**
**स्थूलपर्कट आविग्नः कृष्णपाकफलोऽपि च ।**

करेण मृद्यते करमर्दः, तत्र । करेण मन्दः करमन्दः । करे अम्ल इव कराम्लः, स्वार्थिके के कराम्लकः । शोभना सेनाऽस्य सुषेणः कपिमुखाभः, "नाम्नः" [सिद्ध० २. ३. २६] इति षत्वम् , स्वार्थिके के सुषेणकः ॥५०॥

स्थूलं पर्कटं—फलमस्य स्थूलपर्कटः "ओविजैति भय-चलनयोः" उद्विजतेऽस्माद् आविग्नः, "दिन-नग्न-" [ हैमोणादिसू० २६८ ] इति ने निपात्यते । कृष्णं पाके फलमस्य कृष्णपाकफलः । आह च—

करमर्दकमाविग्नं सुषेणं पाणिमर्दकम् ।
कराम्लं करमन्दं च कृष्णपाकफलं मतम् ॥

[ ] इति ।

सर्वेऽप्येते पुं-क्लीबलिङ्गाः । करमर्दकनामानि । लोके 'करमदा' इति प्रसिद्धिः ।

**जम्बीरे जम्भलो जम्भो जंम्भीरो दन्तहर्षणः ॥ ५१ ॥**
**दन्तशठो वक्त्रशोधी गम्भीरो रोचनोऽपि च ।**

"जमू अदने" जम्यते जम्बीरः, "जम्बीरा-ऽऽभीर-" [ हैमोणादिसू० ४२२ ] इति ईरे निपात्यते, तत्र । "जभुङ् गात्रविनामे" जम्भते जम्भलः, "मुरलोरल-" [हैमोणादिसू०

१ °मदः कराम्लक नि० ॥ २ स्थलपर्कट नि० ॥ ३ जम्भीलो नि० ॥

४७४] इत्यले निपात्यते जम्भान्—दन्तान् लात्यम्लत्वाद्वा । जम्भते **जम्भः**, अच्. [पुं-क्लीबलिङ्ग] "कॄ-गॄ-पॄ पृग-मज्जि" [हैमोणादिसू० ४१८] इति बहुवचनादीरे **जम्भीरः**, "जम्भेर्मोहनार्थस्यैतानि रूपाणि" इति **क्षीरस्वामी** । दन्तान् हर्षयति **दन्तहर्षण**. ॥ ५१ ॥

दन्ता शठा अस्मादिति **दन्तशठः** । वक्त्रं शोधयत्यवश्य **वक्त्रशोधी** "णिन् चाऽऽवश्यका-" [सिद्ध० ५. ४. ३६] इति णिन् वक्त्रस्य शोधो **वक्त्रशोध** म विद्यते अस्य वा । गच्छति **गम्भीरः** "जम्बीर ऽऽभीर-" [हैमोणादिसू० ४२२] इतीर निपात्यते । रोचते **रोचनः**, "इङितो व्यञ्जनाद्यन्तात्" [सिद्ध० ५. २. ४४] इत्यन । आह च—

जम्भीरो जम्भलो जम्भ प्रोक्तो दन्तशठस्तथा ।
जम्बीरो वक्त्रशोधी च रोचनो दन्तहर्षण ॥
[ ] इति ।

एतस्य लोके 'जम्बीर' इति प्रसिद्धि ।

**करुणे तु छागलाख्यो मल्लिकाकुसुमः प्रियः ॥५२॥**

"कॄन् विक्षेपे" कीर्यते **करुणः**, "ऋ कॄ-वॄ धॄ-दारिभ्य उण" [हैमोणादिसू० १९६] इत्युण तत्र । छागलस्याख्या अस्य **छागलाख्यः** । मल्लिकाया इव कुसुममस्य **मल्लिकाकुसुमः** । **मल्लिकापुष्पो**ऽपि । प्रीणाति हृदयं **प्रियः**, "नाम्युपान्त्य-" [सिद्ध० ५ १.५४] इति क । एतस्य लोके 'करणा' इति प्रसिद्धि ॥५२॥

**बीजपूरे बीजपूर्णः पूरकः फलपूरकः ।**
**सुपूरको मातुलुङ्गः केसराम्लोऽम्लकेसरः ॥५३॥**
**वराम्लो बीजको लुङ्गो रुचको मध्यकेसरः ।**
**क्रमिघ्नो गन्धकुसुमः केसरो शीधुपादपः[1] ॥५४॥**

बीजैः पूर्यते **बीजपूरः**, तत्र । बीजैः पूर्णो **बीजपूर्णः** । पूरयति **पूरकः** । फलानि पूरयति **फलपूरकः** । सुतरां पूरयति **सुपूरकः** । मा तोल्यते **मातुलुङ्गः**, "माङस्तुलेरुङ्गक च" [हैमोणादिसू० १०६] इति उङ्गक् प्रत्यय । केसरा अम्लाः अस्य **केसराम्लः**; केसरश्चासौ अम्लश्चेति वा । अम्ला केसरा अस्य **अम्लकेसरः** ॥५३॥

वरश्चासौ अम्लश्च **वराम्लः** । बीजा सन्त्यस्य **बीजः**. अभ्रादित्वाद, स्वार्थिके के **बीजकः** । मातुलुङ्गशब्दस्य पृषोदरादित्वाद मातुइत्येतस्य लोपे **लुङ्गः** ।

1 साधुपादप नि० ॥

रोचयति **रुचकः**, "ध्रु-धून्दि-रुचि-" [हैमोणादिसू० २५ ] इति किदक । मध्ये केसरा अस्य **मध्यकेसरः ।** कृमीन हन्ति **कृमिघ्नः** । गन्धा गन्धवन्त कुसुमा अस्य **गन्धकुसुमः ।** केसरा सन्त्यस्य **केसरी ।** शीधुन पादप **शीधुपादपः ।** आह च–

फलपूरो बीजपूर केसरो बीजपूरक ।
बीजक केसराम्लश्च मातुलुङ्गस्तु पूरक ॥

[ ] इति ।

एतस्य लोके 'बीजउरउ' इति प्रसिद्धि ॥५४॥

**मातुलुङ्ग्यां वर्धमाना मधुरा मधुकर्कटी ।**
**मधुवल्ली पीतपुष्पी देवदूती महाफला ॥५५॥**

**'मातुलुङ्ग्यां'** बीजपूरविशेषे । वर्धते फलैर्वर्धमाना । मधु विद्यते अस्या **मधुरा,** "मध्वादिभ्यो र " [सिद्ध० ७.२.२६] इति र माद्यत्यनया वा **मधुरा,** "श्वशुर-कुकुन्दुर " [हैमोणादिसू० ४२६] इत्युरं निपात्यते । **यन्महेश्वरः—**

मधुरा शतपुष्पाया मिश्रेया-नागरीभिदो ।
मधुकर्कटिका-मेदा-मधूली-यष्टिकासु च ॥

[ ] इति ।

मधुन कर्कटी इव **मधुकर्कटी ।** मधुनो वल्ली **मधुवल्ली ।** पीतानि पुष्पाण्यस्या **पीतपुष्पी,** "असत्काण्ड-प्रान्त-शतैकाञ्च पुष्पात " [सिद्ध० २.४.५६] इति ङी । देवाना दूतीव **देवदूती ।** महान्ति फलान्यस्या **महाफला ।** आह च—

बीजपूर्णोऽपर प्रोक्तो मधुरा मधुकर्कटी ।
मधुवल्ली मधुपर्णी वर्धमाना महाफला ॥

[ ] इति ॥५५॥

**अम्लीकायां चुक्रिकाऽम्ला शुक्तिका चाम्लिकाऽम्लिका ।**
**चुक्रा चिञ्चा तिन्तिडीका तिन्तिली गुडपुष्पिका ॥५६॥**

अम्ल्येव **अम्लीका,** तस्याम् । चुक्रैव **चुक्रिका ।** "चुक्रन्ते–व्यथन्तेऽस्या **चुक्रिका** इति क्षीरस्वामी । अमति **अम्ला,** "शा-मा श्या शक्यम्यमिभ्यो ल" [हैमो-

१ पूतिपुष्पा नि० ॥ २ महाबला नि० ॥ ३ अम्लिकाया नि० ॥ ४ °काम्ली चिकाम्लिका नि० ॥ ५ °डी गुरुपु° नि० ॥

णादिसू० ४६२ ] इति ल अम्लत्वाद्वा **अम्ला** । शुक्तम्- अम्लविशेष तान्तोऽयम्, स विद्यतेऽस्याः **शुक्तिका,** "अतोऽनेकस्वरात्" [ सिद्ध० ७.२ ६ ] इति क । अम्लैव **अम्लिका** । अम्ला एव **अम्बिलका** । "चकि तृप्ति-प्रतीघातयो "चकते अनया **चुक्रा,** "चकि-रमि-विकसेरुच्चास्य" [ हैमोणादिसू० ३९३ ] इति र प्रत्ययोऽकारस्य चोकार, चुक्र--अम्लो रस, स विद्यतेऽस्या वा, अभ्रादित्वात् । चिञ्चिमायते अम्लत्वान्मुखं ययाऽसौ **चिञ्चा,** पृषोदरादित्वात् साधु । "तिम तीम ष्टिम ष्टीमच् आर्द्रभावे" तिम्यति **तिन्तिडीका,** "सृणीका-स्तीक-प्रतीक" [ हैमोणादिसू० ५० ] इतीके निपातनात् तिमेर्धातोस्तिड् अन्तो भवति । **केचित्** पूर्वस्य इत्व नेच्छन्ति तन्मते **तिन्तडीका** । तिम्यति तिन्तिडा, "विहड-कहोड-" [ हैमोणादिसू० १७२ ] इति अडे निपात्यते, ऋफिडादित्वाल्लत्वे **तिन्तिला** । गुड इव पुष्पाण्यस्या **गुडपुष्पिका** । आह च -

अम्लीका चुक्रिका चुक्रा साऽम्ला शुक्ताऽथ शुक्तिका ।
अम्लिका चाम्बिलका चिञ्चा तिन्तिडीका च तिन्तिला ॥

[ ] इति ।

एतस्या लोके 'आबिली' इति प्रसिद्धि ॥५६॥

**वृक्षाम्ले स्यादम्लवृक्षस्तिन्तिडीको महीरुहः ।**
**शाकाम्लमम्लशाकं चाम्लपूरो रक्तपूरकः ॥५७॥**

**वृक्षश्चासौ** अम्लश्च **वृक्षाम्लः**, तत्र । अम्लश्चासौ वृक्षश्च **अम्लवृक्षः** । **तिन्तिडीक-**शब्दस्य साधना पूर्ववत् । मह्यां रोहति **महीरुहः** । शाकं च तद् अम्लं च **शाकाम्लम्** । अम्लं च तत् शाकं च **अम्लशाकम्** । अम्लस्य पूरो अस्य **अम्ल-पूरः** । रक्तं पूरयति **रक्तपूरकः** । आह च

वृक्षाम्लं तिन्तिडीकं च शाकाम्लं रक्तपूरकम् ।
अम्लवृक्षोऽम्लशाकं तदम्लपूरो महीरुह ॥

[ ] इति ।

**वृक्षाम्लनामानि** । लोके 'तिन्तिडीक' इति प्रसिद्धि. ॥५७॥

**अथाम्लवेतसे भीमो भेदनो रक्तपूरकः ।**
**रुधिरस्रावकश्चुक्रं मांसाग्निर्वानिकप्रियः ॥५८॥**

---

१ अभिधानचिन्तामणौ अमरकोशे च 'तिन्तिडी' इति दृश्यते ॥

**शाखाम्लो वेतसाम्लोऽम्लस्तिन्तिडीको रसाम्लकः ।**

अम्लश्चासौ वेतसश्च **अम्लवेतसः**, तत्र । बिभ्यति अस्मादिति **भीमः**, "भियः षोऽन्तश्च वा" [हैमोणादिसू० ३४४] इति किन्म । भेदयति **भेदनः** । रक्तं पूरयति **रक्तपूरकः** । रुधिरं स्रावयति **रुधिरस्रावकः** । चक्यते-तृप्यतेऽनेन **चुक्रम्** पुं-क्लीबलिङ्गः, "चकि-रमि-"[हैमोणादिसू० ३९३] इति र, अकारस्य च उकारः । मांसस्य अरि **मांसारिः** । वातिकानां प्रियो **वातिकप्रियः** ॥५८॥

शाखा अम्लाऽस्य **शाखाम्लः** । वेतसश्चासौ अम्लश्च **वेतसाम्लः** । अमति **अम्लः**, "शा-मा-श्या-शक्यम्यर्यविभ्यो ल" [हैमोणादिसू० ४६२] इति ल । **तिन्तिडीक**शब्दः प्राग्वत् । रसोऽम्लोऽस्य **रसाम्लः**, स्वार्थिके के **रसाम्लकः** । आह च —

अम्लोऽम्लवेतसो भीमो रसाम्लो बिम्बवेतसः ।
रक्तस्रावो वेतसाम्लः शतवेधी च वेधकः ॥
[ ] इति ।

एतस्य लोके 'आम्लवेतस' इति प्रसिद्धिः ।

**स शङ्खद्रावको हीनो बालद्रावक उत्तमः ॥५९॥**

'स' अम्लवेतसः शङ्खान् द्रावयति **शङ्खद्रावकः** हीनः । बालं द्रावयति **बालद्रावकः** उत्तमः, कथ्यते इति शेषः ॥५९॥

**तावेव तु शतवेधि-सहस्रवेधिनौ क्रमात् ।**

'तु' पुनरर्थे । 'तावेव' शङ्खद्रावक-बालद्रावकावेव शतं—बहून् विध्यत्यवश्यं **शतवेधी**, सहस्रं विध्यत्यवश्यं **सहस्रवेधी**, उभयत्र "णिन् चाऽऽवश्यका-" [सिद्ध० ५. ४. ३६] इति णिन् । 'क्रमात्' अनुक्रमेण । आह च -

सहस्रवेधी चुक्रोऽम्लवेतसः शतवेध्यपि ।
[अमर० का० २ वर्ग ४ श्लोक १४१ ] इति ।

**कपित्थे वानरावासो गन्धपत्रः कपिप्रियः ॥६०॥**
**पुष्पफलो दधिफलो दधित्थ-ग्राहि-मन्मथाः ।**
**अक्षिस्पन्दो दन्तशठो राजाम्रश्चिरपाक्यपि ॥६१॥**

---

१ "अम्लवेतसवृक्षनिर्यासोऽम्लवेतसः ।" इति अभिधानचिन्तामणिस्वोपज्ञवृत्तौ ॥

२ लोहद्रावक नि० ॥

कपयोऽस्मिन् तिष्ठन्ति **कपित्थः** कपिप्रियत्वात्, कपिरिव तिष्ठतीति वा, पृषोदरादित्वात् साधु, तत्र । वानराणामावासो **वानरावासः** । गन्धयुक्तानि पत्राण्यस्य **गन्धपत्रः** । कपीनां प्रियः **कपिप्रियः** ॥६०॥

पुष्पाण्येव फलमस्य **पुष्पफलः** । दधिवदम्लमधुरं फलमस्य **दधिफलः** । दध्नि तिष्ठति **दधित्थः**, पृषोदरादित्वात् । गृह्णातीति **ग्राही**, स्तम्भकारित्वात्, ग्रहादित्वाद् णिन् । मनो मथ्नाति **मन्मथः**, पृषोदरादित्वात् साधु, मथति चित्तमिति वा "क्रमि-मथिभ्यां चन्मनौ च" [हैमोणादिसू० १२] इत्यः प्रत्ययः मन् इत्यादेशश्चास्य । अक्षि स्पन्दते अस्मादिति **अक्षिस्पन्दः** । दन्तेषु शठः अम्लत्वादिति **दन्तशठः** । राजा चासौ आम्रश्च **राजाम्रः** । चिरेण पाकोऽस्य **चिरपाकी** । आह च

कपित्थोऽथ दधित्थश्च ग्राही फलसुगन्धिकः ।
अक्षिस्पन्दो दधिफलश्चिरपाकी कपिप्रियः ॥

[ ] इति ।

कपित्थनामानि । लोके तु 'कउठी' इति प्रसिद्धः ॥६१॥

**अश्मन्तके सूक्ष्मपत्रः पाषाणान्तक इन्द्रकः ।**
**अम्लपत्रस्ताम्रपुष्पः कुशली यमलच्छदः ॥६२॥**

अश्नुते **अश्मन्तम्** "सीमन्त-हेमन्त-" [हैमोणादिसू० २२२] इत्यन्ते निपात्यते स्वार्थिके के **अश्मन्तकम्**, तत्र । सूक्ष्माणि पत्राण्यस्य **सूक्ष्मपत्रः** । पाषाणमन्तयति **पाषाणान्तकः** । इन्दति इन्द्रः, "भा-वृधि-" [हैमोणादिसू० ३८७] इति रः, स्वार्थिके के **इन्द्रकः** । अम्लानि पत्राण्यस्य **अम्लपत्रः** । ताम्राणि रक्तत्वात् पुष्पाण्यस्य **ताम्रपुष्पः** । कुशलमस्त्यस्य **कुशली** । यमलरूपः छदमस्य **यमलच्छदः** । आह च—

अश्मन्तक इन्द्रकस्तु कुशली चाऽम्लपत्रकः ।
श्लक्ष्णत्वग् मालुकापत्रः स्मृतो यमलपत्रकः ॥

[ ] इति ।

अश्मन्तकनामानि । लोके तु 'आसटा' इति प्रसिद्धिः ॥६२॥

**नारङ्गे नागरङ्गः स्यात् त्वक्सुगन्धो मुखप्रियः ।**
**ऐरावतो योगमारो योषिद्वक्त्राधिवासनः ॥६३॥**

१ श्लक्ष्णपत्र नि० ॥ २ °म्रपत्र कु° नि० ॥ ३ नारङ्गः स्यान्नागरङ्गस्त्वक्सु° नि० ॥ ४ योगी नक्राधि° नि० ॥

नृणाति **नारङ्गः**, "सृ-वृ-नृभ्यो णित्" [हैमोणादिसू० ९९] इत्यङ्ग, न आगच्छति सहजो रङ्गोऽस्य वा, तत्र । नागस्य—सिन्दूरस्येव रङ्ग—रागोऽस्य **नागरङ्गः** । त्वचा सुगन्ध **त्वक्सुगन्धः** । मुखस्य प्रियो **मुखप्रियः** । इरावत्याः—विद्युत इवार्थं रक्तत्वाद **ऐरावतः**, "तस्येदम्" [सिद्ध० ६.३.१६०] इत्यण् । योगेन सारो **योगसारः** । योषिद्वक्त्रमधिवासयति **योषिद्वक्त्राधिवासनः** । आह च —

नारङ्गस्त्वक्सुगन्धः स्यान्नागरङ्गो मुखप्रियः ।
स चैरावतकः प्रोक्तो योषिद्वक्त्राधिवासनः ॥

[　　　　] इति ।

**नारङ्गः मुखवास** इति । नारङ्गनामानि । लोके तु "नारिंगु" इति प्रसिद्धिः ॥६३॥

**खदिरे स्याद् रक्तसारः कण्टकी दन्तधावनः ।**
**गायत्री बालपत्रश्च[1] जिह्मशल्यः क्षितिद्रुमः ॥६४॥**

"खद हिंसायां च" चकारात् स्थैर्ये, खदति **खदिरः**, "मदि-मन्दि-" [हैमोणादिसू० ४१२] इति इर, तत्र । रक्तश्चासौ सारश्च **रक्तसारः** । कण्टकाः सन्त्यस्य **कण्टकी** । दन्तस्य धावनो **दन्तधावनः** । गायते-विप्रान् त्रायतेऽवश्य **गायत्री** । बालवत् पत्राण्यस्य **बालपत्रः**, सूक्ष्मपर्णो ह्यसौ । जिह्मं—वक्रं शल्यमस्य । **जिह्मशल्यः** । क्षितौ द्रुमः **क्षितिद्रुमः** । आह च –

खदिरो रक्तसारश्च गायत्री दन्तधावनः ।
कण्टकी बालपत्रश्च जिह्मशल्यः क्षितिद्रुमः ॥६४॥

[　　　　] इति ।

खदिरनामानि ।

**सिते तु तत्र कदरः कामुकः[2] कुब्जकण्टकः ।**
**सोमवल्को नेमिवृक्षः इरिमसारः[3] पथिद्रुमः ॥६५॥**

'तु' पुनरर्थे । 'सित' धवलः 'तत्र' इति खदिरे कं दृणाति कफघ्नत्वात् **कदरः** । कमनशीलः **कामुकः**, "शृ-कम-" [सिद्ध० ५.२.४०] इत्युकण् । कुब्जाः कण्टकाः अस्य **कुब्जकण्टकः** । सोमस्येव-चन्द्रस्येव वल्कमस्य **सोमवल्कः**, कण्टकित्वात् ।

१ चलपत्रश्च बहुशल्यः क्षितिक्षमः नि० ॥ २ कार्मुकः नि० ॥ ३ श्वेतसारः नि० ॥

"शुक्लत्वग् वा" इति **क्षीरस्वामी** । नेमिश्चासौ वृक्षश्च **नेमिवृक्षः** । श्यामः सारोऽस्य **श्यामसारः** । **पथिद्रुमः** सप्तम्यलुक् । आह च

खदिरः श्वेतसारोऽन्यः सोमवल्कः पथिद्रुमः ।
श्यामसारो नेमिवृक्षः कामुकः कुब्जकण्टकः ॥

। । इति ।

श्वेतखदिरनामानि ॥६५॥

**विट्खदिरे त्वरिमेदो गोधास्कन्धोऽरिमेदकः ।**
**अहिमारोऽरिमः पूत्यरिमेदो मुखशोधनः ॥६६॥**

विट्—विष्ठा तद्गन्धः खदिरः **विट्खदिरः** पूतिखदिराख्यः, तत्र । अरिः—दुस्सहो मेदः—स्रावोऽस्य **अरिमेदः** । गोधेव स्कन्धोऽस्य **गोधास्कन्धः** । अरिमेद एव **अरिमेदकः** स्वार्थिकः कः प्रत्ययः । अहीन् मारयति **अहिमारः** । अरिरिव मथ्नाति गन्धेन नक्रमिति **अरिमः**, "क्वचित्" [सिद्ध० ५ १ १७१] इति डः । पूतिश्चासौ अरिमेदश्च **पूत्यरिमेदः** । मुखस्य शोधनो **मुखशोधनः** । आह च—

अरिमेदोऽरिमेधश्च गोधास्कन्धोऽरिमेदकः ।
अहिमेदोऽहिमारश्चारिमः पूत्यरिमेदकः ॥

। । इति ।

एतस्य लोके 'अरंजु' इति प्रसिद्धिः ॥६६॥

**शाल्मलौ तूलिनी मोचा पिच्छिला चिरजीविना ।**
**कुक्कुटी पूरणी रक्तकुसुमा घुणवल्लभा ॥६७॥**
**कण्टकाढ्या नलफली**

"शाडृङ् श्लाघायाम्" रूफिडादित्वाद् डस्य लत्वं शाल्यते दैर्घ्यात् **शाल्मलिः**; "शल गतौ" ण्यन्तः, शालयति वा, 'मा शाल्मिभ्यामोकुल्मली' [हैमोणादिसू० ७०३] इति मलिः प्रत्ययः पुल्लिङ्गः, तस्याम् । तूलमस्त्यस्या **तूलिनी** । मुञ्चति रसं **मोचा**, लिहादित्वादच् । पिच्छा अस्त्यस्या **पिच्छिला**, "लोम पिच्छादे शेलम्" [सिद्ध० ७ २ २८] इतीलः । चिरं जीवितमस्त्याश्चिर**जीविता**, अत एव **स्थिरायुः स्थिरजीविका** च । "कुकि वृकि आदाने" कुक्यते **कुक्कुटी** "नर्कुट-कुक्कुट-" [हैमो-

१ त्विरिमिदो नि० ॥ २ चिरजाविना नि० ॥

णादिसू० १५५] इत्युटे निपात्यते, कुक्कुटीव वा । पूरयति **पूरणी** । रक्तानि कुसुमान्यस्या **रक्तकुसुमा** । घुणानां -जन्तुविशेषाणां वल्लभा **घुणवल्लभा** ॥६७॥

कण्टकैराढ्या **कण्टकाढ्या** । नलवत् फलान्यस्याः **नलफली** । आह च—

शाल्मली रक्तपुष्पा च कुक्कुटी स्थिरजिविका ।
पिच्छिला तूलिनी मोचा कण्टकाढ्या च पूरणी ॥
मोचनीति च [ ] इति ।

शाल्मलिनामानि । लोके तु 'मींबली' इति प्रसिद्धिः ॥

**पिच्छा तु तस्य वेष्टकः ।**

'तस्य' शाल्मलेः । पिच्छेव **पिच्छा,** आचामवदङ्गुलिषङ्गित्वात्, पीयते वा **पिच्छा**. "पी-पूडो ह्रस्वश्च" [हैमोणादिसू० १२५] इति छक् प्रत्ययो दीर्घस्य ह्रस्वश्च । **वेष्टकः** निर्यासः, कथ्यते इति शेषः । आह च—

शाल्मली वेष्टकः पिच्छा निर्यासः स च शाल्मलः ।
मोचस्रावो मोचरसो मोचनिर्यासकस्तथा ॥
[ ] इति ।

**कुशाल्मलौ[1] शाल्मलिको रोचनः कूटशाल्मलिः** ॥६८॥

कुत्सितः शाल्मलिः **कुशाल्मलिः**, नत्र । कुत्सितः शाल्मलिः **शाल्मलिकः** । "शाल्मलिप्रकारः **शाल्मलिकः**" इत्यपरे । रोचते **रोचनः** । कूटः शाल्मलिः **कूटशाल्मलिः**, इह कूटशब्देन कुत्सितत्वं द्योत्यते, दुर्गादेहि परसैन्यदलनार्थं सा क्षिप्यते । शाल्मलिविशेषोऽयम् ॥६८॥

**शिंशपायां[2] महाश्यामा पिच्छिला पाण्डुरच्छदा ।**
**कृष्णसाराऽङ्गारवर्णा**

शंस्यते **शिंशपा,** "शंसेः श इच्चात" [हैमोणादिसू० ३०६] इत्यनेन "शंसू स्तुतौ च इत्यस्मादप प्रत्ययस्तात्स्य शकारोऽन्तादेशोऽकारस्य च इकारो भवति" तस्याम् । महती चासौ श्यामा च **महाश्यामा** । पिच्छा विद्यतेऽस्याः **पिच्छिला,** "लोमपिच्छादेः शेलम्" [सिद्ध० ७. २. २८] इतीलः । पाण्डुराणि

१ कुत्सिते शाल्मली प्रोक्तो रोचनः नि० ॥ २ शिंशिपा ° नि० ॥

छदान्यस्या **पाण्डुरच्छदा** । कृष्णः सारोऽस्या **कृष्णसारा** । **अङ्गारवर्णा** अङ्गाराकृति । शिंशपानामानि । लोके 'सीसम' इति प्रसिद्धि ।

**अगुरुरन्या तु शिंशपा ॥६९॥**

'तु' पुनरर्थे । 'अन्या' अपरा शिंशपा न गुरु **अगुरुः**, पुक्लीबलिङ्ग, उच्यते इति शेष । **यन्महेश्वरः** —

अगुरु स्याच्छिंशपायां जोङ्गके लघुनि त्रिषु ।

[ ] इति ।

तथा च —

शिंशपा तु महाश्यामा कृष्णसार स्मृतोऽगुरु ।

[ ] इति ॥६९॥

**कुशिंशपा भस्मगर्भा कपिला भस्मपिङ्गला ।**

कुत्सिता शिंशपा **कुशिंशपा** । भस्म गर्भेऽस्या **भस्मगर्भा** । **कपिला** कपिलवर्णत्वात् । "कबृङ् वर्णे" कव्यते कबते वा कपिला, "स्थण्डिल-कपिल" [ हैमोणादिम्० ४८४ ] इति साधु । भस्म चासौ पिङ्गला च **भस्मपिङ्गला** । आह च-

कुशिंशपाऽन्या कपिला भस्मगर्भा वमादनी ।

[ ] इति ।

शिंशपाविशेषोऽयम् ।

**बदर्यां कुवली कोलिः कर्कन्धुः फलिनच्छदा ॥७०॥**
**राष्ट्रवृद्धिकरी कोली सौवीरी वज्रशल्यिका ।**
**घुट्टा घोण्टा गोपघोण्टा व्याघ्र-गृध्रनख्यपि ॥७१॥**

"बद स्थैर्ये" बदति **बदरी**. "ऋच्छि-चटि-" [ हैमोणादिम्० ३९७ ] इत्यरः. तस्याम् कौति **कुवली**. "कोर्वा" [ हैमोणादिम्० ४६९ ] इति किदल . कौ–भूमौ वल्लतीति वा,

१ °रन्या तु शिंशिपा नि० ॥ २ °शिंशिपा नि० ॥ ३ कुवलि नि० ॥ ४ फेनिलच्छदा नि० ॥ ५ वज्रशिल्पिका नि० ॥ ६ घुटा घोण्टा कुहा घोट्टा नि० ॥

त्रिलिङ्गः। कोलति–संस्त्यायति **कोलिः**, "किलि-पिलि-" [हैमोणादिसू० ६०८] इत्यादिशब्दाद् इ' प्रत्ययः; स्त्रीलिङ्गः। कर्कस्य अन्धुरिव **कर्कन्धुः**, कर्कः–लोहितोऽन्धुरिति वा **कर्कन्धुः** पुं-स्त्रीलिङ्गः। फलितं छदमस्याः **फलितच्छदा** ॥७०॥

राष्ट्रस्य वृद्धिकरी **राष्ट्रवृद्धिकरी**। इकारान्तात् कोलिशब्दाद् ङ्यां **कोली**। **सुवीर**देशे भवा **सौवीरी**, "भवे" [सिद्ध० ६.३.१२३] इत्यण्, "अण-ञे-ये-" [सिद्ध०२.४.२०] इति ङीः। वज्र इव शल्यं–कण्टकमस्याः **वज्रशल्यिका**। घुणति–वृत्तत्वाद् भ्रमति **घुट्टा घोण्टा** च, उभावपि "घटा-घाटा-घण्टादयः" [हैमोणादिसू० १४१] इति टे निपात्येते। गोपानां घोण्टा **गोपघोण्टा**। 'व्याघ्र-गृध्रनखी' इति व्याघ्र-गृध्रशब्दाभ्यां परो नखशब्दः सम्बध्यते, तेन व्याघ्रस्येव नखा अस्याः **व्याघ्रनखी**। एवं **गृध्रनखी**, कण्टकानां प्राचुर्यात्। यदुवाच **चन्द्रः** —

> बदरी गोपघण्टा च घुट्टा घोण्टा च कोकिला।
> स्निग्धच्छदा कोलफला राष्ट्रवृद्धिकरी तथा॥
>
> [ ] इति।

इन्दुरप्याह —

> बदरी स्निग्धपत्रा च राष्ट्रवृद्धिकरी तथा।
> फलं तस्याः स्मृतं कोलं कोकिलं फेनिलं कुहम्॥
>
> लोलं सूक्ष्मफलं तत्तु ज्ञेयं कर्कन्धु कण्टुकम्।
> स्वादुः कन्दुः सिञ्चतिका तच्च कोलफलं मतम्॥
>
> [ ] इति।

एतस्या लोके 'बोरि' इति प्रसिद्धिः ॥७१॥

**शम्यां सक्तुफला लक्ष्मीः शिम्बा तुङ्गाऽग्निपादपः।**
**अजप्रिया भस्मकाष्ठा शङ्करः शिवकीलिका ॥७२॥**
**शिवाऽलोमाऽऽयतफला लोम-पामविनाशिनी।**
**मङ्गल्या शुचिपत्रा च**

१ शिवा नि० ॥ २ शिवलोमा° नि० ॥

शाम्यत्यस्यां सस्यं **शमी**; "शमयति दोषान्" इति **क्षीरस्वामी,** शिवात्वात्, **गौरादित्वाद् ङी**, तस्याम् । सक्तव फलान्यस्या **सक्तुफला** । लक्ष्मीरिव **लक्ष्मीः;** लक्ष्यते वा "लक्षेर्मोऽन्तश्च" [हैमोणादिसू० ७१५] इति ई । "शृधूङ् शब्दकुत्सायाम्" शर्धते अनया **शिम्बा.** "डी-नी-बन्धि-शृधि-' [हैमोणादिसू० ३२५] इति डिदिम्ब. । **तुङ्गा** उच्चैस्तरत्वात्[1] । अग्ने पादपोऽ**ग्निपादपः** । अजस्य छागस्य प्रिया **अजप्रिया** । भस्मसमानं काष्ठमस्या **भस्मकाष्ठा** । श करोति **शङ्करः**[2] । शिवस्य कीलिकेव **शिवकीलिका** ॥७२॥

शिवहेतुत्वात् **शिवा;** शंरते इव दोषा अनेनेति वा. "शीङापो ह्रस्वश्च वा" [हैमोणादिसू० ५०६] इति व दीर्घस्य ह्रस्वश्च । न विद्यन्ते लोमान्यस्या **अलोमा,** केशहर्तृफलत्वात् । आयतानि फलान्यस्या **आयतफला** । 'लोम पामविनाशिनी' इति लोम-पामशब्दाभ्यां विनाशिनीति योज्यते, लोम्ना विनाशिनी **लोमविनाशिनी,** पाम्नो विनाशिनी **पामविनाशिनी** । मङ्गले साधुर्**मङ्गल्या**. "तत्र साधौ" [सिद्ध० ७ १ १५] इति यः । शुचीनि पत्राण्यस्या. **शुचिपत्रा** । आह च--

शमी सक्तुफला तुङ्गा केशहर्तृफला शिवा ।
[ ] इति ।

एतस्या लोके 'खेजडी' इति प्रसिद्धि ।

**फले तस्यास्तु सङ्गरम् ॥७३॥**

'तस्याः' शम्या फले सम्यग् गरोऽस्य **सङ्गरम् सङ्गरणं** वा । एतस्य लोके 'सांगरी' इति प्रसिद्धि ॥७३॥

**इङ्गुद्यां तापसतरुर्मार्जारः कटकीलकः[3] ।**
**बिन्दुकस्तिक्तमज्जा च पूतिपुष्प-फलोऽपि च ॥७४॥**

"इगु गतौ" इङ्गति **इङ्गुदी.** "इङ्ग्यर्बिभ्यामुद" [हैमोणादिसू० २४२] इत्युद त्रिलिङ्ग, तस्याम् । तापसानां तरुस्**तापसतरुः**, तापसा हि अरण्येऽस्यास्तैल-मुपयुञ्जते । मार्ष्टि **मार्जारः**, "अग्यङ्गि-" [हैमोणादिसू० ४०५] इत्यार । कटमत्यर्थं कीलयति **कटकीलकः** । बिन्दुप्रतिकृतिर्**बिन्दुकः**, "तस्य तुल्ये कः सञ्ज्ञा-प्रतिकृत्योः" [सिद्ध० ७.१.१०८] इति क । तिक्ता मज्जाऽस्याः **तिक्तमज्जा** ।

१ उच्चैस्त्वात् पु २ ॥ २ साङ्गर नि० ॥ ३ कण्टकीटक नि० ॥

'पूतिपुष्प-फलः' इति पूतिशब्दात् पुष्प-फलशब्दौ योज्येते, पूतीनि पुष्पाणि फलानि चास्य **पूतिपुष्पः पूतिफलः** । आह च —

इङ्गुदो भल्लकी वृक्षः कण्टकस्तापसद्रुमः ।

[ ] इति ।

एतस्य लोके 'हिंगोटु' इति प्रसिद्धिः ॥७४॥

**गुग्गुलौ तु पुरो दुर्गो महिषाख्यः पलङ्कषः ।**
**जटायुः कालनिर्यासो वासवोलूकनामकः ॥७५॥**
**नक्तञ्चरः शिवधूपः कुम्भोलूखलकं शिवः ।**

"गुङ् शब्दे" गूयते **गुग्गुलुः** 'गूहलु-गुग्गुलु-" [हैमोणादिसू० ८२४] इति आलुप्रत्ययान्तो निपात्यते, पुंलिङ्ग, तत्र। "पुरन् अग्रे" पुरति **पुरः**, "नाम्युपान्त्य-" [सिद्ध० ५.१.५४] इति कः । 'पिपर्त्ति पुरः" इति **क्षीरस्वामी,** "ऋगुपधा-" [ ] इति कः, "उदोष्ठ्यपूर्वस्य" [पाणिनि० ७.१.१०२] इति उद् । दुःखेन गम्यते **दुर्गः**, "सुग-दुर्गमाधारे" [सिद्ध०५.१.१३२] इति साधुः, उग्रगन्धत्वात् । महिषस्य आख्या अस्य **महिषाख्यः** । पलं-मांसं कषति **पलङ्कषः**, पृषोदरादित्वान्मोऽन्तः । जटामेति **जटायुः**, "कृ-वा-पा-जि-" [हैमोणादिसू० १] इत्युण् । कालो निर्यासोऽस्य **कालनिर्यासः** । वासवोलूकनामक' इति वासवोलूकशब्दाभ्यां परो नामशब्दः सम्बध्यते, वासवस्य नामास्य **वासवनामकः**, उलूकस्य नामाऽस्य **उलूकनामकः** ॥७५॥

अत एव नक्तं चरति **नक्तञ्चरः**। शिवस्य धूपः **शिवधूपः** । "कुम्भोलूखलाकाराद् वृक्षगुल्माद् निर्यातीति **कुम्भोलूखलकम्**" इति **क्षीरस्वामी,** क्लीबलिङ्गोऽयम् ।

**यदमरः**—

कुम्भोलूखलकं क्लीबे कौशिको गुग्गुलुः पुरः ।

[का०२ वर्ग ४ श्लोक ३४] इति ।

शेते **शिवः**, "शीङापो ह्रस्वश्च वा" [हैमोणादिसू० ५०६] इति वः । आह च—

गुग्गुलुः कालनिर्यासो जटायुः कौशिकः पुरः ।
नक्तञ्चरः शिवो दुर्गो महिषाख्यः पलङ्कषः ॥

[ ] इति ।

---

१ °वाक्ष प° नि० ॥ २ °लक शिव नि० ॥

एतस्य लोके 'गूगलु' इति प्रसिद्धिः ।

**पारिभद्रे निम्बतरुर्मन्दारः पारिजातकः ॥७६॥**

पारि-प्राप्तपारं भद्रमस्य **पारिभद्रः**, तत्र । **निम्बतरुः** निम्बोत्थः । मन्द्यते-स्तूयते देवैर्**मन्दारः**, "अग्यङ्गि-" [हैमोणादिसू० ४०५] इत्यारः, [ मन्दमियर्तीति वा] । पारि-निष्ठां प्राप्तं जातमस्य **पारिजातकः** । यदाहु —

पारिभद्रे निम्बतरुर्मन्दारः पारिजातकः ।

[अमर० का०२ वर्ग ४ श्लो० २६] इति ।

तथा च—

निम्बोत्थः सर्वतोभद्रः प्रभद्रः पारिभद्रकः ।

[ ] इति ।

पारिभद्रनामानि ॥७६॥

**करीरे स्यात् तीक्ष्णसारः शाकपुष्पो मृदुफलः ।**
**मरुजन्मा गूढपत्रो ग्रन्थिल-क्रकरावपि ॥७७॥**

किरति-क्षिपति वायुं **करीरः**, "कॄ-गॄ-पॄ-पूग्-मञ्जि-" [हैमोणादिसू० ४२८] इति ईरः, करिणं ईर्यति कण्टकैर्वा, [पुं-क्लीबलिङ्गः], तत्र । तीक्ष्णः सारोऽस्य **तीक्ष्णसारः** । शाकं पुष्पाणामस्य **शाकपुष्पः** । मृदूनि फलानि अस्य **मृदूफलः**, पृषोदरादित्वाद् दीर्घः । **मरौ** जन्माऽस्य **मरुजन्मा** । गूढानि-गुप्तानि पत्राण्यस्य **गूढपत्रः** । ग्रन्थयः सन्त्यस्य **ग्रन्थिलः**, सिध्मादित्वाल्लः, ग्रन्थीन् लाति वा । 'क्र' इति करोति **क्रकरः**, तीक्ष्णत्वात्, क्रम्यते वा, "जठर-क्रकर-" [हैमोणादिसू० ४०३] इत्यरे निपात्यते । आह च—

करीरं गूढपत्रं च शाकपुष्पं मृदूफलम् ।
ग्रन्थिलं तीक्ष्णसारं च क्रकरं तीक्ष्णकण्टकम् ॥

[ ] इति ।

एतस्य लोके 'कइर' इति प्रसिद्धिः ॥७७॥

**विकङ्कते स्रुवावृक्षो ग्रन्थिलः स्वादुकण्टकः ।**
**किङ्कणिः[3] काकपादश्च व्याघ्रपादः गोपकण्टकः ॥७८॥**

---

१ °न्मा तथा पत्रो नि० ॥ २ 'कयर' पु २ ॥ ३ केकणि नि० ॥ ४ °पादोपक° नि० ॥

विकङ्कते–प्रसरति **विकङ्कतः** ककिर्गत्यर्थ, 'सीमन्त-हेमन्त-" [हैमोणादिसू० २२२] इत्यन्ते निपात्यते, तत्र । "स्रुवा–स्रुक् सा हि वैकङ्कती आम्नाता, तस्या वृक्षः **स्रुवावृक्षः**" इति **क्षीरस्वामी** । ग्रन्थय सन्त्यस्य **ग्रन्थिलः**, सिध्मादित्वाल्ल । ग्रन्थीन् लाति वा, "क्वचित्" [सिद्ध० ५. १. १७१] इति डः । स्वादवः-मृष्टाः कण्टका अस्य **स्वादुकण्टकः** । कङ्कते–प्रसरति **किङ्कणिः** "कङ्केरिच्चास्य वा" [हैमोणादिसू० ६३९] इति अणि' प्रत्यय, धातोरकारस्य च विकल्पेन इकारः । काकपादाविव पादोऽस्य **काकपादः** । व्याघ्रपादाविव पादोऽस्य **व्याघ्रपात्**, 'उष्ट्र-मुखादय'" [सिद्ध० ३.१.२३] इति समास । गोपानां कण्टको **गोपकण्टकः** । आह च–

विकङ्कतः पृथुफलो ग्रन्थिलः स्वादुकण्टक' ।
गोपकण्ट' काकपादो व्याघ्रपादोऽथ किङ्कणी ॥

[ ] इति ।

विकङ्कतनामानि । लोके 'कैंक' इति प्रसिद्धि. ॥७८॥

**बिल्वे महाफलः श्र्याह्वः शलाटुः पूतिमारुतः ।**
**महाकच्छः [च] शाण्डिल्यः शैलूषो नीलमल्लिका ॥७९॥**
**श्रीवासः श्रीफलो हृद्यगन्धो मालूर-कर्कटौ ।**

बिलति–भिनत्ति **बिल्वः**, "निघृषी-" [हैमोणादिसू० ५११] इति किद व', तत्र । महान्ति फलान्यस्य **महाफलः** । श्रिया आह्वा अस्य **श्र्याह्वः** । 'शल गतौ" शलति **शलाटुः**, "शलेराटु" [हैमोणादिसू० ७६३] इत्याटु प्रत्यय' । पूतिर्मारुतोऽस्य **पूतिमारुतः** । महाश्चासौ कच्छश्च **महाकच्छः** । शण्डिलस्यापत्यं **शाण्डिल्यः** गर्गादित्वाद यञ्, ' शाण्डिल्यपौत्र' शिल्पज " इत्यागमात् ; शाण्डिल्य इव वा, ब्राह्मणमान्यत्वात् । शैलूष इव **शैलूषः**, नानारूपपरिवर्तनाद्वा । नीलमल्लिकेव **नीलमल्लिका** ॥ ७९ ॥

श्रिया वास **श्रीवासः** । श्रीप्रदानि फलान्यस्य **श्रीफलः** । हृद्यो गन्धोऽस्य **हृद्यगन्धः** । मलते–दधाति मलान् **मालूरः**, ' महि-कणि-चण्यणि-" [ हैमोणादिसू०

१ 'काकइ' इति पु २ ॥ २ महाकपित्थ शाण्डिल्य नि० ॥

४२८ ] इति णिदूरः। कर्कि सौत्रो गत्यर्थः, कर्कति **कर्कटः,** "दिव्यवि" [ हैमोणादिसू० १४२ ] इत्यट । आह च -

बिल्व शलाटु शाण्डिल्यो हृद्यगन्धः सदाफलः ।
शैलूष श्रीफल श्रयाह्व कर्कट पूतिमारुत ॥
लक्ष्मीफलो गन्धगर्भ सत्यकर्मा वगरुहा ।
वातसारो हर्षीकश्च कण्टकाढ्य सितानन ॥
[ ] इति ।

बिल्वनामानि । लोके 'बीली' इति प्रसिद्धि ।

**हरीतक्यां जया पथ्या हैमवत्यभयाऽमृता ॥ ८० ॥**
**कायस्था पूतना चेतक्यव्यथा श्रेयसी शिवा ।**

हरति रोगान् **हरीतकी,** "हृ-रुहि पिण्डिभ्य ईतक" [ हैमोणादिसू० ७९ ] इतीतक, स्त्रीलिङ्ग ।

हरस्य भु(?भ)वने जाता हरिता च स्वभावत ।
सर्वरोगाश्च हरते तेनाऽऽख्याता हरीतकी ॥
[ ] इति,

तस्याम् । जयति रोगान् **जया** । पथि साधु **पथ्या,** हितेत्यर्थ "तत्र साधौ" [ सिद्ध० ७ १ १५ ] इति य । हिमवत इय **हैमवती,** "तस्येदम्" [ सिद्ध० ६ ३ १६० ] इत्यण् । नास्ति भयमस्या **अभया** । यदाह- --

अम्लभावाज्जयेद वातं पित्त मधुर-तिक्तत ।
कफं रूक्ष-कषायत्वात् त्रिदोषघ्नी ततोऽभया ॥
[ ] इति ।

अत एव नास्ति मृतमस्या अस्या वा **अमृता** ॥ ८० ॥

काये निष्ठति--निष्फला न भवति **कायस्था,** "स्था-पा-स्ना-त्र क." [ सिद्ध० ५ १ १४२ ] इति क । **वयःस्थेत्येके** । पूतं करोति **पूतना,** विरेचनीत्वात । **पूतनेत्येके** । "चितिण् संवदने" चेतयते स्रोत शुद्धे **चेतकी,** "कीचक-पेचक-" [ हैमोणादिसू० ३३ ] इत्यके साधु । न व्यथयति **अव्यथा** । अतिशयेन प्रशस्या **श्रेयसी,** "गुणाङ्गाद्वेष्ठेयसू" [ सिद्ध० ७ ३ ९ ] इति ईयसौ "प्रशस्यस्य श्र" [ सिद्ध० ७ ४ ३४ ] इति श्रादेश । शेरते रोगा अनया **शिवा,** "शीङापो ह्रस्वश्च वा" [ हैमोणादिसू० ५०६ ] इति व दीर्घस्य ह्रस्वश्च । आह च —

हरीतक्यभया पथ्या प्रपथ्या पूतनाऽमृता ।
जयाऽव्यथा हैमवती कायस्था चेतकीति च ॥

[　　　　] इति ।

एतस्या लोके 'हरडइ' इति प्रसिद्धि ।

**बिभीतके भूतवासो वासन्तोऽक्षो बहेटकः॥८१॥**
**संवर्तकः कर्षफलः कल्को हार्यः कलिद्रुमः ।**
**कर्षो दैन्यो मधुबीजो धर्मद्वेषी बिभेदकः ॥८२॥**

बिभेति अस्माद् **बिभीतकः**. "भियो द्वे च" [हैमोणादिसू० ७८] इति तकक्, त्रिलिङ्ग तत्र । भूताना वासो **भूतवासः** । वसन्ते भवो **वासन्तः**, भर्तु-सन्ध्यादेरण्" [सिद्ध० ६.३.८९] इत्यण् । अक्ष्णोति-व्याप्नोति **अक्षः**, अच् , अश्नुते वा "मा-वा-वयमि- " [हैमोणादिसू० ५६४] इति स । वहीं प्रापणे" वहते **बहेटः**, 'कपट-कीकटादय" [हैमोणादिसू० १४४] इत्यटे निपात्यते, स्वार्थिके के **बहेटकः** ॥८१॥

संवृत्यते अनेन **संवर्त्तः**, स्वार्थिके के **संवर्तकः** । कर्ष इव फलान्यस्य **कर्षफलः** । अक्षसामान्याद **अक्षकर्षो**ऽपि बिभीतके पलचतुर्थभागे च वर्तते । "कलि शब्द-संख्यानयो" कल्यते **कल्कः**, "भीण्-शलि-" [हैमोणादिसू० २१] इति क । ह्रियते **हार्यः** । कलेराश्रयो द्रुम **कलिद्रुमः** । कर्षते कृषति वा **कर्षः**, अक्षसाम्याद्वा । दैन्यहेतुत्वाद् **दैन्यः** । मधु-मृष्ट बीजमस्य **मधुबीजः** । धर्मस्य द्वेषी **धर्मद्वेषी** । बिभेति अस्माद् **बिभेदकः**, 'कीचक-पेचक-" [हैमोणादिसू० ३३] इत्यके निपात्यते । आह च—

बिभीतक कर्षफलो वासन्तोऽक्ष कलिद्रुम ।
संवर्तको भूतवास कर्षो हार्यो बिभेदक ॥

[　　　　] इति ।

इन्दुश्च—

अहार्यं बहुवीर्यं च तुमूलं च बिभेदकम् ।

[　　　　] इति ।

एतस्य लोके बहेडा' इति प्रसिद्धिः ॥८२॥

१ कलिवास कलि° सि० ॥ २ कर्षो दोत्यो मधु° सि० ॥

**आमलक्यां शिवा धात्री वयःस्था षड्रसाऽमृता ।**
**पर्वकीटा तिष्यफला माकन्दी श्रीफला च सा ॥८३॥**

आ—समन्ताद् मलते—धारयति गुणान् **आमलकी**, "कीचक-पेचक-" [हैमोणादिसू० ३३] इत्यके निपात्यते, त्रिलिङ्गोऽयम्, तस्याम् । शेरते गुणा अस्या **शिवा**, "शीङापो ह्रस्वश्च वा" [हैमोणादिसू० ५०६] इति व. । दधाति गुणान् **धात्री**, तृजन्ताद् ङीः । **वयःस्था** रसायनत्वात् । षड् रसा सन्ति अत्र **षड्रसा** । नास्ति मृतमस्या **अमृता** । पर्वणि कीटा अस्या **पर्वकीटा** । तिष्यं—मङ्गल्यं फलमस्त्यस्या **तिष्यफला**. "नित्यमामलके लक्ष्मी" इति । माकन्द्या फलं **माकन्दी**. अभेदोपचारात् . "दोरप्राणिनः" [सिद्ध० ६.२.४९] इति मयट् "फले" [सिद्ध० ६.२.५८] इति तस्य लुप् . हरीतक्यादित्वात् स्त्रीत्वम्, गौरादित्वाद ङी । श्रीप्रदं फलमस्या **श्रीफला** । आह च—

वयःस्थाऽऽमलकं तिष्यं जातीरसफलं शिवम् ।
धात्रीफलं श्रीफलं च तथामृतफलं स्मृतम ॥

[ ] इति ।

एतस्य लोके 'आमला' इति प्रसिद्धि ॥८३॥

**अरणावग्निमन्थः स्यात् तर्कारी वैजयन्तिका ।**
**जया जयन्ती श्रीपर्णी कणिका गणकारिका ॥८४॥**
**तेजोमन्थो हविर्मन्थो नादेयी वह्निशोधनः ।**

इयर्ति वह्निरस्मिन् **अरणिः**, "ऋ-हृ-सृ-" [हैमोणादिसू० ६३८] इत्यणि, पुं-स्त्रीलिङ्ग . तत्र । अग्निं मध्नाति दीपनत्वाद् **अग्निमन्थः** । तर्कमियर्ति **तर्कारी**, केतुत्वात् । विजयते विजयन्त, तृ-जि-भृ-वदि-" [हैमोणादिसू० २२१] इति अन्त, तस्येयं वैजयन्ती, "तस्येदम्" [सिद्ध० ६.३.१६०] इत्यण्, "अणञेये-" [सिद्ध० २.४.२०] इति ङी, स्वार्थिके के **वैजयन्तिका** । जयतीति **जया**, अच्, "तृ-जि-भृ-वदि-" [हैमोणादिसू० २२१] इत्यन्ते **जयन्ती**, टित्वाद ङी । श्री पर्णे यस्या सा **श्रीपर्णी**, क्लीबेऽयमित्यन्ये । **यदमरः**--

श्रीपर्णमग्निमन्थः स्यात् । [का० २ वर्ग ४ श्लो० ६६] इति ।

कणा सन्त्यस्या **कणिका**, "अतोऽनेकस्वरात्" [सिद्ध० ७.२.६] इतीकः ।

१ पर्वकाख्या तिष्य' नि० ॥ २ °न्ती नादेयी श्रीपर्णी गणिका° नि० ॥

गणकं—समूहमियर्ति गणकारी, स्वार्थिके के **गणकारिका**; "गणं- तर्कं करोति वा" **इत्यन्ये** ॥८४॥

तेजो मथ्नाति **तेजोमन्थः** । हविर्मथ्नाति **हविर्मन्थः** । नद्यां भवा **नादेयी**, 'नद्यादेरेयण" [सिद्ध० ६.३.२] इत्येयण । वह्निं शोधयति **वह्निशोधनः**, दीपनत्वात् ।

लिङ्गसाङ्कर्याद् 'जया' इत्यर्द्धेन **जयन्तं** श्रीपर्णम्' इति चार्द्धेन **जयपर्णमाहु**', तन्न, वनौषधिवर्गे तस्याऽनादृतत्वात् । आह च **इन्दुः**–

अग्निमन्थोऽग्निमथनस्तर्कार्यरणिको जय' ।
अरणि कणिका सैव तपनो वैजयन्तिक ॥
[ ] इति ।

**चन्द्रनन्दनस्त्वाह**—

अग्निमन्थोऽग्निमथनस्तर्कारी वैजयन्तिका ।
वह्निमन्थोऽरणि केतुर्जय. पावकमन्थन ॥
तर्कार्या वैजयन्ती च वह्निनिर्मथनी जया ।
अरणिका जयन्ती च विजया च जयावहा ॥
[ ] इति ।

एतस्या लोके 'अरणी' इति प्रसिद्धि' ।

**अरलौ टुण्टुको दीर्घवृन्तो नटः कुटन्नटः ॥८५॥**
**स्योनाकः शोनको जम्बूः शुकनाशः कटम्भरः ।**
**मयूरजङ्घः कट्वङ्गः सल्लकः प्रियजीवकः ॥८६॥**
**मण्डूकपर्णः पत्त्रोर्णो गोपवृक्षो मुनिद्रुमः ।**

'ऋंक् गतौ" इयर्ति **अरलुः**, 'गूहलु-गुग्गुलु-" [हैमोणादिसू०८२४] इति आलु-प्रत्यये निपात्यते, तत्र । टुण्टुभि —शिम्बिभि कायति **टुण्टुकः**, "कचित्" [सिद्ध० ५. १. १७१.] इति ड । दीर्घं वृन्तमस्य **दीर्घवृन्तः** । नटति—नृत्यति वातेन **नटः**, अच् । कुटन्—वक्रीभवन् नटति—स्पन्दते **कुटन्नटः** ॥८५॥

स्योनं—सुखम् अकति **स्योनाकः** । "शुं गतौ" शवति **शोनकः**, "कीचक-पेचक-" [हैमोणादिसू० ३३] इत्यकान्तो निपात्यते । **गौडाः** "**शोणकम्**" आहुः,

१ केतुर्जय पु २ ॥ २ अरलौ दुन्दको दीर्घवृन्तश्चाथ कुट॰ नि० ॥ ३ स्योनाक: शोषणो जम्बु शुकनासः नि० ॥

"शोणृ वर्णे" इत्यस्माद् णक । जायतेऽस्या **जम्बूः** 'कमि-जनिभ्यां बूः" [हैमोणादिसू० ८४७] इति **जम्बूः**, स्त्रीलिङ्ग । शुकस्य नाशोऽस्मात् **शुकनाशः**। कटं बिभर्ति **कटम्भरः**, "भृ-वृ-जि-" [सिद्ध० ५ १ ११२] इत्यादिना खः । मयूरस्य जङ्घेव जङ्घाऽस्य **मयूरजङ्घः** । कट्वन्यङ्गान्यस्य तैक्ष्ण्यात **कट्वङ्गः** । सल्लि सौत्रो गत्यर्थः, सल्लति **सल्लकः**, "दृ-कृ-नृ-" [हैमोणादिसू० २७] इत्यकः । प्रियो जीवोऽस्य प्रियजीवः, स्वार्थिके के **प्रियजीवकः** ॥८६॥

मण्डूक इव पर्णान्यस्य **मण्डूकपर्णः**। पत्रेषु ऊर्णाऽस्य **पत्रोर्णः** । गोपानां वृक्षो **गोपवृक्षः** । मुनीना द्रुमः **मुनिद्रुमः** । आह च -

श्योनाकः शुकनाशश्च कट्वङ्गोऽथ कटम्भरः ।
मयूरजङ्घोऽरलुकः प्रियजीवः कुटन्नटः ॥
स प्रोक्तः पृथुशिम्बिश्च टुण्टुको दीर्घवृन्तकः ।
भाल्लुकः सल्लकः फल्गुवृन्तको जम्बुको नटः ॥
[ ] इति।

एतस्य लोके 'अरलु' इति प्रसिद्धिः । एतद्भेदस्य 'टींट्र' इति प्रसिद्धिः ।

**शिग्रौ शोभाञ्जनस्तीक्ष्णगर्भो मूलकपल्लवः ॥८७॥**
**विद्रध्यरातिकोऽक्षीवो मुखभञ्जः सुभञ्जनः ।**
**दंशोऽक्षीबः सुभङ्गी च मोचको मधुगृञ्जनः ॥८८॥**

"शिगट् निशातने" शिनोति तैक्ष्ण्यात **शिग्रुः**, 'शिग्रु-गेरु-नमेर्वादयः" [हैमोणादिसू० ८११] इति रुप्रत्यये निपात्यते, पुं-क्लीबलिङ्ग , तत्र। शोभामनक्ति **शोभाञ्जनः**; सुष्ठु भनक्ति मुखमिति वा, पृषोदरादित्वात । तीक्ष्णो गर्भोऽस्य **तीक्ष्णगर्भः**। मूलक इव पल्लवा अस्य **मूलकपल्लवः** ॥८७॥

विद्रधेररातिर्विद्रध्यराति स्वार्थिके के **विद्रध्यरातिकः** । "ष्टिवू क्षिवू निरसने" न क्षीवन्ते अनेन अदृष्यत्वाद **अक्षीवः** । मुखं भनक्ति **मुखभञ्जनः** । शोभनं भञ्जनमस्य **सुभञ्जनः** । दशति **दंशः**, अच । "क्षीबृङ् मदे" न क्षीबते **अक्षीबः** । शोभनो भङ्गोऽस्त्यस्य **सुभङ्गी** । मुञ्चति गन्धं **मोचकः**, णक प्रत्यय । मधुप्रधानो गृञ्जनो **मधुगृञ्जनः** । आहुश्च -

१ °गन्धो मृ° नि० ॥ २ विद्रध्यराति काक्षीवा मुख° नि० ॥ ३ दशोऽक्षीव सुरङ्गी च नि० ॥

शिग्रु स्याच्छ्वेतमरिचं मुखभञ्जोऽतितीक्ष्णकः ।
शोभाञ्जनस्तीक्ष्णगन्ध सुतीक्ष्णो घ(घ)नपल्लवः ॥

शिग्रुर्हरितशाकोऽन्यो मतो मूलकपल्लव ।
घनच्छदस्तीक्ष्णग[न्ध] सुभङ्गी दशनक्षम' ॥
तृतीयो मधुशिग्रु' स्यात [ ] इति ।

शिग्रुनामानि । लोके 'शिग्रू' इति प्रसिद्धि ॥८८॥

**श्वेतेऽत्र श्वेतमरिचः**

'अत्र' श्वेते शिग्रौ श्वेतं मरिचमस्य **श्वेतमरिचः** ।

**रक्ते तु मधुशिग्रुकः ।**

'तु' पुनरर्थे । रक्ते शिग्रौ मधुप्रधान शिग्रु मधुशिग्रु, स्वार्थिके के **मधुशिग्रुकः** ।

**तिनिशे चित्रकृद् नेमिर्वञ्जुलो रथसाधकः ॥८९॥**

**दीर्घवृक्षश्चक्रकारो रथनामाऽतिमुक्तकः ।**
**अश्मगर्भः सर्वसारः क्रमसन्धारणोऽपि च ॥९०॥**

तनोति रथादीन **तिनिशः**, "तिनिश-"[हैमोणादिसू० ५३७] इति इशे निपात्यते. "अतिक्रान्तो निशा. **तिनिशः**, चिरकालिकत्वात्" इति **क्षीरस्वामी**, तत्र । चित्रं करोति **चित्रकृत्**, लघुत्वेऽपि दार्ढ्यदैर्घ्याभ्यामाश्चर्यकारी । नीयते **नेमिः**, "नी-सा-वृ-यु-शॄ-बलि-दलिभ्यो मि" [हैमोणादिसू० ६८७] इति मि' । "रथचक्रान्ते नमति **नेमिः**" इति **क्षीरस्वामी** । वन्यते--अर्थ्यते **वञ्जुलः**, "कुमुल-तुमुल-निचुल-"[हैमोणादिसू० ४८७] इत्युले निपात्यते । रथं साधयति **रथसाधकः** ॥८९॥

दीर्घश्चासौ वृक्षश्च **दीर्घवृक्षः** । चक्रं करोति **चक्रकारः**, कर्मण्यण् । रथस्य नामाऽस्य **रथनामा** । अतिमुच्यते स्म अतिमुक्त', विस्तीर्णत्वात, [ स्वार्थिके के **अतिमुक्तकः** ] । अश्म गर्भेऽस्य **अश्मगर्भः** । सर्वश्चासौ सारश्च **सर्वसारः** । क्रमं सन्धारयति **क्रमसन्धारणः** । आह च

१ "अत्र' शिग्रौ श्वेते श्वेतानि मरिचतुल्यानि फलान्यस्य श्वेतमरिच" इति स्वोपज्ञाभिधानचिन्तामणिवृत्तौ ॥ २ तिनिशे रथकृन्नेमि° नि० ॥ ३ °श्च कवरो नि० ॥

तिनिशश्चित्रकृद् नेमि· स्यन्दनो रथसाधकः ।
तथाऽरण्यो रथद्रुश्चाप्यतिमुक्त
[ ] इति ।

तिनिशनामानि ॥९०॥

**पलाशे किंशुकः पर्णः खरपर्णस्त्रिपत्रकः ।**
**त्रिवृन्तास्यो रक्तपुष्पः क्षीरश्रेष्ठः समिद्वरः ॥९१॥**
**बीजस्नेहो वातपोषो यज्ञियो ब्रह्मपादपः ।**

प्रशस्तानि पलाशानि सन्यस्य **पलाशः**, अभ्रादित्वाद , पलं-मांसमश्नुते रक्त-पुष्पत्वादिति वा, तत्र । किञ्चित् शुक -नील **किंशुकः** । पर्णानि सन्यस्य **पर्णः**, अभ्रादित्वाद । खराणि पर्णान्यस्य **खरपर्णः** । [ त्रीणि पत्राण्यस्य **त्रिपत्रकः** ] । त्रीणि वृन्तानि आस्यमिवास्येति **त्रिवृन्तास्यः** । रक्तानि पुष्पाण्यस्य **रक्तपुष्पः** । क्षीरेण श्रेष्ठः **क्षीरश्रेष्ठः** । समिधं वरति **समिद्वरः** ॥९१॥

बीजेषु स्नेहोऽस्य **बीजस्नेहः** । वात पोषयति **वातपोषः**, अच् । यज्ञमर्हति **यज्ञियः**, "यज्ञादिय" [ सिद्ध० ६ ४ १७९ ] इति इय । ब्रह्मण पादपो **ब्रह्मपादपः** । आह च –

किंशुको वीतशोकश्च रक्तपुष्पोऽथ याज्ञिक ।
क्षीरश्रेष्ठ पलाशश्च बीजस्नेह समिद्वर ॥
त्रिवृन्तास्यो ब्रह्मवृक्ष खरपर्णस्त्रिपत्रक ।
[ ] इति

**चन्द्रो**ऽपि—

पलाश किंशुक [ पर्ण ] यज्ञियो रक्तपुष्पक ।
क्षीरश्रेष्ठो वातपाषो ब्रह्मवृक्ष समिद्वर ॥
[ ] इति ।

पलाशनामानि ।

**धवे भारोद्वहो गौरः शकटाख्यो धुरन्धरः ॥९२॥**
**कुलावो नन्दिनश्चापि. सितः कृष्णश्च स द्विधा ।**

१ त्रिवृन्ताख्यो रक्तपुष्पो बीजस्नेह, समिद्वर ॥९१॥ क्षीरश्रेष्ठो वातपोथो यज्ञिको ब्रह्म° नि० ॥
२ सकटाक्षो धुर° नि० ॥

धुनोति **धवः**, अच्, तत्र । भारमुद्वहति **भारोद्वहः** । **गौरः** श्वेतवर्णत्वात्, गूयते वा, "खुर-क्षुर-" [हैमोणादिसू० ३९६] इति रे निपात्यते । शकटस्य आख्याऽस्य **शकटाख्यः** । अत एव धुरं धारयति **धुरन्धरः**, "धारेर्धर्च" [सिद्ध० ५. १. ११३] इति ख प्रत्ययो धर् इत्ययमादेशश्च ॥९२॥

कुलमवति **कुलावः** । नन्दो जातोऽस्येति **नन्दितः**, तारकादित्वादितः । श्वेत कालश्चायं 'द्विधा' द्विप्रकारः । आह च—

धवो नन्दितरुगौरः शकटाख्यो धुरन्धरः ।
[ ] इति ।

एतस्य लोके 'धव' इति प्रसिद्धिः ।

**श्रीपर्ण्यां काश्मरी कृष्णवृन्तिका मधुपर्णिका ॥९३॥**
**गंभारी सर्वतोभद्रा कंजला भद्रपर्णिका ।**
**विहारी कुमुदा हीरा महाकुम्भी च कश्मरी ॥९४॥**
**नित्यभद्रा महाभद्रा काश्मर्यो मधुमत्यपि ।**

श्रीयुक्तानि पर्णान्यस्याः **श्रीपर्णी**, "पाक कर्ण-पर्ण वालान्तात्" [सिद्ध०२. ४.५५] इति ङी, तस्याम् । "काशृङ् दीप्तौ" तालव्यान्तः, काशते **काश्मरी**, कृश्यति-तनूकरोति वा, "जठर-" [हैमोणादिसू० ४०३] इत्यरे निपात्यते । कृष्णं वृन्तमस्याः **कृष्णवृन्तिका** । मधूनि-मृष्टानि पर्णान्यस्याः मधुपर्णी, "पाक कर्ण-पर्ण-वालान्तात" [सिद्ध० २.४.५५] इति ङी, स्वार्थिके के **मधुपर्णिका** ॥९३॥

"गमेः-चरत्वाद् भागेऽस्य **गम्भारी**" इति **क्षीरस्वामी** । सर्वतो भद्राण्यस्याः **सर्वतोभद्रा** । **कज्जला** श्यामवृन्तत्वात् । भद्राणि पर्णान्यस्याः भद्रपर्णी, स्वार्थिके के **भद्रपर्णिका** । विहरत्यवश्यं **विहारी**, "णिन् चावश्यका-" [सिद्ध० ५.४.३६] इति णिन् । कौ पृथिव्यां मोदते **कुमुदा**, मूलविभुजादित्वात् कः । हिनोति **हीरा**, "खुर-क्षुर-" [हैमोणादिसू० ३९६] इति र निपात्यते । महाकुम्भीव **महाकुम्भी** । कशति-दीप्यते **कश्मरी**, "जठर-" [हैमोणादिसू० ४०३] इत्यरे निपात्यते ॥९४॥

---

१ "क-जल बिभर्ति 'डुभृञ् धारण-पोषणयोः' 'कर्मण्यण्' [पा०३ २ १] पृषोदरादित्वाद् गत्वम् । कम्भारी इत्यपि ।" इत्यमरकोशव्याख्यासुधाटीकायाम् ॥ २ कटुफला नि० ॥ ३ विहीरा कुमुदा हारी महा° नि० ॥ ४ °दा वीरा पु २ । पु २ आदर्शे एतत्पाठानुसारिण्येव व्याख्या वर्तते । दृश्यतां टिप्पणी ६ ॥ ५ मधुपर्ण्यपि नि० ॥ ६ "विशेषेण ईरयति वीरयते वा वीरा अजति-क्षिपति वा "ऋज्यजि" [हैमोणादिसू० ३८८] इति किति रे 'वी'भावः ।" इति पु २ आदर्शे व्याख्या ॥

नित्यं भद्रमस्या **नित्यभद्रा** । महती चासौ भद्रा च **महाभद्रा** । काशते—दीप्यते **काश्मर्यः**; कृश्यति--तनूकरोति वा, "शिक्या-ऽऽस्या-ऽऽढ्य-" [हैमोणादिसू० ३६४] इति ये निपात्यते । मधु विद्यते पर्णेष्वस्या **मधुमती** । आह च—

काश्मर्यं काश्मरी हीरा कश्मरी मधुपर्ण्यपि ।
श्रीपर्णी सर्वतोभद्रा गम्भारी कृष्णवृन्तिका ॥
[ ] इति ।

श्रीपर्णीनामानि । लोके 'सिवनी' इति प्रसिद्धि ।

**सप्तच्छदे शुक्तिपर्णो [1]गुच्छपुष्पः सुपर्णकः ॥९५॥**
**स्थूलपर्णो दीर्घवृक्षः शारदो विषमच्छदः ।**
**मदगन्धिर्विशालत्वग् गजद्विट् शाल्मलीदलः ॥९६॥**
**शिरोरुग् देवविटपी सुमनो ग्रहनाशनः ।**

सप्त च्छदान्यस्य **सप्तच्छदः**, नत्र । शुक्त्याकाराणि पर्णान्यस्य **शुक्तिपर्णः** । गुच्छ इव पुष्पाण्यस्य **गुच्छपुष्पः** । शोभनानि पर्णान्यस्य सुपर्णः, स्वार्थिके के **सुपर्णकः** ॥९५॥

स्थूलानि पर्णान्यस्य **स्थूलपर्णः** । दीर्घश्चासौ वृक्षश्च **दीर्घवृक्षः** । शरदि-ऋतुविशेषे भवा **शारदी**, "भवे" [सिद्ध० ६ ३ १२३] इत्यण् । यद् **मङ्खः**--

त्रिवृते नवे शुद्धे शारदोऽपि शरद्भव ।
अब्धौ सवत्सरे सप्तपर्णे च शारदी पुन ॥
लाङ्गली [ ]

इति स्त्रियामाह । **अमरस्तु**

सप्तपर्णो विशालत्वक् शारदो विषमच्छद ।
[ का० २ वर्ग ४ श्लो० २३ ]

इति पुंस्याह । विषमाणि च्छदान्यस्य **विषमच्छदः** । मदस्येव गन्धोऽस्य **मदगन्धिः**, पृषोदरादित्वादित्वम् । विशाला त्वगस्य **विशालत्वक्** । गजं द्वेष्टि **गजद्विट्** । शाल्मल्या इव दलान्यस्य **शाल्मलीदलः** ॥९६॥

१ वीरा पु० ॥ २ गन्धपुष्प सपर्णक नि० ॥ ३ दीर्घवृक्ष शारदो विष° नि० ॥ ४ °रुग्रोहविटप नि० ॥

गिरौ रुजति **शिरोरुक्** । देवानां विटपी **देवविटपी** । सुष्ठु मन्यते **सुमनः**, अच् । ग्रहान् नाशयति **ग्रहनाशनः** । आह च—

सप्तपर्णः शुक्तिपर्णश्छत्रपर्णः सुपर्णकः ।
सप्तच्छदो गुच्छपुष्पस्तथा शाल्मलिपर्णकः ॥

[ ] इति ।

पुनराहुः—

सप्तपर्णो बृहत्त्वक् च सप्ताह्वो मुष्कपुष्पकः ।
सप्तच्छदः सप्तपत्रो युग्मपत्रोऽबहुच्छदः ॥

[ ] इति ।

सप्तपर्णनामानि । लोके तु 'सातवनउ' इति प्रसिद्धिः ।

**आरग्वधे कृतमालः कर्णिकारः सुपर्णकः ॥९७॥**
**पीतपुष्पो दीर्घफलः शम्याकश्चतुरङ्गुलः ।**
**व्याधिहाऽऽरेवतश्चूली प्रग्रहो राजपादपः ॥९८॥**
**आरोग्यशिम्बिका कर्णी स्वर्णशेफालिकेत्यपि ।**

आ—समन्तात् रुजति—शङ्कते अस्माद् **आरग्वधः**, "आरगेर्वधः" [ हैमोणादिसू० २५४ ] इति वधः प्रत्ययः । आरग्भयन्नि आरुजः—मलाः तेषां वधोऽत्रेति वा; "आ—समन्ताद् रुजा वधोऽत्र" इति **क्षीरस्वामी**, तत्र । कृतम्—अतीसारं मलते धारयति **कृतमालः**, कृता मालाऽस्येति वा । उत्तम्भित इव सकर्णिकत्वात् कर्णिकामियर्ति **कर्णिकारः** । शोभनानि पर्णान्यस्य सुपर्णः, के **सुपर्णकः** ॥९७॥

पीतानि पुष्पाण्यस्य **पीतपुष्पः** । दीर्घं फलमस्य **दीर्घफलः** । शमीं—शम्बिमकति **शम्याकः**; शाम्यत्यनेनेति वा, "मवाक-श्यामाक-" [ हैमोणादिसू० ३७ ] इत्याके निपात्यते । चतस्रः अङ्गुलयोऽस्य **चतुरङ्गुलः**, "बहुव्रीहेः काष्ठे टः" [ सिद्ध० ७.३.१२५] इति टः समासान्तः । व्याधिं हतवान् **व्याधिहा**, नान्तः, "क्विप्" [ सिद्ध० ५.१.१४८ ] इति क्विप् । आरेवत्यां भवः **आरेवतः**, "भवे" [ सिद्ध० ६.३.१२३ ] इत्यण् । आरेवन्ते—यान्ति ज्वरा अनेनेति वा, "दॄ-पॄ-भृ-मृ-शी-" [ हैमोणादिसू० २०७] इत्यादि बहुवचनादतः । चूला विद्यते अस्य **चूली** । प्रगृह्यतेऽसौ अनेन वा **प्रग्रहः** । राजा चासौ पादपश्च **राजपादपः** ॥९८॥

---

१ "सादडिउ सत्ताल्ह" इति पु २ टिप्पणी ॥ २ सुवर्णक नि० ॥ ३ शम्पाक° नि० ॥ ४ °तः स्थूल प्र° नि० ॥

आरोग्यकारिशिम्बिरस्या आरोग्यशिम्बि, स्वार्थिके के **आरोग्यशिम्बिका** । कर्णावस्य स्त: **कर्णी** । सुवर्णशेफालिकेव **स्वर्णशेफालिका** । आह च--

कर्णिकारो राजवृक्ष प्रग्रह कृतमालक ।
आरोग्यशम्बी शम्याको व्याधिघातोपघातक ॥
आरग्वधो दीर्घफलो व्याघातश्चतुरङ्गुल ।
आरेवतस्तथा कर्णी कर्णीवान् स च रेवत ॥
[ ] इति ।

कृतमालनामानि । लोके तु 'किरमालउ' इति प्रसिद्धि ।

**बीजके प्रियकः शारिर्गौरो बन्धूकपुष्पकः ॥९९॥**
**कृष्णसर्जो मदासर्जः कल्याणः पीवरोऽसनः ।**
**महासालः पीतसालो जीवकः प्रियसालकः ॥१००॥**
**सुगन्धिर्नीलनिर्यासस्तिष्यः पुष्योऽलकप्रियः ।**

"वींक् प्रजन-कान्त्यसन-खादनेषु च" वेति वीयते वा बीज "वियो जक्" [हैमोणादिसू० २२७] इति जक्, "बीजा सन्त्यस्य वा बीज, स्वार्थिके के **बीजकः**" इति **निघण्टुः** । आह च

सञ्ज्ञया बीजको ज्ञेयो बीजपूरस्तथाऽसन ।
[ ] इति,

तत्र । काम्यत्वात् **प्रियकः**; प्रीणाति वा, "कीचक-पेचक-" [हैमोणादिसू० ३३] इत्यकान्तो निपात्यते । शृणाति शीर्यते वा **शारिः**, "कृ-शॄ कुटि-" [हैमोणादिसू० ६१९] इति णिदि । गूयते **गौरः**, "खुर-क्षुर-" [हैमोणादिसू० ३९६] इति रे निपात्यते । बन्धूकस्येव रक्तानि पुष्पाण्यस्य बन्धूकपुष्प, स्वार्थिके के **बन्धूकपुष्पकः** ॥९९॥

कृष्ण सर्जोऽस्य **कृष्णसर्जः** । मदमासृजति **मदासर्जः** । कल्याणहेतुत्वात् **कल्याणः**; "कलि शब्द-संख्यानयो" कल्यते वा "कल्याण-पर्याणादय." [हैमोणादिसू० १९३] इति णे निपात्यते । "प्यैङ् वृद्धौ" प्यायते **पीवरः**; पीयते रसोऽस्य वा, "तीवर-धीवर-" [हैमोणादिसू० ४४४] इति वरटि निपात्यते । "**असूच् क्षेपे**" अस्यति **असनः**, "ध्वसि-रसि-रुचि-" [हैमोणादिसू० २६९] इति अन, [पुं-क्लीब-

१ शौरि निं० ॥ २ महासर्ज निं० ॥ ३ महाशाल पीतशालो जीवकः प्रियशालकः निं० ॥

लिङ्ग. ] । महांश्चासौ सालश्च **महासालः** । पीतवर्णः सालः **पतीसालः** । जीवयति **जीवकः**, णकः । प्रियश्चासौ सालश्च प्रियसालः, के **प्रियसालकः** ॥१००॥

शोभनो गन्धोऽस्य **सुगन्धिः**,"सु-पूत्युत्-सुरभेर्गन्धादिद् गुणे" [ सिद्ध० ७.३.१४४ ] इति समासान्त इत् । नीलो निर्यासोऽस्य **नीलनिर्यासः** । तेषन्ति पुष्यन्ति च कार्याणि अत्र **तिष्यः पुष्यः**, उभावपि "कुप्य-भिद्योध्य-सिध्य-तिष्य-पुष्य-" [ सिद्ध० ५.१.३९ ] इति क्यबन्तौ निपात्येते । अलकानां प्रियः **अलकप्रियः** । आह च—

बीजकस्त्वसनः काम्यः शारिः कृष्णोऽलकप्रियः ।
तिष्यः पुष्यः पीतसालः प्रियकः प्रियसालकः ॥
सुगन्धिर्नीलनिर्यासस्तथा बन्धूकपुष्पकः ।
स स्यात् प्रियकसालश्च महासर्जश्च नामतः ॥

[ ] इति ।

बीजकनामानि । एतस्य लोके 'बीअउ' इति प्रसिद्धिः ।

**स तु द्विधा शिखिग्रीवः श्रेष्ठो गोमूत्रकोऽधमः ॥१०१॥**

'सः' बीजको 'द्विधा' द्विप्रकारः । शिखिग्रीव इव **शिखिग्रीवः** 'श्रेष्ठः' उत्तमः । गोमूत्रप्रतिकृतिर्गोमूत्रकः, "तस्य तुल्ये कः संज्ञा-प्रतिकृत्योः" [सिद्ध०७ १ १०८ ] इति कः, अधमः ॥१०१॥

**अश्वकर्णो दीर्घपत्रः कषायी मत्स्यसंवरः ।**
**सज्जकः सर्जकः शूरः कार्शः शालो लतातरुः ॥१०२॥**

अश्वस्य कर्ण इव कर्णः—पत्रं यस्य स **अश्वकर्णः**, तत्र, "उष्ट्रमुखादयः" [ सिद्ध० ३.१.२३ ] इति समासः । दीर्घाणि पत्राण्यस्य **दीर्घपत्रः** । कषायोऽस्त्यस्य **कषायी** । मत्स्यं—फलं संवृणोति **मत्स्यसंवरः** । सज्जति—विसर्पति **सज्जकः**, णकः । सृजति—विसर्पति **सर्जकः**, णकः । "शूरि वीरणि विक्रान्तौ" शूरयते **शूरः**, अच् । "शुं गतौ" शवति वा, "चि-जि-शु-सि-" [ हैमोणादिसू० ३९२ ] इति रः । "कृश्यते **कार्शः**" इति **क्षीरस्वामी** । श्यति **शालः**, "शा-मा-श्या-शक्यम्ब्यमिभ्यो लः" [ हैमोणादिसू० ४६२ ] इति लः, तालव्यादिरयम् । "सल गतौ" दन्त्यादि, सल्यते **सालः** इत्यपि । लता चासौ तरुश्च **लतातरुः** । यदमरः—

१ °श्रगन्धक नि० ॥ २ कषाय नि० ॥ ३ कार्श्यशालो नि० ॥

साले तु सर्ज-कार्शा-ऽश्वकर्णकाः सस्यसंवरः ।
[ का० २ वर्ग ४ श्लो० ४४ ] इति ।

अन्योऽप्याह—

सर्जकश्चाश्वकर्णश्च कषायी दीर्घपत्रकः ।
सस्यसंवरणः शूरः सज्जकः शालः उच्यते ॥
[ ] इति ।

अश्वकर्णनामानि । लोके तु 'सागु' इति प्रसिद्धिः ॥१०२॥

**[1]देवसालः शक्रतरुर्नदीसर्जोऽर्जुनाह्वयः ।**
**अर्जुनः ककुभः सेव्यः सर्पणो धूर्तपादपः ॥१०३॥**

देवानां सालो **देवसालः** । शक्रस्य तरुः **शक्रतरुः** । अत एव **इन्द्रद्रुः** । नद्याः सर्जो **नदीसर्जः** । अर्जुनस्य आह्वयोऽस्य **अर्जुनाह्वयः** । अर्ज्यते "यम्यजि-" [ हैमोणादिसू० २८८ ] इत्यादिना ने **अर्जुनः**, शौक्ल्याद्वा । ककुभः सन्त्यस्य **ककुभः**, दिग्व्यापकत्वात्, "ककि लौल्ये" ककते वा "ककेरुभः" [ हैमोणादिसू० ३३३ ] इत्युभः; कं स्कुभ्नातीति वा पृषोदरादित्वात् साधुः । "कं स्कुभ्नातीत्यहवा व्याख्या" इति **क्षीरस्वामी** । **सेव्यः** सेवनीयत्वात् । "सृपृलृ गतौ" सर्पति **सर्पणः** । धूर्तश्चासौ पादपश्च **धूर्तपादपः** । **यदमरः**—

नदीसर्जो वीरतरुरिन्द्रद्रुः ककुभोऽर्जुनः ।
[ का० २ वर्ग ४ श्लो० ४५ ] इति ।

**इन्दुरपि**—

ककुभस्त्वर्जुनः पार्थो नदीसर्जो धनञ्जयः ।
आशीफलश्चित्रयोगी वीतो वीरान्तकस्तथा ॥
[ ] इति ।

एतस्य लोके 'अर्जुन' इति प्रसिद्धिः ॥ १०३ ॥

**शाके कोलफलो द्वारदारुर्योगी हलीमकः ।**
**गन्धसारः स्थिरसारः स्थिरको ध्रुवको[2] ध्रवः ॥ १०४ ॥**
**अभ्रंलिहो महापत्रो बलेसारो[3] बलप्रदः ।**

---

१ अर्जुने ककुभः सेव्यः सुवर्णो धूर्तपादपः । देवशाकः शक्रतरुर्नदीसर्जोऽर्जुनाभिधः ॥१०३॥ नि० ॥

२ ध्रुवसाधनः नि० ॥ ३ बलसारो नि० ॥

शक्यतेऽनेन **शाकः**, तत्र । कोलाकारं फलमस्य **कोलफलः** । द्वारस्य दारु-**द्वारदारुः** । युनक्तीत्येवंशीलो **योगी**, "युज-भुज-" [ सिद्ध० ५.२.५० ] इति घिनण् । "मकुङ् मण्डने" हलिनं मङ्कते **हलीमकः**, पृषोदरादित्वात् साधुः । गन्धेन सारो **गन्धसारः** । स्थिर सारोऽस्य **स्थिरसारः** । तिष्ठति स्थिरः, "शुषीषि-" [ हैमोणादिसू० ४१६ ] इति किदिर्, स्वार्थिके के **स्थिरकः** । "ध्रुंत् गति-स्थैर्ययोः" ध्रुवति **ध्रुवकः**, "ध्रु-धून्दि-" [हैमोणादिसू० २९ ] इति किदकः । ध्रुवति **ध्रुवः**, "तुदादि-विषि-" [ हैमोणादिसू० ५ ] इति किद. ॥१०४॥

अभ्रं लेढि **अभ्रंलिहः**, "वहा-ऽभ्राल्लिह"[ सिद्ध० ५.१.१२३ ] इति खश् । महान्ति पत्राण्यस्य **महापत्रः** । **बलेसारः** अत्र सप्तम्यलोप । बलं प्रददाति **बलप्रदः**, "क्वचित् " [ सिद्ध०५.१.१७१ ] इति ड । शाकनामानि ।

**धर्मणो तु धनुर्वृक्षो गोत्रपुष्पो रुजासहः ॥१०५॥**
**महाबलो महावृक्षो राजाह्वो धन्वनः फलः ।**
**स्वादुफलो मृत्युफलः सारवृक्षः सुतेजनः ॥१०६॥**

"धृङ् विध्वंसे" इति **वोपदेवः**, धरते कफ-पित्तादीन् **धर्मणः**, "चिक्कण-कुक्कण-" [हैमोणादिसू० १५०] इत्यणे निपात्यते ।

धर्मण सर्पभेदेऽपि धर्मण पादपान्तरे ।

इति **विश्वलोचनः** । [ त्रिस्वरकाण्ड श्लो० ५८ ] ।

तत्र । धनुराकारो धनुषो वा वृक्षो **धनुर्वृक्षः** । गोत्रं—भूरक्षकं पुष्पमस्य **गोत्र-पुष्पः** । रुजां सहति **रुजासहः** ॥१०५॥

महद् बलमस्य **महाबलः** । महांश्चासौ वृक्षश्च **महावृक्षः** । राज्ञ. आह्वा अस्य **राजाह्वः** । 'धन्वन. फल' इति धन्वशब्दात फलमिति सम्बध्यते, तेन धन्वाकारं फलमस्य **धन्वफलः** । **धन्वनो**ऽपि । यदाह--

धन्वनो गोत्रविटपी धर्मणो गोत्रपुष्पक ।

[ ] इति ।

स्वादूनि फलान्यस्य **स्वादुफलः** । मृत्युप्रदं फलमस्य **मृत्युफलः** । सारश्चासौ वृक्षश्च **सारवृक्षः** । "तिजण निशाने" सुतरां तेजयति **सुतेजनः** । एतस्य लोके 'धमणउ' इति प्रसिद्धि. ॥१०६॥

१ गोत्रवृक्षो रुजा० नि० ॥ २ फलम् नि० ॥

**सिल्हके तु सिद्धवृक्षः**

"सिलत् उञ्छे" दन्त्यादि', सिलति सिल्ह, "बहुलम्" [ सिद्ध०५.१.२ ] इति ह.; सिलं जहाति वा, "क्वचित्" [ सिद्ध०५.१.१७१ ] इति ड', स्वार्थिके के **सिल्हकः**, तत्र। सिध्यति स्म **सिद्धः**, स चासौ वृक्षश्च **सिद्धवृक्षः** ; सिद्धानां वृक्षो वा। आह च—

सिल्हकः कपिजो धूम्रस्तुरुष्कः पिण्डित कपि'।

[ ] इति।

सिल्हकनामानि।

**कोलिपत्रे तु जोरणः।**

कोलि'–बदरी, तत्पत्राणीव पत्राण्यस्य **कोलिपत्रः**, तत्र। "जॄष् झॄष्च् जरसि" जीर्यति **जोरणः**, "चिक्कण-कुक्कण-" [ हैमोणादिसू० १९० ] इत्यणे निपात्यते।

**महापत्रे स्विङ्गुदी स्याद् विषशङ्कुः पलाशकः ॥१०७॥**

महान्ति पत्राण्यस्य **महापत्रः**, तत्र। "इगु गतौ" इङ्गति **इङ्गुदी**, "इङ्गच-बिम्यामुद" [ हैमोणादिसू० २४२ ] इत्युद, [ त्रिलिङ्ग' ]। विषस्य शङ्कुरिव **विषशङ्कुः**। "पल गतौ" पलति पलाश, "पलगश" [ हैमोणादिसू० ५३३ ] इत्याशः, स्वार्थिके के **पलाशकः** ॥१०७॥

**सरले तु सिद्धदारुर्नमेरुः खलिपादपः।**

"सृ गतौ" सरति **सरलः**, "मृदि-कन्दि-" [ हैमोणादिसू० ४६५ ] इत्यल, तत्र। सिद्धानां दारु' **सिद्धदारुः**, पु-क्लीबलिङ्ग'। नमति **नमेरुः**, "मयि प्रतिदाने" न मयते वा **नमेरुः**, "शिग्रु गेरु-नमेर्वादय" [ हैमोणादिसू० ८११ ] इति नमेर्नञ्पूर्वस्य मयतेर्वा एत्वान्त, रु प्रत्यय। खलीनां पादप खली चासौ पादपश्चेति वा **खलिपादपः**। आह च

सरल' पूतिकाष्ठं च बीज-पीतद्रुरुच्छ्रित।

दीपवृक्ष' स्निग्धदारु' प्रोक्तो मारीचपत्रक ॥

[ ] इति।

एतस्य लोके 'सरलउ' इति प्रसिद्धि।

---

१ त्वगादी नि० ॥ २ 'कुदुरु' इति पु २ टिप्पणो ॥

**देवदारुणि देवाह्वं पवनारिः पलाशिकः ॥१०८॥**
**पारिभद्रो द्रुकिलिमं किलिमं देववल्लभः ।**
**दारु च स्नेहविद्धं च देवेन्द्र-स्वर्गतो द्रुमः ॥१०९॥**
**पीत-पूति महा-देव-भद्रेन्द्रात् काष्ठ-दारुणी ।**

देवानां दारु **देवदारु**, तत्र । देवानामाह्वा—नामाऽस्य **देवाह्वम्** । पवनस्य अरिः **पवनारिः** । पलाशानि—पत्राणि सन्त्यस्य **पलाशिकः**, "अतोऽनेकस्वरात्" [ सिद्ध० ७. २. ६ ] इतीकः ॥१०८॥

पारि—निष्ठां प्राप्त भद्रमस्य **पारिभद्रः** । द्रौ—स्कन्धे किलिमं—निर्यासोऽस्य **द्रुकिलिमम्** । किलिममस्त्यस्य **किलिमम्**, अभ्रादित्वादः पदैकदेशत्वाद्वा भीमवत्, "किलत् श्वैत्य क्रीडनयो" किलत्यनेन वा "वयिम-खचिमादय" [ हैमोणादिसू० ३५० ] इतीमे साधु । उभावपि क्लीबलिङ्गौ । देवानां वल्लभो **देववल्लभः** । देवदार्वेकदेशे **दारु**, यथा भीमो भीमसेन । स्नेहेन विद्धं **स्नेहविद्धम्** । 'देवेन्द्र-स्वर्गतो द्रुमः' इति देव-इन्द्र-स्वर्गेभ्य प्रत्येकं द्रुमशब्द सम्बध्यते, तेन **देवद्रुमः इन्द्रद्रुमः स्वर्गद्रुमश्च** ॥१०९॥

'पीत पूति-महा देव-भद्रेन्द्रात् काष्ठ-दारुणी' इति पीतादिभ्य प्रत्येकं 'काष्ठ-दारुणी' इति शब्दौ सम्बध्येते, तेन **पीतकाष्ठं, पीतदारु**, पूति—उग्रगन्धं काष्ठमस्य **पूतिकाष्ठम्**, एव **पूतिदारु**, **महाकाष्ठं महादारु**, **देवकाष्ठ देवदारु**, **भद्रकाष्ठं भद्रदारु**, **इन्द्रकाष्ठं इन्द्रदारु** । सर्वेऽप्येते पुं-क्लीबलिङ्गा । यदाह—

देवदारु स्मृतं दारु सुराह्वं किलिमं च तत् ।
स्नेहविद्धं महादारु भद्रदार्विन्द्रदारु च ॥
देवकाष्ठं भद्रकाष्ठं पूतिकाष्ठं च दारु च ।
सुरदार्विन्द्रवृक्षश्च तथैवामरदारु च ॥
[ ] इति ।

**अमरोऽपि**—

शक्रपादप पारिभद्रक ।
भद्रदारु द्रुकिलिमं पूतिदारु च दारु च ॥
[ का० २ वर्ग ४ श्लो० ५३ ] इति ।

देवदारुनामानि ।

**मधूके मधुशाकः स्यान्माधवो मधुको मधुः ॥११०॥**
**मध्वष्ठीलो मधुष्ठीलो मधुकाष्ठो मधुस्रवः ।**
**रोध्र कोष-मधु गुडात् पुष्पो गोलफलोऽपि च ॥१११॥**

मदयति **मधूकः**, " शम्बूक-शाम्बूक-" [ हैमोणादिसू० ६१ ] इत्यूके निपात्यते, तत्र । मधुप्रधानं शाकं **मधुशाकः** । मा—माधुर्यश्री तस्या धवो **माधवः**, मधुरेव वा, प्रज्ञादित्वादण् । मदयति **मधुकः**, " कञ्चुकांशुक-" [ हैमोणादिसू० ५७ ] इत्युके निपात्यते, मधुप्रतिकृतिर्मधुक इति वा, " तस्य तुल्ये कः संज्ञा-प्रतिकृत्योः" [ सिद्ध० ७. १. १०८ ] इति कः, मधुरेव वा स्वार्थिकः कः । मन्यते **मधुः**, " मनि-जनिभ्यां ध-तौ च " [ हैमोणादिसू० ७२१ ] इत्युः, पुंल्लिङ्गः ॥११०॥

मधु माधुर्यमष्ठीले—गर्भे अस्य **मध्वष्ठीलः** । पृषोदरादित्वादकारलोपे **मधुष्ठीलः**, " ष्ठिवू क्षिवू निरसने " "ष्ठिवू-क्लमु-" [ सिद्ध० ४. २. ११० ] इति दीर्घे, मधु ष्ठीवति इति वा, " भिल्ला-ऽच्छभल्ल " [ हैमोणादिसू० ४६४ ] इति ले निपात्यते । मधुप्रधानं काष्ठो **मधुकाष्ठः** । मधु स्रवति **मधुस्रवः** । ' रोध्र-कोष मधु-गुडात् पुष्प ' इति रोध्र-कोष-मधु-गुडात् इत्यत्र समाहारद्वन्द्वः, रोध्रादिभ्यः पुष्पम् इति पुरो योज्यते, तेन **रोध्रपुष्पः**, कोषे पुष्पाण्यस्य **कोषपुष्पः**, **मधुपुष्पः**, गुडवन्मधुरं पुष्पमस्य **गुडपुष्पः** । गोलानि -वर्तुलानि फलान्यस्य **गोलफलः** । यदाह—

मधूको मधुवृक्षश्च मधुष्ठीलो मधुस्रवः ।
गुडपुष्पो रोध्रपुष्पो वनप्रस्थोऽथ माधवः ॥

[ ] इति ।

मधूकनामानि । लोके तु 'महुडउ' इति प्रसिद्धः ॥ १११ ॥

**जलजेऽस्मिन् मधूलः स्याद् वारिजो दीर्घपत्रकः ।**
**नीरवृक्षो गैरिकाख्यो ह्रस्वपुष्प-फलोऽपि च ॥ ११२ ॥**

अस्मिन् जलजे मधूके मधु लाति **मधूलः** पृषोदरादित्वात् साधु । वारितो जातो **वारिजः** । दीर्घाणि पत्राण्यस्य दीर्घपत्रः, कः **दीर्घपत्रकः** । नीरस्य वृक्षो **नीरवृक्षः** । गैरिक इत्याख्या अस्य **गैरिकाख्यः** । ह्रस्वपुष्प-फल' इति **ह्रस्वशब्दात्** पुष्प-फले

१ °द् गिरिजो दीर्घपत्रक । नीरवृक्षो गौरशालो ह्रस्व° नि० ॥

इति योज्येते, तेन ह्रस्वाणि पुष्पाणि फलानि चास्य **ह्रस्वपुष्पः ह्रस्वफलः** । आह च —

मधूकोऽन्यो मधूलस्तु जलजो दीर्घपत्रकः ।
ह्रस्वपुष्प-फलः स्वादुर्गैरिकाख्यो मधूलकः ॥

[ ] इति ।

एतस्य लोके 'महाडोलु' इति प्रसिद्धिः ॥११२॥

**तिन्दुके स्फूर्जनस्तुष्टः कालस्कन्धो विरूपकः ।**
**निःस्यन्दनः कालसारो रावणो नीलसारकः ॥११३॥**

तिम्यति आर्द्रीभवति **तिन्दुकः**, "कञ्चुकाशुक-"[हैमोणादिसू० ५७] इत्युके निपात्यते, तत्र । "टुवोस्फूर्जा वज्रनिर्घोषे" स्फूर्जति **स्फूर्जनः**, नन्द्यादित्वादन । तुष्यति स्म **तुष्टः** । कालः स्कन्धोऽस्य **कालस्कन्धः** । विरूपयति **विरूपकः** । निःस्यन्दते **निःस्यन्दनः** । कालः सारः--मज्जाऽस्य **कालसारः** । रावयति **रावणः** । नीलः सारः--मज्जाऽस्य नीलसारः, के **नीलसारकः** । [ आह च-- ]

तिन्दुको नीलसारश्च कालस्कन्धः शिशूलसकः ।
स्फूर्जकः स्फूर्जनस्तुष्टः स्यन्दनो रावणो रवः ॥

[ ] इति ।

तिन्दुकनामानि । लोके 'टींडू' इति प्रसिद्धिः ॥ ११३ ॥

**द्वितीये तिन्दुके काकतिन्दुर्मर्कटतिन्दुकः ।**
**काकेन्दुकः काकपीलुः कुपीलु कुलकावपि ॥ ११४ ॥**

'द्वितीये' भिन्ने तिन्दुके काकवर्णस्तिन्दुः **काकतिन्दुः** । मर्कटवर्णस्तिन्दुकः **मर्कटतिन्दुकः** । काकवर्णस्तिन्दुः काकेन्दुः, पृषोदरादित्वात् साधुः, के **काकेन्दुकः** । एवं **काकपीलुः** । कुत्सितः पीलुः **कुपीलुः** । "लक आस्वादने" कुत्सितैर्लक्यते **कुलकः**; कोलति वा, "धृ-धून्दि" [ हैमोणादिसू० २९ ] इति किदकः । आह च –

तिन्दुकोऽन्यो द्वितीयस्तु स्फूर्जकः काकतिन्दुकः ।
काकेन्दुकश्च विख्यातः कुपीलुः काकपीलुकः ॥

[ ] इति ।

---

१ स्फूर्जकस्तु॰ नि० ॥ २ ग्रावणो नि० ॥ ३ कालस्तिन्दु॰ नि० ॥

एतस्य लोके 'काकटींडू' इति प्रसिद्धि ॥ ११४ ॥

**रोध्रे लोध्रः**

रुणद्धि वर्णं **रोध्रः**, "भी-वृधि-रुधि-" [ हैमोणादिसू० ३८७ ] इति र, तत्र । र-लयोरैक्याद् **लोध्रः**, प्रतीतोऽयम् ।

**सिते तत्र शाबरः स्थूलवल्कलः ।**
**उत्सादनो महारोध्रस्तरुः शबरपादपः ॥ ११५ ॥**

'तत्र' इति रोध्रे 'सिते' श्वेते शबराणामयं वृक्ष **शाबरः**, "तस्येदम्" [ सिद्ध० ६ ३ १६० ] इत्यण् । स्थूलो वल्कलोऽस्य **स्थूलवल्कलः** । उत्साद्यते **उत्सादनः**, उत्सादयति वा । महांश्चासौ रोध्रश्च **महारोध्रः** । तरति **तरुः**, "भृ-मृ-तॄ-त्सरि-" [ हैमोणादिसू० ७१६ ] इत्यु । शबराणां पादपः **शबरपादपः** । आह च—

रोध्रो लोध्रः शाबरकश्चिल्लकस्तिल्वकस्तरुः ।
तिरीटः कालहीनश्च चिल्ली शबरपादपः ॥

[ ] इति ।

श्वेतलोध्रनामानि ॥ ११५ ॥

**रक्ते तु पट्टिका तिल्वः पट्टी लाक्षाप्रसादनः ।**
**तिरीटो मार्जनश्चिल्ली कानीनः क्रमुकः शंशः ॥११६॥**

**स्थूलपत्रो बृहत्पत्रः**

'तु' पुनरर्थे । रक्ते लोध्रे पट्टी एव **पट्टिका**, स्वार्थिक क । तिलति—स्निह्यति व्यञ्जनमनेन **तिल्वः**, "प्रह्वा-ऽऽह्वा-" [ हैमोणादिसू० ५१४ ] इति वे निपात्यते । पटति **पट्टी**, "घटा-घाटा-" [ हैमोणादिसू० १४१ ] इति ट निपात्यते, गौरादित्वाद् ङीः, पट्टोऽस्यास्तीति **पट्टी** । "पट्टिकारोध्रोऽयम्" इति **क्षीरस्वामी** । **यदमरः**—

क्रमुकः पट्टिकाख्यः स्यात् पट्टी लाक्षाप्रसादनः ।

[ का० २ वर्ग ४ श्लो० ४१ ] इति ।

१ ⁰रस्तनुवल्कल नि० ॥ २ ⁰ध्रोऽनम्भ श⁰ नि० ॥ ३ शिशु ॥११६॥ स्थूल-वल्को बृ⁰ नि०॥

लाक्षां प्रसादयति लाक्षाप्रसादनः । तिरयति रोगांस्तिरीटः; तरति वा, " तृ-कृ-कृपि-" [ हैमोणादिसू० १५१ ] इत्यादिना किरीट । मार्ष्टि--उद्वर्तकस्यक्रमनेन मार्जनः । चिल्लति--वातेन शिथिलीभवति चिल्ली, अच् । कन्याया अपत्यमिव कानीनः, "कन्या-त्रिवेण्या. कानीन-त्रिवणं च" [सिद्ध० ६.१.६२] इति साधु । यदाह—

गोध्रस्तिरीट· कानीनस्तिल्वक· सन्ततोद्भव· ।

[ ] इति ।

क्रामति क्रमुकः, "क्रमे· क्रम् च वा" [ हैमोणादिसू० ५३ ] इत्युक· । "शश प्लुतगतौ" शशति शशः ॥११६॥

स्थूलानि पत्राण्यस्य स्थूलपत्रः । बृहन्ति पत्राण्यस्य बृहत्पत्रः । आह च—

क्रमुक· पट्टिका रोध्रो गालव. स्थूलवल्कल ।
जीर्णबुध्नो बृहत्त्वकस्तर शाबरपादप ॥

[ ] इति ।

अन्योऽप्याह—

रोध्र· शाबरक श्वेतत्वगतीसारभेषजम् ।
द्वितीय· पट्टिका रोध्रो बृहत्पत्रस्तिरीटक· ॥
उत्तालकस्तिल्वकश्च पट्टी लाक्षाप्रसादन· ।

[ ] इति ।

मुनिलोध्रनामान्यमूनि ।

**कृष्णलोध्रे तु गालवः ।**

गालयति- स्रावयत्यक्षि गालवः, " कैरव-भैरव- " [ हैमोणादिसू० ५१९ ] इत्यवे निपात्यते ।

**भूर्जे भूर्जो बहुपुटो मृदुत्वक्को मृदुच्छदः ॥११७॥**
**रेखापत्रश्छत्रपत्रो बहुत्वक्-चर्मिणावपि ।**

" भृशू भर्जने च " "प्वादे " [ सिद्ध० ४. २. १०५ ] इति ह्रस्वे भृणाति भूर्जः, " उटजादय· " [ हैमोणादिसू० १३४ ] इति अजे निपात्यते,

१ बहुपटो मृदुवल्को मृदु ° मि०॥

"ऊर्जण् बल-प्राणयोः" भुवि ऊर्जयति इति वा, तत्र । भुवि जातो **भूजः**, "क्वचित्" [ सिद्ध० ५. १. १७१ ] इति ड । बहूनि पुटान्यस्य **बहुपुटः** । मृद्व्यस्त्वचोऽस्य मृदुत्वक्, स्वार्थिके के **मृदुत्वकः** । मृदूनि छदान्यस्य **मृदुच्छदः** ॥११७॥

रेखायुक्तानि पत्राण्यस्य **रेखापत्रः** । छत्राकाराणि पत्राण्यस्य **छत्रपत्रः** । बह्व्यस्त्वचोऽस्य **बहुत्वक्** । चर्म—त्वचाऽस्यास्तीति **चर्मी**, शिखादित्वादिन् । आहुश्च—

भूर्जे भूजो बहुपुटो बहुत्वको मृदुच्छदः ।

[ ] इति ।

**अमरो**ऽप्याह—

" भूर्जे चर्मि-मृदुत्वचौ" [ का० २ वर्ग ४ श्लो० ४६ ] इति ।

भूर्जनामानि ।

**श्लेष्मातके भूतवृक्षः पिच्छिलो द्विजकुत्सितः ॥११८॥**
**वसन्तकुसुमः शेलुः फलेलुर्लेखशाटकः ।**
**विषघाती बहुवारः शीत उद्दालकः सेलुः ॥११९॥**

श्लिष्यति कफोऽस्मात् **श्लेष्मातकः**, "श्लेष्मातका-" [ हैमोणादिसू० ८३ ] इत्यातके निपात्यते, श्लेष्माणमततीति वा, णक प्रत्ययः, तत्र । भूतानां वृक्षो **भूतवृक्षः** । पिच्छाऽस्त्यस्य **पिच्छिलः**, "लोम-पिच्छादेः शेलम्" [ सिद्ध० ७. २. २८ ] इतीलः । द्विजानां कुत्सितो **द्विजकुत्सितः** ॥११८॥

वसन्तस्य कुसुम इव **वसन्तकुसुमः** । शेरतेऽस्मिन् **शेलुः**, "शीङो लुः" [ हैमोणादिसू० ८२० ] इति लु । "शिलति शिनोति वा रोगान् **शेलुः**" इति **क्षीरस्वाम्याह** । फलति **फलेलुः**, "गृहलु-गुग्गुलु-" [ हैमणादिसू० ८२४ ] इति आलुप्रत्यये निपात्यते । लेखं शाटयति **लेखशाटकः** । विषस्य घाती **विषघाती** । बहु वृणोति श्रोतांसि **बहुवारः** । शीतवीर्यत्वात् **शीतः**, श्यायते स्म वा **शीतः**, क्त प्रत्ययः, "श्य शीर्द्रवमूर्ति-" [ सिद्ध० ४.१. ९७ ] इति शीरादेशः; शेते अनेन वा, "शी-री-" [ हैमोणादिसू० २०१ ] इति कित् तः । उद्दालयत्यङ्गम् **उद्दालकः**, स्पर्शेन स्फोटकारित्वात् । "सिलत् उञ्छे" दन्त्यादिरयम्, सिलति **सेलुः**, "मृ-मृ-तृ-त्सरि-" [ हैमोणादिसू० ७१६ ] इत्यादिबहुवचनात् । आहेन्दुः—

१. ०कस्तथा नि०॥

शेलुः श्लेष्मातकः शीतो वसन्तकुसुमस्तथा ।
उद्दालकः कन्दुरकः शेलुको भूतवृक्षकः ॥
पिच्छिलः शपितः सेलुस्तथा स द्विजकुत्सितः ।
लेखशाटो बहुवारः [ ] इति ।

अन्योऽपि—

श्लेष्मातकः कबुदारुः पिच्छिलो लेखशाटकः ।
शेलुः सेलुर्बहुवारः शपितो द्विजकुत्सितः ॥
[ ] इति ।

एतस्य लोके 'गूंदी' इति प्रसिद्धिः ॥११९॥

**लकुचे लिकुचो ग्रन्थिमत्फलः**

"लषी कान्तौ" लष्यते **लकुचः**, "लषेरुच कश्च" [ हैमोणादिसू० ११९ ] इति उचः अन्त्यस्य च कः, "लक्यते- आस्वाद्यते **लकुचः**" इति **क्षीरस्वामी**, तत्र। पृषोदरादित्वादन्त्याक्षरस्य इत्वे **लिकुचः**। ग्रन्थिमन्ति फलान्यस्य **ग्रन्थिमत्फलः**। आह च—

लकुचः क्षुद्रपनसो निचुलो ग्रन्थिमत्फलः ।
[ ] इति ।

एतस्य लोके 'वडहर' इति प्रसिद्धिः ।

**पनसे डहुः।**

**लकुचः क्षुद्रपनसः**

"पनी स्तुतौ" पन्यते **पनसः**, "तप्यणि-पन्यली-" [ हैमोणादिसू० ५६९ ] इत्यसः, "'फनस" इति **दुर्गः**, तत्र। दह्यते **डहुः**, पृषोदरादित्वात्। **लकुच** इति प्राग्वत्। क्षुद्रश्चासौ पनसश्च **क्षुद्रपनसः**। एतस्य लोके 'कटहर' इति प्रसिद्धिः।

**तस्य तु न्युब्जकं फलम् ॥१२०॥**

'तस्य' पनसस्य फलं "उब्जत् आर्जवे" न्युब्जति न्युब्जम्, अच्, स्वार्थिके के **न्युब्जकम्** ॥१२०॥

१ शपितो बहुकुत्सित पु २ ॥ २ बकुले कण्टकी ग्रन्थिफलाम्बुपनसामहुः। लकुच क्षुद्रपनसस्तु स्यात् कुब्जकं फलम् ॥१२०॥ मि०॥

**आम्रे रसालो माकन्दः कामाङ्गः पिकबान्धवः ।**
**वनपुष्पोत्सवश्चूतः परपुष्टमदोत्सवः ॥१२१॥**
**मधुदूतो मधुफलः सुफलो मदिरासखः ।**
**वसन्तपादपः**

अम्यते—अभिलष्यते **आम्रः**, "चि-जि-शु-सि-मि-तम्यमि" [हैमोणादिसू० ३९२] इति रो दीर्घश्च, तत्र । रसं मलति- दधाति **रसालः** । "कदुङ् कदुङ् क्लदुङ् वैक्लव्ये" माकन्दते **माकन्दः**, अजन्तः । कामस्य अङ्गं **कामाङ्गः** । पिकानां बान्धवः **पिकबान्धवः** । वने पुष्पैरुत्सवोऽस्माद् **वनपुष्पोत्सवः** । श्चोतति रसं **चूतः**; "चूष् पाने, चूष्यत इति [ **चूतः** ]" इति श्री**भोज** उवाच, "पुत-पित्त-" [हैमोणादिसू० २०४] इति ते निपात्यते । परपुष्टस्य मदोत्सवावस्मात् **परपुष्टमदोत्सवः** ॥ १२१ ॥

मधोः—वसन्तस्य दूत इव **मधुदूतः** । मधूनि—मृष्टानि फलान्यस्य **मधुफलः** । शोभनानि फलान्यस्य **सुफलः** । मदिरायाः सखा इव **मदिरासखः**, "राजन्सखेः" [सिद्ध० ७ ३ १०६] इत्यट् समासान्तः । वसन्तस्य पादपो **वसन्तपादपः** । आह च—

आम्रश्चूतो रसालश्च स चेष्टो मदिरासखः ।
कामाङ्गः सहकारश्च परपुष्टमदोत्सवः ॥
[ ] इति ।

एतस्य लोके 'आंबउ' इति प्रसिद्धिः ।

**असौ तु सहकारोऽतिसौरभः ॥१२२॥**

'तु' पुनः 'असौ' आम्रः अतिसौरभः सहकारयति- मेलयति स्त्री पुंसौ **सहकारः**, सुरासखत्वाद्वा, उच्यते इति शेषः ॥ १२२॥

**क्षुद्राम्रे स्यात् कृमितरुर्लाक्षावृक्षो जतुद्रुमः ।**
**सुकोशको घनस्कन्धः कोशाम्रश्च सुरक्तकः ॥१२३॥**
**टङ्को नीलकपित्थोऽन्यो राजपुत्रो नृपात्मजः ।**

क्षुद्रश्चासौ आम्रश्च **क्षुद्राम्रः**, तत्र । कृमीणां तरुः **कृमितरुः** । लाक्षावर्णो वृक्षो **लाक्षावृक्षः** । एवं **जतुद्रुमः** । शोभनः कोशोऽस्य सुकोशः, कः **सुकोशकः** ।

१ °दोत्सव नि० ॥ २ केशाम्बुरन सुरक्तस नि० ॥

घनः स्कन्धोऽस्य **घनस्कन्धः** । कोशे—मध्येऽम्बु अस्य **कोशाम्बुः** । सुतरां रक्तः सुरक्तः, के **सुरक्तकः** ॥१२३॥

"टकुण् बन्धने" टङ्कयते **टङ्कः**, पुं-क्लीबलिङ्गः । यद **गौडः**—

जङ्घायां स्त्री पुमान् खड्गकोशे पाषाणदारणे ।
खनित्रे टङ्कणे नीलकपित्थे टङ्कमस्त्रियाम् ॥

[ ] इति ।

नीलश्चासौ कपित्थश्च **नीलकपित्थः** । 'अन्य' अपरः राज्ञः पुत्रो **राजपुत्रः** । एवं **नृपात्मजः** । आह च—

क्षुद्राम्र उत्तकोशश्च लाक्षावृक्षः सुरक्तकः ।
जतुवृक्षो घनस्कन्धः कृमिवृक्षः सुकोशकः ॥
राजाम्रातक आम्लातो मन्मथोद्भवनस्तथा ।
टङ्को नीलकपित्थोऽन्यो राजपुत्रो नृपात्मजः ॥

[ ] इति ।

एतस्य लोके 'राजाम्र' इति प्रसिद्धिः ।

**जम्ब्वां महाफला राजजम्बूर्नीलाम्बुजच्छदा ॥१२४॥**
**सुगन्धिपत्रा**

जायते अस्या **जम्बूः**, "कमि-जनिभ्यां बूः" [हैमोणादिसू० ८४७] इति बूः, स्त्रीलिङ्गः, तस्याम् । महान्ति फलान्यस्या **महाफला** । राज्ञो जम्बूः **राजजम्बूः** । नीलाम्बुजमिव च्छदान्यस्याः **नीलाम्बुजच्छदा** ॥१२४॥

सुगन्धीनि पत्राण्यस्या **सुगन्धिपत्रा** । यदाह

जम्बूः सुरभिपत्रा च राजजम्बूर्महाफला ।
सूक्ष्मपत्रा क्षुद्रजम्बूर्नादेयी भूमिजम्बुका ॥

[ ] इति ।

"**सूक्ष्मपत्राद्याश्च**त्वारो नागरङ्गार्थाः" इति **गौडः** । जम्बूनामानि । लोके 'जांबू' इति प्रसिद्धिः ।

१ °म्बुकच्छदा नि० ॥

**माऽन्या तु काकजम्बूः कुजम्बुका ।**
**उशीरपत्रा नादेयी वैदेशी काकवल्लभा ॥१२५॥**

'तु' पुनरर्थे । 'सा' जम्बूरन्या काकस्य जम्बू **काकजम्बूः** । कुत्सिता जम्बूः कुजम्बू., स्वार्थिके के **कुजम्बुका,** "ड्याादीदूत के" [सिद्ध० २. ४ १०४] इति ह्रस्व. । उशीरस्येव पत्राण्यस्या **उशीरपत्रा** । **नादेयी** नदीजाता । विदेशे भवा **वैदेशी** । काकस्य वल्लभा **काकवल्लभा** । आह च

काकजम्बूर्मेघवर्णा नादेयी विशदोऽल्पक ।

[ ] इति ।

तस्या विशेषोऽयम् ॥१२५॥

**मदने[1] श्वसनो राठः शल्यको विषनाशनः ।**
**करहाटो मरुबकः पिण्डी पिण्डीतकः फलः ॥१२६॥**

**सूर्यपुत्रः[2] कर्कटको विषगन्धो विषोदरः ।**
**मत्स्यान्तकफलो राजपुत्रकः कफवर्धनः ॥१२७॥**

मदधातुर्हर्ष-ग्लपनार्थो घटादि. मदयति **मदनः**, नन्द्यादित्वादन, नत्र । "[अन] श्वसक् प्राणने" श्वसत्यनेन **श्वसनः**, "श्वसि-रसि " [हैमोणादिम० २६९] इत्यादिशब्दाद् अन । गति **राठः**, "पठैधिठादय " [हैमोणादिसू० १६६] इति ठ निपात्यते । "शल्यमस्यास्ति इति **शल्यः**" इति **क्षीरस्वामी** ; "शल गतौ" शलति वा "स्था-छा-मा-" हैमोणादिम० ३५७] इति य. स्वार्थिके के **शल्यकः** । विषं नाशयति **विषनाशनः** । कर हन्ति दुःस्पर्शत्वात **करहाटः**. 'कपट-कीकटा-दय.' [हैमोणादिसू० १४४] इति अटे निपात्यत. 'हय हर्य क्रान्तौ च" चकारात् गतौ. कर हयतीति वा कर्मण्यण् । म्रियन्ते अनेन विषपुष्पत्वादिति **मरुबकः**, मा रौति वा, "कीचक पचक " [हैमोणादिसू० ३३] इत्यके निपात्यते, मरौ बक इव सीदतीति वा । पिण्डमस्यास्ति **पिण्डी** । पिण्डीमित प्राप्त पिण्डीत., के **पिण्डीतकः**; पिण्डयते वा "कृ शृदि पिण्डिभ्य इतक " [हैमोणादिसू० ७९] इति "पिडुङ् सङ्घाते" इत्यस्मात् इतक प्रत्यय । फलति **फलः** ; फलमस्यास्ति वा. अभ्रादित्वाद ॥१२६॥

१ मदनं छर्दनो राठ नि० ॥ २ °त्र-कर्कटकौ नि० ॥

सूर्यस्य पुत्रः **सूर्यपुत्रः।** "कर्क हासे" सौत्रोऽयम्, कर्कति कर्कटः, "दिव्यवि-" [ हैमोणादिसू० १४२ ] इत्यटः, स्वार्थिके के **कर्कटकः।** विषस्येव गन्धोऽस्य **विषगन्धः।** विषमुदरेऽस्य **विषोदरः।** मत्स्यान्तकं फलमस्य **मत्स्यान्तकफलः।** राज्ञः पुत्रो राजपुत्रः, के **राजपुत्रकः।** कफं वर्धयति **कफवर्धनः।** आह च—

मदनः शल्यको राठः पिण्डी पिण्डीतकः फलः।
तस्करः करहाटश्च छर्दनो विषपुष्पकः॥

[ ] इति।

मदननामानि। लोकेऽस्य 'मयणहल' इति प्रसिद्धिः॥१२७॥

## कुब्जके कामुकः श्यामसारः फुल्लो निमिद्रुमः।

"कुङ् शब्दे" कवते कुब्जः, "कुवः कुब्-कुनौ च" [ हैमोणादिसू० १२९ ] इति जक्प्रत्ययो अस्य च कुब् इत्यादेशः, स्वार्थिके के **कुब्जकः,** तत्र। कमनशीलः **कामुकः,** "शॄ-कम-" [ सिद्ध० ५.२.४० ] इत्युकण्। श्यामः सारः—मज्जाऽस्य **श्यामसारः।** फुल्लति—विकसति **फुल्लः।** नमनीव निमिः, "क्रमि-तमि-स्तम्भेरिच्च नमेस्तु वा" [ हैमोणादिसू० ६१३ ] इति किदि प्रत्ययोऽकारस्य च इकारः, स चासौ द्रुमश्च **निमिद्रुमः।** कुब्जकनामानि। लोके 'कुबउ' इति प्रसिद्धिः।

## निचुले तु नदीकान्तोऽम्बुजो हिज्जल इज्जलः॥१२८॥ गन्धपुष्पो गुच्छफलोऽम्बुजातः कच्छपाल्यपि।

"णिजूंकी शौचे च" चकारात् पोषणे, नेनेक्ति **निचुलः,** "कुमुल-तुमुल-निचुल-" [ हैमोणादिसू० ४८७ ] इत्युले निपात्यते, निचुल्यते अम्बुनेति वा, "नाम्युपान्त्य-" [ सिद्ध० ५.१.५४ ] इति कः, तत्र। नद्याः कान्तो **नदीकान्तः।** अम्बुनि जातो **अम्बुजः।** हिनोति **हिज्जलः,** एति **इज्जलः,** उभावपि "मुरलोरल-" [ हैमोणादिसू० ४७४ ] इत्यले निपात्येते। "हिज्जलापभ्रंशो हिज्जलः" इति **क्षीरस्वामी,** जलवेतसविशेषत्वादस्य॥१२८॥

गन्धयुक्तं पुष्पमस्य **गन्धपुष्पः।** गुच्छाकारं फलमस्य **गुच्छफलः।** अम्बुनि जायते **अम्बुजातः।** कच्छं पालयति **कच्छपाली।** आह च—

१ °फलोऽनुवाकः कच्छकोल्यपि नि०॥

इज्जलो हिज्जलो गुच्छफल स्यात् कच्छकेतिका ।

[ ] इति ।

एतस्य लोके 'इजर' इति प्रसिद्धि ।

**वेतसे विदुलः शीतो नदीकूलप्रियो रथः ॥१२९॥**
**अभ्रपुष्पः पत्रमाली वानीरो वञ्जुलोऽपि च ।**

"वींक् प्रजनादिषु" वैति-अम्भोऽनुवर्नते **वेतसः**. "तस" [ हैमोणादिसू० ५८० ] इति तस प्रत्यय "तस दसूच् उपक्षये" वितस्यते वा पृषोदरादित्वात साधु, पुं-स्त्रीलिङ्ग तत्र । "विद् अवयवे" विन्दति **विदुलः** 'स्था वङ्कि-" [ हैमोणादिसू० ४८६ ] इत्युलो न लुक् च "टुलण् क्षेपे" विदोल्यते वेगेनेति वा, 'नाम्युपान्त्य-" [ सिद्ध० ५ १ ५४ ] इति क । **शीतो**ऽनुष्णवीर्येण दाहशमनात् । नदीकूलं प्रियमस्य **नदीकूलप्रियः** । रमन्तेऽस्मिन **रथः**. "रमि न गमि-" [ हैमोणादिसू० २२७ ] इति कित् थ ॥१२९॥

अभ्राणीव पुष्पाण्यस्य **अभ्रपुष्पः** । पत्राणि मलते धारयतीत्येवंशील **पत्रमाली** । वनति—भजत्यम्बु **वानीरः** वन्यते वा, वनि वपिभ्या "णित [ हैमोणादिसू० ४२१ ] इति णिद् इर । "वज गतौ" वजति **वञ्जुलः**. "कुमुल-तुमुल-" [ हैमोणादिसू० ४८७ ] इत्युले निपात्यते । आह च --

अथ वेतसं ॥

रथा-ऽभ्रपुष्प-विदुल-शीत-वानीर-वञ्जुला ।

[ अमर० का० २ वर्ग ४ श्लो० २९-३० ] इति ।

वेतसनामानि ।

**स्यादम्बुवेतसे भीरुर्नादेयी बालभीरुकः ॥१३०॥**
**विदुलो मञ्जरी नम्रः परिव्याधो निकुञ्जकः ।**

**'अम्बुवेतसे'** जलवेतसे बिभेतीत्येवंशीलो **भीरुः**, "भियो रु रुक-लुकम्" [सिद्ध० ५ २ ७६ ] इति रु । नद्यां भवा **नादेयी**, "नद्यादेरेयण्" [ सिद्ध० ६.३.२ ] इत्येयण् । बाल इव भीरुक **बालभीरुकः** ॥१३०॥

**विदुल** इति प्राग्वत् । मञ्जि· सौत्रो ध्वन्यर्थः, मञ्जति **मञ्जरी**, 'ऋच्छि-चटि-वटि" [हैमोणादिसू० ३९७] इत्यर· । नमनशीलो नम्र·, "स्म्यजस-हिंस-" [सिद्ध० ५.२.७९] इति र· । परिविध्यते अम्भसा **परिव्याधः** । नितरां कूयते **निकुञ्जः**; "कुवः कुब्-कुनौ च" [ हैमोणादिसू० १२९ ] इति जक्प्रत्यय. कुन् इत्यादेशश्च, के **निकुञ्जकः** । आह च—

नादेयो मेघपुष्पोऽन्यस्तोयकामो निकुञ्जक· ।
जलौका· संवृतोऽम्भोजो निचुलो जलवेतस ॥
[ ] इति ।

जलवेतसोऽयम् । चन्द्राद्यास्त्वविभागेनाऽऽहु·—

वेतसो विदुलो नम्रो वञ्जुलो दीर्घपत्रक· ।
नादेयी गन्धपत्रश्च जलौका· संवृतस्तथा ॥
नदीकूलप्रियस्त्वन्य· सुशीतो मेघपुष्पक· ।
जलजातस्तोयकामो विदुलो जलवेतस· ॥
[ ] इति ।

निचुलाद्या सर्वेऽप्येते वेतसविशेषा ।

**वरुणे गन्धवृक्षः स्यात् तिक्तशाकः कुमारकः ॥१३१॥**

**श्वेतपुष्पः श्वेतफलस्तमालो मारुतापहः ।**
**[1]शीधुवृक्षः श्वेतवृक्षः सेतुरश्मरिकारिपुः ॥१३२॥**

"वृञ् वरणे" वृणोति **वरुणः**, कर्णिकावृक्षत्वात्, "ऋ-कृ-वृ-" [ हैमोणादिसू० १९६ ] इत्यादिना उण· प्रत्यय । "तॄ-कृ-शॄ-पॄ-सृ-वृ-श्रु-शॄ-रु-रुहि-" [हैमोणादिसू० १८७] इत्यादिना अणप्रत्यये **वरणो**ऽपि, तत्र । गन्धयुक्तो वृक्षो **गन्धवृक्षः** । तिक्तरस शाक. **तिक्तशाकः**, शाकमध्ये पाठात् । कुमारप्रतिकृति **कुमारकः**, "तस्य तुल्ये कः संज्ञा-प्रतिकृत्यो·" [ सिद्ध० ५. १ ५४ ] इति क·, नित्यं तरुणत्वात्. काम्यते कुमारः, "कमेरत उच्च" [हैमोणादिसू० ४०९ ] इत्यार· अकारस्य च उकार·, स्वार्थिके के **कुमारक** इति वा ॥१३१॥

---

१ साधुवृक्षः मि० ॥

श्वेतानि पुष्पाण्यस्य **श्वेतपुष्पः** । श्वेतानि फलान्यस्य **श्वेतफलः** । "तमूच् काङ्क्षायाम्" ताम्यति **तमालः**, "ऋ-कृ-मृ-वृ-तनि-तमि-" [हैमोणादिसू० ४७५] इत्यालः, [पुं-क्लीबलिङ्गः] । मारुतं—वायुमपहन्ति **मारुतापहः** । शीधो: वृक्षः **शीधुवृक्षः** । श्वेतश्चासौ वृक्षश्च **श्वेतवृक्षः** । सेतुमत्त्वात **सेतुः**, पर्यन्ते रक्षाहेतुत्वात् : "षिंगृद् बन्धने" सिनोति वा **सेतुः**, "कृ-सि-कमि" [हैमोणादिसू० ७७३] इति तुन् । अश्मरिका—मूत्रबन्धनं तस्या रिपु **अश्मरिकारिपुः**, अश्मरीहरत्वात् । आह च—

वरुणः श्वेतपुष्पश्च तिक्तशाकः कुमारकः ।
सेतुद्रुमः शीधुवृक्षस्तमालो मारुतापहः ॥

[ ] इति ।

वरुणनामानि । लोकेऽपि 'वरुणा' इति प्रसिद्धिः ॥१३२॥

**अङ्कोठे स्यात् पीतसारो दीर्घकीलो निकोचकः ।**
**अङ्कोल्लकस्ताम्रफलो रेचको गन्धपुष्पकः ॥१३३॥**

अङ्क्यते—कीलकैर्लक्ष्यते **अङ्कोठः**, "पष्ठैधिठादय" [हैमोणादिसू० १६६] इति ठे निपात्यते, तत्र । पीतः सारः—मज्जाऽस्य **पीतसारः** । दीर्घा कीला अस्य **दीर्घकीलः** । "कुंचच् कौटिल्याऽल्पीभावयोः" निकुञ्च्यते अस्मात् कण्टकित्वाद् **निकोचकः**, णके पृषोदरादित्वात् साधु । अङ्क्यते कीलकैर्लक्ष्यते अङ्कोल्लः, "पिञ्छोल-कल्लोल-" [हैमोणादिसू० ४९५] इत्योले निपात्यते, स्वार्थिके के **अङ्कोल्लकः** । प्राकृतेऽपि **अङ्कोल्लः** । ताम्राणि फलान्यस्य **ताम्रफलः** । **रेचको** विरेचकत्वात् । गन्धयुक्तानि पुष्पाण्यस्य गन्धपुष्पः, स्वार्थिके के **गन्धपुष्पकः** । आह च—

अङ्कोठोऽङ्कोल्लको रेची निर्दिष्टो दीर्घकीलकः ।
पीतसारस्ताम्रफलो गन्धपुष्पो निकोचकः ॥

[ ] इति ।

अङ्कोठनामानि । लोके 'आंकुल्ल' इति प्रसिद्धिः ॥१३३॥

**भल्लातके वीरतरुरुष्कोऽरुष्करो व्रणः ।**
**भौनिको भूतरुड् भूरिस्नेहः शोफकरो धनुः ॥१३४॥**
**अग्निमुखी बहुपत्रो भल्ली सूर्याऽग्निसंज्ञकः ।**

"भल्लि परिभाषण-हिंसा-दानेषु" भल्लते **भल्लातकः**, "चण्डि-भल्लिभ्यामातकः" [हैमोणादिसू० ८२ ] इत्यातकः । "भल्ल इव अतति–वृणोति **भल्लातकः**" **इत्यमरे** [का० २ वर्ग ४ श्लोक ४२ ] त्रिलिङ्ग[1], तत्र । विशेषेण ईरयति वीरः, स चासौ तरुश्च **वीरतरुः** वीराणा तरुरिति वा, दुःशकत्वात् । अरूंषि–स्फोटैर्व्रणान् करोति **अरुष्कः**, "क्वचित्" [सिद्ध० ५.१.१७१] इति डः, "सङ्ख्या-ऽहर्दिवा-विभा-निशा-" [सिद्ध० ५.१.१०२] इति टे प्रत्यये **अरुष्करः**, उभयत्र "समासेऽसमस्तस्य" [सिद्ध० २.३.१३.] इति षत्वम् । "व्रणण् गात्रविचूर्णने" व्रणयति **व्रणः**, अच् । भूतैर्निर्वृत्तो **भौतिकः**, "निर्वृत्ते" [सिद्ध० ६.४.१०५] इतीकण् । अत एव भूतेभ्यो रोहति **भूतरुट्** , क्विप् । भूरिः–प्रचुरः स्नेहोऽस्य **भूरिस्नेहः** । शोफं करोति **शोफकरः** । धनुरिव **धनुः**, वक्रत्वात् , धन्यते वा **धनुः**, "भृ-मृ-तॄ-त्सरि-" [हैमोणादिसू० ७१६] इत्युः ॥१३४॥

अग्निवन्मुखमस्या दाहकत्वाद **अग्निमुखी** । बहूनि पत्राण्यस्य **बहुपत्रः** । भल्लीव **भल्ली** भेदकत्वात् , "भल्लि परिभाषणादौ" अचि प्रत्यये ङ्यां च **भल्ली** । 'सूर्या-ऽग्निसंज्ञक ' इति **सूर्यसंज्ञः**, तापकत्वात् . **अग्निसंज्ञः**, दाहकत्वात् । एवमन्येऽपि । आह च

भल्लातकः स्मृतोऽरुष्को दहनस्तपनोऽग्निकः ।
अरुष्करो वीरतरुर्भल्ली चाग्निमुखी धनुः ॥
[ ] इति ।

भल्लातकनामानि । लोके 'भीलामा' इति प्रसिद्धिः ।

**अरिष्टे स्यात् कृष्णबीजो रक्षाबीजोऽर्थसाधनः ॥१३५॥**
**शुभनामा शीतफेनः फेनिलो गर्भपातनः ।**

न रिष्यते–न हिंस्यते अनेन **अरिष्टः** रक्षाहेतु , तत्र । कृष्णानि बीजान्यस्य **कृष्णबीजः** । रक्षाकारि बीजमस्य **रक्षाबीजः** । अर्थं साधयति **अर्थसाधनः** ॥१३५॥

शुभस्य नामास्य **शुभनामा** । शीता. फेनाः अस्य **शीतफेनः** । फेनाः सन्त्यस्य **फेनिलः**, "प्रज्ञा-पर्णोदक फेनाल्लेलौ" [सिद्ध० ७.२.२२] इति इलः प्रत्ययः । गर्भं पातयति **गर्भपातनः** । यदाह **चन्द्रः** –

१ "वीरवृक्षोऽरुष्करोऽग्निमुखी भल्लातकी त्रिषु ॥४२॥" इत्यमरे का० २ वर्ग ४ ॥
२ कृष्णवर्णो रक्तबीजो[७] नि० ॥ ३ पीतफेन. नि० ॥

अरिष्टकस्तु मङ्गल्य कृष्णबीजोऽर्थसाधनः ।
रक्षाबीजः शीतफेनः फेनिलो गर्भपातन. ॥

[ ] इति ।

अरिष्टकनामानि । लोके 'अरीठा' इति प्रसिद्धि' ।

**निम्बे तु सर्वतोभद्रः पारिभद्रः सुतिक्तकः ॥१३६॥**

**पिचुमन्दो यवनेष्टः शक्रेष्टः शुकमालकः ।**
**अरिष्टो हिङ्गुनिर्यासो नेता नियमनोऽपि च ॥१३७॥**

नयति रोगान् उपशमं **निम्बः**, "डी नी-बन्दि-" [हैमोणादिसू० ३२५] इति डिदिम्ब', निम्ब्यते सिच्यते वा. तत्र । सर्वतो भद्रमस्मात् **सर्वतोभद्रः** । पारि-निष्ठा प्रासं भद्रमस्य **पारिभद्रः** । सुतरां तिक्त सुतिक्त , के **सुतिक्तकः** ॥ १३६॥

पिचुं—तूलं मन्दयति **पिचुमन्दः** । "अरोमशत्वात् , "**पिचुमर्दः**" इत्येके । "यवनानामिष्टो **यवनेष्टः**" इति **सौश्रुतः** । शक्रस्य इष्ट **शक्रेष्टः** । शुकेर्माल्यते—वेष्टयते **शुकमालकः** । **चन्द्रनन्दनस्तु शुकमाल**माह । एतस्यैकदेशं **मालको**ऽपि । "रिष हिंसायां" न रिष्यते **अरिष्टः** । हिङ्गुगन्धिर्निर्यासोऽस्य **हिङ्गुनिर्यासः** ।

"हिङ्गुनिर्यासशब्दोऽथ निम्बे हिङ्गुरसेऽपि च ।"
इति **शाश्वतः** [ श्लोक० ३७३ ] इति ।

नयति रोगानुपशममिति **नेता** । नियम्यन्ते रोगा अनेन **नियमनः**, "करणा-ऽऽधारे" [सिद्ध० ५ ३ १२९] इत्यनट् । आह च—

निम्बो नियमनो नेता पिचुमन्द' सुतिक्तक' ।
अरिष्ट सर्वतोभद्र' सुभद्र' पारिभद्रक. ॥

[ ] इति ।

एतस्य लोके 'नींब' इति प्रसिद्धि' ॥१३७॥

१ शुकेष्ट नि० ॥ २ "पिचुमन्द , अरोगकृत्त्वाद् अपिचमन्त्येनमिति वा "कुसुद-" [हैमोणादिसू० २४८]इति निपात्यते" इत्यभिधानचिन्तामणिस्वोपज्ञटीकायाम् ॥ ३ एके अमरादय । तथाहि—"अरिष्ट सर्वतोभद्र-हिङ्गुनिर्यास–मालका । पिचुमर्दश्च निम्बे" [अमर० का० २ वर्ग ४ श्लो० ६२] इति ॥

**महानिम्बे निम्बरकः कामुको विषमुष्टिकः ।**
**रम्यकः क्षीवको वृका**ऽक्षिपीलुः **केशमुष्टिकः ॥१३८॥**

महांश्चासौ निम्बश्च **महानिम्बः**, तत्र । निम्बवद् रम्यते—आस्वाद्यते **निम्बरकः** । कमनशीलः **कामुकः** । विषस्य मुष्टिरिव विषमुष्टि., के **विषमुष्टिकः** । रमयति रम्य., "भव्य-गेय-जन्य-रम्य-" [ सिद्ध० ५.१.७ ] इति साधु., स्वार्थिके के **रम्यकः** । "क्षीवृङ् मदे" क्षीवते **क्षीवकः** । [वृज्यते **वृका**, "निष्क-तुरुष्क-" [ हैमोणादिसू० २६ ] इति के निपात्यते ] । अक्षिण पीलु **अक्षिपीलुः** । केशानां मुष्टिः केशमुष्टिः, के **केशमुष्टिकः** । आह च—

महानिम्ब. स्मृतोद्रेक· कामुको विषमुष्टिक ।
केशमुष्टिर्निम्बरको रम्यक· क्षीब एव च ॥

[ ] इति ।

एतस्य लोके 'बकायणि' इति प्रसिद्धि. ॥१३८॥

**पीलौ स्रंसी सहस्राङ्गी शीतः करभवल्लभः ।**
**गुल्मारिर्गुडफलश्च**

पीयते माधुर्यात् **पीलुः**, "पीड· कित्" [ हैमोणादिसू० ८२१ ] इति लु पीड्यते इति वा. "केवयु भुरण्यु-" [ हैमोणादिसू० ७४६ ] इति उप्रत्यये निपात्यते, पुंल्लिङ्ग, तत्र । "स्रंसूङ् प्रमादे" स्रंसते स्रंसयते वेत्येवंशील. **स्रंसी**, "अजाते· शीले" [ सिद्ध० ५ १ १५४ ] इति णिन् । सहस्रमङ्गानि सन्त्यस्य **सहस्राङ्गी** । शीतफलैकदेश **शीतः**, शीतलवीर्यत्वाद्वा । करभाणां वल्लभ **करभवल्लभः** । गुल्मस्य अरि· **गुल्मारिः** । गुडवन्मधुराणि फलान्यस्य **गुडफलः** । आह च—

पीलु शीतफल स्रंसी धारी गुडफलोऽपि च ।
विरेचनफल· शाखी श्याम करभवल्लभः ॥

[ ] इति ।

पीलुनामानि । लोके 'पील्नु' 'वेणु' इति वा प्रसिद्धि· ।

**तस्मिंस्तु गिरिसम्भवे ॥१३९॥**

१ निम्बकश्च कार्मुको नि० ॥ २ वृक्षोऽक्षि ° नि० ॥ ३ ° स्राङ्ग शीत नि० ॥ ४ ° लश्चाथास्मिंस्तु नि० ॥

**अक्षोटः कर्परालश्च फलस्नेहो गुहाश्रयः ।**

'तुः' पुनः 'तस्मिन्' पीलौ 'गिरिसम्भवे' गिरिजाते ॥१३९॥—

"अक्षौ व्याप्तौ च" अक्ष्णोति **अक्षोटः**; अश्नाति वा. "कपोट-बकोटा-ऽक्षोट-" [हैमोणादिसू० १६१] इत्योटं निपात्यते । कर्परं अलति—दीप्यते **कर्परालः** । "कन्द-राऽस्यास्ति कन्दरं लाति वा **कन्दरालः**, कन्दरावष्टनात्" इत्यपरे । फले स्नेहोऽस्य **फलस्नेहः** । गुहायामाश्रयोऽस्य **गुहाश्रयः** । आह च

अक्षोटः पार्वतीयश्च फलस्नेहो गुहाश्रय ।
कीरेष्ट कन्दरालश्च स्वादुमज्जो मृदुच्छद ॥

एतस्य लोके 'अखोड' इति प्रसिद्धि ।

**पारापते तु साराम्लः कृतमालः परावतः ॥१४०॥**
**आरेवतः सारफलः**

पारमापतति **पारापतः**, लिहादित्वादच् , तत्र । सार—मज्जा अम्लोऽस्य **साराम्लः** । कृता मालाऽस्य **कृतमालः** । "पृश् पालन-पूरणयो" "प्वादे-" [सिद्ध०४.२.१०५] इति ह्रस्वे पृणाति **परावतः**, "पुन पित्त-" [हैमोणादिसू० २०४] इति ते निपात्यते ॥१४०॥

आरेवत्या भव **आरेवतः**; "रेवृङ् गतौ" आरेवन्ते ज्वरा अनेन वा । सारं फलमस्य **सारफलः** ।

**महापारावतो(?ते) महान् ।**
**कपोताण्डतुल्यफलः**

महांश्चासौ पारावतश्च **महापारावतः**, तत्र । महापारावतैकदेशे **महान्** , यथा सेनो भीमसेन । कपोताण्डतुल्यानि फलानि अस्य **कपोताण्डतुल्यफलः** ।

**रुद्राक्षे तु महामुनिः ॥१४१॥**

रुद्रस्य अक्षि **रुद्राक्षः**, "सक्थ्यक्ष्ण-" [सिद्ध०७.३.१२६] इत्यट् ('इति टः) समासान्त., तत्र । मन्यते मुनि, "मनरुदेतौ चास्य वा" [हैमोणादिसू० ६१२] इति इः अकारस्य च उकार, महांश्चासौ मुनिश्च **महामुनिः** ॥१४१॥

१ गुहाशय नि० ॥ २ पारावारे तु साराम्लो रक्तमाल नि० ॥

**स तु चतुर्मुखो ब्रह्मा**

'सः' रुद्राक्षः चतुर्मुखो **ब्रह्मो**च्यते ।

**द्विमुखस्तु वरार्गलः ।**

'तुः' पुनरर्थे । वरा अर्गला अस्य **वरार्गलो** द्विमुख' प्रोच्यते ।

**षण्मुखस्तु कार्त्तिकेयः**

'तु'' पुनरर्थे । षण्मुख' **कार्तिकेय** उच्यते ।

**पञ्चमुखस्तु शङ्करः ॥१४२॥**

'तु' पुन' पञ्चमुखो रुद्राक्ष. **शङ्कर** उच्यते ॥१४२॥

**माधवस्त्वेकवदनो विजयी शस्त्रधारणः ।**

'तु' पुन एकवदनो मा--लक्ष्मीस्तस्या धवो **माधवः ।** विजयोऽस्त्यस्य **विजयी ।** शस्त्रं धारयति **शस्त्रधारणः ।** रुद्राक्षनामानि ।

**पुत्रञ्जीवे त्वक्षफलः कुमार-जीवनामकः ॥१४३॥**

पुत्रं जीवति **पुत्रञ्जीवः,** पृषोदरादित्वान्मोऽन्त', तत्र । अक्षवत् फलान्यस्य **अक्षफलः** । 'कुमारजीवनामक' इति कुमार-जीवाभ्यां पुरो नामेति शब्द. सम्बध्यते, तेन **कुमारनामकः जीवनामकश्च** । पुत्रञ्जीवनामानि ॥१४३॥

**करञ्जे स्यान्नक्तमालः पूतिकश्चिरिबिल्वकः ।**
**करजः श्लीपदारिश्च प्रकीर्णः कलिनाशकः ॥१४४॥**
**पूतिकरञ्जो गौरश्च सुमना घृतपर्णकः ।**

करं जयति **करञ्जः,** "क्वचित्" [ सिद्ध० ५.१.१७१ ] इति डे पृषोदरादित्वात् साधु', करोति वा "कृगोऽञ्ज'" [ हैमोणादिसू० १३६ ] इत्यञ्ज', तत्र । नक्तं--रात्रौ आलम्--अनर्थोऽस्माद् **नक्तमालः,** भूताश्रयत्वात् । **रक्तमालः** इत्येके । **पूतिको** दुर्गन्धः । चिरिणं बिलति--भिनत्ति चिरिबिल्व', "नि-घृ-बी-" [ हैमोणादिसू० ५११ ] इति किद्वः, स्वार्थिके के **चिरिबिल्वकः** । करं जयति **करजः,** "क्वचित्" [ सिद्ध० ५.१.१७१ ] इति ड', कीर्यते वा "उटजादय'" [ हैमोणादिसू० १३४ ] इत्यजे निपात्यते । श्लीपदस्य अरिः **श्लीपदारिः ।** प्रकीर्यते **प्रकीर्णः,** क्तप्रत्ययः । कलिं

१ °श्चिरबि° नि० ॥ २ प्रकीर्य. कलिनाशन. नि० ॥ ३ एके क्षीरस्वाम्यादयः । "रक्तमाल इति स्वामी" इति व्याख्यासुधायाम् ॥ ४ कीडीनगरज पु २ टिप्पणी ॥

नाशयति **कलिनाशकः** । अत एव **कलिमारकः** ॥१४४॥

पूति - दुर्गन्धः स चासौ करञ्जश्च **पूतिकरञ्जः** । **गौरः** श्वेतत्वात् । सुष्ठु मनोऽस्य **सुमनाः** । घृतवन्ति पर्णान्यस्य घृतपर्ण, के **घृतपर्णकः** । यद् **इन्दुः**–

करञ्जो नक्तमालश्च पूतिकश्चिरिबिल्वकः ।
घृतपर्णः करजोऽन्यः प्रकीर्यो गौर एव च ॥
पूतिकरञ्जः सुमनास्तथा कल्हनाशन ।
[ ] इति ।

**अन्योऽपि**—

चिरिबिल्वो नक्तमालः करजश्च करञ्जके ॥
प्रकीर्ये पूतिकरजः पूतिक कलिमारक ।

[ अमर० का० २ वर्ग ४ श्लो० ४७-४८ ] इति ।

करञ्जनामानि । लोके 'करञ्जूयउ' इति प्रसिद्धि ।

**भेदास्त्वस्य त्रयस्तत्र षड्ग्रन्थे हस्तिवारणी ॥१४५॥**

'अस्य' करञ्जस्य त्रयो भेदा । तत्र' भेदत्रिके षड् ग्रन्थयोऽस्य **षड्ग्रन्थः**, पृषोदरादित्वात् साधु , तस्मिन् । हस्तिनं वारयति **हस्तिवारणी** ॥१४५॥

**मर्कट्यां तु कृतमालः उदकीर्यः प्रकीर्यकः ।**

मर्दयति अङ्गपाटनाद् **मर्कटी**, "कपट-" [ हैमोणादिसू० १४४ ] इत्यटे निपात्यते, मर्कि मौत्र', मर्कति वा **मर्कटी**, "दिव्यवि-" [ हैमोणादिसू० १४२ ] इत्यट, स्त्रीलिङ्ग , तस्याम । कृतम् आलम्- अनर्थोऽनेन **कृतमालः** । उत्कीर्यते **उदकीर्यः**, पृषोदरादित्वात् । प्रकीर्यते प्रकीर्य., के **प्रकीर्यकः** ।

**अङ्गारवल्ल्यां शार्ङ्गस्था कासघ्नी करतालिका ॥१४६॥**

अङ्गार इव वल्ल्योऽस्य **अङ्गारवल्ली**, तस्याम् । शार्ङ्गे तिष्ठति **शार्ङ्गस्था**, "स्थापा-स्ना-त्रः-" [ सिद्ध० ५ १ १४२ ] इति क । कासं हन्ति **कासघ्नी** । करं ताडयति करताली, ड-लयोरैक्यात, [ स्वार्थिके के **करतालिका** ] । आह च -

१ °ग्रन्था हस्तिवारुणी नि० ॥

उदकीर्यस्तृतीयोऽन्य' षड्ग्रन्थो हस्तिवारणी ।
अङ्गारवल्ली शार्ङ्गस्था काक( ' स)घ्नी करतालिका ॥

[ ] इति ।

करञ्जभेदा अमी ॥१४६॥

**रोहीतके रोहितको रोही दाडिमपुष्पकः ।**
**रोहेडकः सदापुष्पो रोचनः प्लीहरक्तहा ॥१४७॥**

रोहयति **रोहीतकः**, "रुहं जन्मनि" रोहतीति वा छिन्नप्ररूढत्वात्, "हृ-रुहि-पिण्डिभ्य ईतक'" [ हैमोणादिसू० ७९ ] इतीतक', तत्र । "हृ-श्या-रुहि-शोणि-पलिभ्य इत'" [ हैमोणादिसू० २१० ] इतीते प्रत्यये रोहितः, स्वार्थिके के **रोहितकः** । रोहयत्यवश्यं **रोही**, "णिन् चावश्यका-" [ सिद्ध० ५. ४. ३६ ] इति णिन् । दाडिमपुष्पाणीव पुष्पाण्यस्य दाडिमपुष्प., "उष्ट्रमुखादय:" [ सिद्ध० ३.१.२३ ] इति समास', स्वार्थिके के **दाडिमपुष्पकः** । रोहति रोहेडः, "विहड-कहोड-" [ हैमोणादिसू० १७२ ] इत्यडे निपात्यते, के **रोहेडकः** । सदा पुष्पाण्यस्य **सदापुष्पः** । रोचयति **रोचनः** । प्लीह-रक्ते हन्ति **प्लीहरक्तहा** । **'प्लीहहा रक्तहा'** इत्यपरे । आह च—

रोहितको रोचनकः प्लीहघ्नो रक्तपुष्पक' ।
रक्तघ्नो रोहितो रक्तो रोही दाडिमपुष्पकः ॥

[ ] इति ।

एतस्य लोके 'रोहीडउ' इति प्रसिद्धि' ॥१४७॥

**कट्फले तु सोमवल्कः कैडर्या गोपभद्रिका ।**
**कुम्भी कुमुदिका भद्रा श्रीपर्णी भद्रवत्यपि ॥१४८॥**

कटति—आवृणोति कषायत्वात् क्विपि कट्, इद्दक् फलमस्य **कट्फलः**, तत्र । सोमस्येव वल्कमस्य **सोमवल्कः** । कं -रसमीट्टे-स्तौति **कैडर्यः**, "शिक्या-ऽऽस्या-ऽऽढ्य-" [ हैमोणादिसू० ३६४ ] इति ये निपात्यते, "अविभावितप्रकृति-प्रत्ययार्थोऽयं वा" इति **क्षीरस्वामी** । द्व्यर्थे **कैडर्यः** कट्फलो मदनफलं च । गोपानां भद्रिकेव **गोपभद्रिका** । **कुम्भी** रसाधारत्वात् । कुमुदप्रतिकृतिः **कुमुदिका;** कौ मोदते वा । भद्र

१ रोहकः लि० ॥ २ रोचना लि० ॥

मस्यास्ति **भद्रा,** अभ्रादित्वात् । श्रीयुक्तानि पर्णान्यस्याः **श्रीपर्णी,** सुपर्णत्वात्, "पाक-कर्ण-पर्ण-" [ सिद्ध० २.४.५५ ] इति ङी. । भद्रमस्त्यस्या **भद्रवती,** "तदस्या स्त्यस्मिन्निति मतु" [ सिद्ध० ७.२.१ ] इति मतु । आह च—

कट्फलः सोमवल्कश्च श्रीपर्णी कुमुदा तथा ।
महाकषायोग्रगन्धिः क्षिप्रगर्भः प्रचेतनः ॥
महाकुम्भी च कुम्भीका भद्रा भद्रवतीति च ।
[ ] इति ।

एतस्य लोके 'कायफल' इति प्रसिद्धिः ॥१४८॥

**दाडिमे कुट्टिमः कीरवल्लभः फलषाण्डवः ।**
**करको रक्तबीजश्च**

दाल्यते—भेद्यते **दाडिमः,** "वयिम-खचिमादयः" [ हैमोणादिसू० ३५० ] इतीमे निपात्यते, तत्र । "कुट्टण् कुत्सने च" चकारात् छेदने, कुट्ट्यते **कुट्टिमः,** "कुट्टि-वेष्टि-" [ हैमोणादिसू० ३४९ ] इति इम प्रत्ययः । कीराणां—शुकानां वल्लभः **कीरवल्लभः** । फलं षाण्डव इवास्य **फलषाण्डवः** । किरति कणान् **करकः,** "दृ-कॄ-नॄ-स्- " [ हैमोणादिसू० २७ ] इत्यादिना अक , पुंलिङ्ग । रक्तानि बीजानि अस्य **रक्तबीजः** । आह च -

दाडिमो दालिमः सारः कुट्टिमः फलषाण्डवः ।
स्वाद्वम्लो रक्तबीजश्च करकः शुकवल्लभः ।
[ ] इति ।

एतस्य लोके 'दाडिमसार' इति प्रसिद्धिः ।

**अथौड्रपुष्पे जपा जवा ॥१४९॥**

**ओड्रदेशे** भवम् औड्रम् . "भवे" [ सिद्ध० ६. ३. १२३ ] इत्यण्, तच्च तत् पुष्पं च **औड्रपुष्पम्,** तत्र । जपतीव **जपा,** अच् । जपादित्वाद् वत्वे **जवा** ॥१४९॥

**धातक्यां स्याद् धातुपुष्पी वह्निपुष्प्यग्निपुष्पिका ।**
**ताम्रपुष्पी सुभिक्षा च कुञ्जरा मद्यवासिनी ॥१५०॥**

१ दन्तबीजश्च नि० ॥ २ धातक्यां तु धातुपुष्पी बहुपुष्प्यग्निपुष्पिका । ताम्रपर्णी सुभिक्षा नि० ॥

दधाति **धातकी**, "श्लेष्मातक-" [ हैमोणादिसू० ८३ ] इत्यातके निपात्यते, तत्र । धातुवद् रक्तानि पुष्पाण्यस्या **धातुपुष्पी**, " असत्काण्ड-प्रान्त-शतैकाञ्चः पुष्पात्" [ सिद्ध० २. ४. ५६ ] इति ङी । बर्हिरिव—वह्निरिव पुष्पाण्यस्या **बर्हिपुष्पी** । अग्निरिव पुष्पाण्यस्या अग्निपुष्पी, "असत्काण्ड-प्रान्त-शतैकाञ्चः पुष्पात्" [ सिद्ध० २. ४. ५६ ] इति ङी, स्वार्थिके के **अग्निपुष्पिका** । ताम्रवर्णानि पुष्पाण्यस्याः **ताम्रपुष्पी**, प्राग्वद् ङी । **सुभिक्षा** सुलभा । कौ—पृथिव्यां जीर्यति **कुञ्जरा**, पृषोदरादित्वात् । मद्यस्य पाचनी **मद्यपाचनी** । आह च—

धातकी ताम्रपुष्पी च कुञ्जरा मद्यपाचनी ।
पार्वतीया सुभिक्षा च वह्निपुष्पी च शब्दिता ॥

[ ] इति ।

एतस्य लोके 'धाहुडी' इति प्रसिद्धिः ॥१५०॥

**सल्लक्यां वल्लकी ह्लादा सुवहा सुस्रवा रसा ।**
**अश्वमूत्री कुन्दुरुकी गजभक्षा महेरणा ॥१५१॥**
**गन्धवीरा गन्धकारी सुरभिर्वनकर्णिका ।**

सल्लि सौत्रः, सल्लति **सल्लकी**, "दृ-कृ-नृ-सृ-" [ हैमोणादिसू० २७] इत्यादिना अकः, सत्कृत्य लक्ष्यते—स्वाद्यते गजैरिति वा, तस्याम् । "वल्ल संवरणे" वल्लते **वल्लकी**, " दृ कृ-नृ-सृ-" [ हैमोणादिसू० २७ ] इत्यकः । ह्लादा सन्त्यस्यां **ह्लादा**, अभ्रादित्वादः । सुष्ठु वहति **सुवहा**, अच् । "सुष्ठु स्रवति **सुस्रवा** " इति **वैद्याः** । **रस्यते**—आस्वाद्यते गजैः **रसा** । अश्वस्य मूत्रमस्या **अश्वमूत्री** । कुं—पृथ्वीं द्यति कुन्दुरुः, " गिमु-गेरु-नमेर्वादयः" [ हैमोणादिसू० ८११] इति रुप्रत्यये निपात्यते, स्वार्थिके के **कुन्दुरुकी** । गजैर्भक्ष्यते **गजभक्षा** । महद् ईरणमस्या **महेरणा** ॥१५१॥

गन्धेन वीरा **गन्धवीरा** । गन्धं करोति **गन्धकारी** । "रभुङ् शब्दे" सुष्ठु रम्भते **सुरभिः**, "पदि-पठि " [ हैमोणादिसू० ६०७ ] इति बहुवचनादिः, " आगमशासनमनित्यम्" इति न्यायाद् नागमाभावः । वनस्य कर्णिकेव **वनकर्णिका** । आह च—

१ अश्वमूत्रिः कुन्दरुकी गजभक्ष्या नि० ॥

सल्लकी वल्लकी ह्लादा सुरभिः सुस्रवा रसा ।
अश्वमूत्री कुन्दुरुकी गजभक्षा महेरणा ॥
[ ] इति ।

एतस्या लोके 'सालरि' इति प्रसिद्धिः ।

**एरण्डे तरुणश्चित्रो दीर्घदण्डो व्यडम्बरः ॥१५२॥**
**पञ्चाङ्गुलो वर्धमान आमण्डो रुचको रुचुः ।**
**व्याघ्रपुच्छो व्याघ्रतलश्चञ्चुरुत्तानपत्रकः ॥१५३॥**
**गन्धर्वहस्तकश्चञ्चुरदण्डो हस्तिपर्णकः ।**
**उरुवूको हस्तिकर्णः, शुक्लो रक्तश्च स द्विधा ॥१५४॥**

ईरयति वायुम् **एरण्डः**, "पिचण्डेरण्ड-" [ हैमोणादिसू० १७६ ] इत्यण्डे निपात्यते, तत्र । "तॄ प्लवन-तरणयो" तरति **तरुणः**, "यम्यजि-" [ हैमोणादिसू० २८८ ] इत्युन । "चिंगट् चयने" चीयते **चित्रः**, "चि-मि-दि-" [ हैमोणादिसू० ४५४ ] इति कित् त्र । दीर्घो दण्डोऽस्य **दीर्घदण्डः** । "अड उद्यमे" विपूर्वः, व्यडति **व्यडम्बरः**, "जठर-ककर" [ हैमोणादिसू० ४०३ ] इत्यरे निपात्यते ॥१५२॥

पञ्च अङ्गुल्योऽस्य **पञ्चाङ्गुलः**, अङ्गुलीसदृशपञ्चपत्रावयवत्वात्, "बहुव्रीहेः काष्ठे टः" [ सिद्ध० ७.३.१२५ ] इति ट समासान्तः । वर्धते **वर्धमानः** । "मडुण् भूषायाम्" आमण्डयति **आमण्डः**, अच् । **आरण्ड** इत्येके, दीर्घदण्डत्वात् । रोचते **रुचकः**, "धु-धून्दि-रुचि-" [ हैमोणादिसू० २९ ] इति किदक । [**रुचुः**], "पृ-का-हषि-धृषी-" [ हैमोणादिसू० ७२९ ] इति आदिशब्दात् किदुः । व्याघ्रस्येव पुच्छमस्य **व्याघ्रपुच्छः** । व्याघ्रस्येव तलोऽस्य **व्याघ्रतलः** । "चञ्चू गतौ" चञ्चति **चञ्चुः**, "भृ-मृ-तॄ-त्सरि-" [ हैमोणादिसू० ७१६ ] इत्यु । **चुञ्चुरित्यन्ये** । उत्तानं पत्रमस्य उत्तानपत्र, के **उत्तानपत्रकः** ॥१५३॥

गन्धर्वस्येव हस्तोऽस्य गन्धर्वहस्तः, स्वार्थिके के **गन्धर्वहस्तकः** । चञ्चुरो दण्डोऽस्य **चञ्चुरदण्डः** । हस्तिन पर्णं इव हस्तिपर्णं, के **हस्तिपर्णकः** । उरु वाति **उरुवूकः**, "शम्बूक-शाम्बूक-" [ हैमोणादिसू० ६१ ] इत्यूके निपात्यते । हस्तिनः कर्ण इव **हस्तिकर्णः**, [ स्वार्थिके के **हस्तिकर्णकः** ]। 'स' एरण्डः **शुक्लो रक्तश्च** द्विधा । आह च—

°नि ॥ २ ° रादण्डो नि० ॥

एरण्डस्तरुणः शुक्लश्चित्रो गन्धर्वहस्तकः।
पञ्चाङ्गुलो वर्धमान आरण्डो दीर्घदण्डकः॥
रक्तोऽपरो हस्तिकर्ण. कर्णो व्याघ्रतलो रुचु।
उरुवूको हस्तिपर्णश्चञ्चुरुत्तानपत्रकः॥
[ ] इति।

एतस्य लोके 'एरंड' इति प्रसिद्धिः॥१५४॥

**किम्पाके तु महाकालः काकर्दः काकमर्दकः।**

कुत्सित'–प्राणहर' पाक'–परिणामोऽस्य विषवृक्षत्वात् **किम्पाकः**, तत्र। महांश्चासौ कालश्च **महाकालः**। "अर्द गति-याचनयो" काकम् अर्दति **काकर्दः**, पृषोदरादित्वात्। काकं मर्दयति **काकमर्दकः**। 1

**काम्पिल्यके तु कपिलो रक्ताङ्गो रक्तचूर्णकः॥१५५॥**
**चन्द्राह्वयो रेचनकः कर्कशाह्वः पटोदकः।**

**कम्पिलदेशे** भव' काम्पिल्य, भवेऽर्थे यण्, स्वार्थिके के **काम्पिल्यकः**, तत्र। "कबृङ् वर्णे" कवते **कपिलः**, "स्थण्डिल-कपिल-" [हैमोणादिसू० ४८४] इतीले निपात्यते, कपिलवर्णत्वाद् वा। रक्तमङ्गमस्य **रक्ताङ्गः**। रक्तं चूर्णमस्य रक्त चूर्णः, [स्वार्थिके] के **रक्तचूर्णकः**॥१५५॥

चन्द्रस्य आह्वयोऽस्य **चन्द्राह्वयः**, तेन **चन्द्रः**, ह्लादनत्वात्। रेचयति रेचन, स्वार्थिके के **रेचनकः**। कर्कश इत्याह्वाऽस्य **कर्कशाह्वः**। पटे उदकमस्य **पटोदकः**। यदाह—

काम्पिल्यकोऽथ रक्ताङ्गो रेची रेचनकस्तथा।
रजनो लोहिताङ्गश्च कर्कशो रक्तचूर्णकः॥
[ ] इति।

इन्दुरपि—

कर्कशाख्यः करम्भ. स्यात् स काम्पिल्य' पटोदकः।
[ ] इति।

एतस्य लोके 'कंपीलउ' इति प्रसिद्धिः।

---

१ "महान् कालः–मृत्युरस्माद् महाकाल." इत्यभिधानचिन्तामणिस्वोपज्ञटीकायाम्॥

२ कम्पिल्लके तु काम्पिल्लो रक्ता॰ नि०॥ ३ रोचनक. नि०॥ ४ पटोदय. नि०॥

**कतके छेदनीयोऽम्बुप्रसादनफलः कतः ॥१५६॥**

"कित निवासे" केतति शैतल्यमत्र **कतकः**, णके पृषोदरादित्वात् साधुः, तत्र। छेद्यते मलमनेन **छेदनीयः**, करणेऽनीयः। अम्बुनः प्रसादनं फलमस्य **अम्बुप्रसादनफलः**। केतत्यत्र **कतः**, पृषोदरादित्वात् साधुः। आह च—

कतकश्छेदनीयश्च कतः ऋ(क)तफलं मतम्।
अम्बुप्रसादनफलं श्लक्ष्णं नेत्रविकारहृत्॥
[ ] इति।

एतस्य लोके 'कतकफल' इति प्रसिद्धिः ॥१५६॥

**कर्पास्यां तु समुद्रान्ता बदरी तुण्डिकेर्यपि।**

"डुकृंग् करणे" करोति **कर्पासी**, "कृ-कुरिभ्यां पासः" [हैमोणादिसू० ५८३] इति पासः, "कल्प्यते कर्पासी" इति **क्षीरस्वामी**, तस्याम्। समुद्रे अन्तो यस्याः सा **समुद्रान्ता**। "समुद्र—कण्टकैः कृतरक्षोऽन्तोऽस्याः **समुद्रान्ताः** दूरप्रसराद् वा" इति **क्षीरस्वामी**। "बद स्थैर्ये" बदति **बदरी**, "ऋच्छि-चटि-" [हैमोणादिसू० ३९७] इत्यरः, गौरादित्वाद् ङी। यद् **महेश्वरः**—

बदरी कोलि-कर्पास्योः फले स्याद् बदरं तयोः।
एलापर्ण्यां तु बदरा विष्णुक्रान्तौषधावपि॥
[ ] इति।

"बदराणीव फलानि सन्त्यस्याः बदरी" इत्य**मरटीका**। यन्**माला**—

कर्पासो बदरः प्रोक्तो बादरः पिचुश्चहा।
[ ] इति।

"तुण्डिकान्[१]—नालादीन् ईरयति कण्टकैर्वा **तुण्डिकेरी**" इति **क्षीरस्वामी**। "तुडृ तोडने" तुण्डयते वा **तुण्डिकेरी**, "गतेरादयः" [हैमोणादिसू० ४३२] इति केरे प्रत्यये निपात्यते। एतस्या लोके 'वमनी' इति प्रसिद्धिः।

**सा तु वन्या भारद्वाजी भद्रा चन्दनबीजिका ॥१५७॥**

'तु' पुनरर्थे। 'सा' कर्पासी वने भवा **वन्या**, "भवे" [सिद्ध० ६. ३. १२३] इति यः। भारद्वाजस्येयं **भारद्वाजी**, "तस्येदम्" [सिद्ध० ६. ३. १६०] इत्यण्, "अणञेये-" [सिद्ध० २. ४. २०] इति ङीः। "भारद्वाजसृष्टा" **इत्यागमः**। भन्दते

१ कार्पास्यां नि० ॥ २ ०न् नावादीन् पु १। ०न् तालावादीन् पु २। मूलगतस्तु पाठः पु १ प्रतौ टिप्पित पाठः॥

भद्रा, "भन्देर्वा" [ हैमोणादिसू० ३९१ ] इति रो न लोपश्च । चन्दनबीजप्रतिकृतिः **चन्दनबीजिका**, "तस्य तुल्ये कः संज्ञा-प्रतिकृत्योः" [ सिद्ध० ७.१. १०८ ] इति कः ॥ १५७ ॥

**वन्दायां स्यात् तटरुहा शेखरी पादरोहणी ।**
**वृक्षादनी वृक्षरुहा जयन्ती कामपादपः ॥१५८॥**

वन्द्यते **वन्दा**, भिदादित्वादङ्, तस्याम् । तटे रोहति **तटरुहा**, "नाम्युपान्त्य-" [ सिद्ध० ५. १. ५४ ] इति कः । शेखरोऽस्त्यस्य **शेखरी** । पादे रोहति **पादरोहणी**, अनट् । जन्मना वृक्षमत्ति **वृक्षादनी**, अनट् । वृक्षे रोहति **वृक्षरुहा** । जयति **जयन्ती**, "तॄ-जि-भू-वदि-" [ हैमोणादिसू० २२१ ] इति टिदन्तः । कामस्य पादपः **कामपादपः** । आह च -

वन्दाका स्याद् वृक्षरुहा शेखरी कामवृक्षकः ।
वृक्षादनी तटरुहा कामिन्यङ्घ्रिप्ररोहणी ।

[ ] इति ।

एतस्या लोके 'कामवृक्षा वंन्दा वा' इति प्रसिद्धिः ॥१५८॥

**स तु क्षीरवृक्षभवो नन्दीमुखो जयद्रुमः ।**

'तुः' पुनरर्थे । 'सः' वन्दावृक्षः क्षीरवृक्षे भवति **क्षीरवृक्षभवः** । नन्दी मुखेऽस्य **नन्दीमुखः** । जयस्य द्रुमो **जयद्रुमः** । वन्दाभेदोऽयम् ।

**आटरूषे वृषो वासा वासिका वाजिदन्तकः ॥१५९॥**
**भिषग्माता सिंहमुखः सिंहिका सिंहपर्णिका ।**

आ—समन्ताद् अटति **आटरूषः**, "कोरदूषा-ऽऽटरूष-" [ हैमोणादिसू० ५६१ ] इत्यूषे निपात्यते; "रूषणू रूक्षण-व्याप्त्योः" अटन् रूषयतीति **अटरूषः**, पृषोदरादित्वादित्यपि, तत्र । "वृषू सेचने" वर्षति मधु **वृषः**, "नाम्युपान्त्य-" [ सिद्ध० ५. १. ५४ ] इति कः, पुंस्ययम्, स्त्रियामित्यपरे । वाति—गच्छति श्लेष्मा अनया **वासा**, स्त्रीलिङ्गोऽयम्, "मा-वा-वदि-" [ हैमोणादिसू० ५६४ ] इति सः,

१ तरुरुहा शौरवर्यदरोहिणी । वृक्षादनी वृक्षभक्ष्या जय° नि० ॥ २ द्राक्षादीना वन्दा, वटादीनामपि पु२ टिप्पणी ॥ ३ "रूषण् रूक्षण् व्याप्तौ" अ° पु२ ॥

दन्त्यान्तोऽयम् । "उश्यते-काम्यते वाशेति तालव्यान्तः" इत्यमरः । वासैव वासिका । "उश्यते-काम्यते वाशिका" इत्येके, तालव्यमध्योऽयम् । वाजिनः-अश्वस्येव दन्ता अस्य वाजिदन्तकः ॥१५९॥

भिषजां-वैद्यानां मातेव भिषग्माता । सिंहस्येव मुखमस्य सिंहमुखः । हिनस्ति रोगान् सिंहः, स्वार्थिके के सिंहिका । सिंह इव पर्णान्यस्याः सिंहपर्णी, के सिंहपर्णिका । आहुश्च –

वैद्यमातृ-सिंह्यौ तु वाशिका ।
वृषोऽटरूष· सिंहास्यो वासिका वाजिदन्तक ॥

[ अमर०का० २ वर्ग ४ श्लो०१०३ ] इति ।

अन्योऽपि—

वासिका सिंहकर्णी च वृषो वामा च सिंहिका ।
आटरुष· सिंहमुखी भिषग्माताऽटरूषक. ॥

[ ] इति ।

आटरूषनामानि । लोके 'अरडूसा' इति प्रसिद्धि· ।

**तुम्बुरौ सानुजः सौरः [1]सारसो वनजोऽग्निकः ॥१६०॥**
**तीक्ष्णवल्कस्तीक्ष्णफलस्तीक्ष्णपत्रो महामुनिः ।**

"तुबु अर्दने" तुम्बति तुम्बुरुः, "तुम्बेरुरु" [हैमोणादिसू० ८१७] इति उरु·, तत्र । सानौ जात· सानुजः, "क्वचित्" [ सिद्ध० ५. १. १७१ ] इति ड· । सूरस्याय सौरः, "तस्येदम्" [ सिद्ध० ६. ३. १६० ] इत्यण् । सरसि भवः सारसः, "भवे" [ सिद्ध० ६. ३. १२३ ] इत्यण् । वने जातो वनजः, "क्वचित्" [सिद्ध० ५.१. १७१ ] इति ड· । अग्निरिव अग्निकः, "तस्य तुल्ये क· संज्ञा-प्रतिकृत्योः" [ सिद्ध० ७ १. १०८ ] इति कः ॥१६०॥

तीक्ष्णं वल्कमस्य तीक्ष्णवल्कः । तीक्ष्णानि फलान्यस्य तीक्ष्णफलः । तीक्ष्णानि पत्राण्यस्य तीक्ष्णपत्रः । महांश्चासौ मुनिश्च महामुनिः । आह च—

१ सौरभो वनजोऽन्धक· नि० ॥ २ वनजोऽन्दकः पु १ पु २ ॥

तुम्बुरुः सारस सौरो वनज सानुजोऽग्निकः ।
तीक्ष्णवल्कस्तीक्ष्णफलस्तीक्ष्णपत्रो महामुनिः ॥

[ ] इति ।

लोके एतस्य 'तुम्बुरु' इति प्रसिद्धिः ।

**कदल्यां तु हस्तिविषा रम्भा मोचांशुमत्फला ॥१६१॥**
**काष्ठीला वारणबुसा स्यात् कोलीरस इत्यपि ।**

कदि सौत्रः कद्यते **कदली**, "मृदि-कन्दि" [हैमोणादिसू० ४६५] इत्यलः; केन वायुना दल्यते वा, स्त्रीलिङ्गः, तस्याम् । "के दलमस्यास्तीति वा, इन्नन्तोऽयम्" **इत्यमरटीका** इत्यपि । हस्तिनां विषमिव **हस्तिविषा** । रमन्ते अस्यां **रम्भा**, "गृ-दृ-रमि-" [हैमोणादिसू० ३२७] इति भः; "रभुङ् शब्दे" रभ्यन्ते इति वा । मुञ्चति त्वचं **मोचा** । अंशुमन्ति फलान्यस्या **अंशुमत्फला भानुफला**ख्या ॥१६१॥

ईषद् अष्ठीलमस्या **काष्ठीला**, "अल्पे" [सिद्ध० ३. २. १३६] इत्यनेन ईषदर्थे वर्तमानस्य कुशब्दस्य कादेशः । **काष्ठीरा** इत्यपरे । वारणानां—हस्तिनां बुसः—घासः **वारणबुसा** । **वारणविशेषे**त्येके । कोल्या रस इव रसः—स्वादोऽस्य **कोलीरसः**। आह च—

कदली सुकुमारा च रम्भा भानुफला मता ।
काष्ठीरसश्च निस्सारा मोचा हस्तिबुसा तथा ॥

[ ] इति ।

**अमरो**ऽप्याह—

कदली वारणबुसा रम्भा मोचांशुमत्फला ।
काष्ठीला [ का० २ वर्ग ४ श्लो०११३ ] इति ।

कदलीनामानि । लोके 'केलि' इति प्रसिद्धिः ।

**तगरे कालानुसार्यं वक्राख्यो नहुषो नृपः ॥१६२॥**

"तगु गतौ" तङ्ग्यते **तगरः**, "जठर-ककर" [हैमोणादिसू० ४०३] इत्यरे निपात्यते, तत्र । काले अनुस्रियते **कालानुसार्यम्** ; कालमनुसरति शीतोष्णाभ्यामिति वा । वक्र इत्याख्याऽस्य **वक्राख्यः** । तेन **कुटिलः जिह्म** इत्यादयोऽवसेयाः ।

१ °बुसा स्यात् काली° नि०॥ २ निस्सारो पु २॥ ३ वक्राख्यो मधुरो नृप नि०॥

"णहींच् बन्धने" नह्यति व्याधिं **नहुषः**, "ऋ-पृ-नहि-" [ हैमोणादिसू० ५५७ ] इत्युषः । नॄन् पाति **नृपः** । आह च -

तगरं कुटिलं वक्रं दीनं जिह्मं नतं शिवम् ।
कालानुसार्यमनृजु कुञ्चितं नहुषं नृपम् ॥
[ ] इति ।

पुं-क्लीबलिङ्गा एते । लोकेऽप्येतस्य 'तगर' इत्येव प्रसिद्धिः ॥१६२॥

**तूले नूदं ब्रह्मदारु ब्रह्मण्यं ब्रह्मकाष्ठकम् ।**
**ब्रह्मनिष्ठं च यूपं च क्रमुकं ब्रह्मचारि च ॥ १६३ ॥**

"तूल निष्कर्षे" तूल्यते **तूलम्**, तूलीति **गौडः**, तत्र । "णुदंत् प्रेरणे" नुद्यते **नूदम्**, पृषोदरादित्वात् । ब्रह्मणो दारु **ब्रह्मदारु** । ब्रह्मणि–वैदिके साधु **ब्रह्मण्यम्**, "तत्र साधौ" [ सिद्ध० ७ १.१५ ] इति यः । ब्रह्मणः–वैदिकस्य काष्ठं ब्रह्मकाष्ठम्, स्वार्थिके के **ब्रह्मकाष्ठकम्** । ब्रह्मणो निष्ठाऽत्र **ब्रह्मनिष्ठम्** । यूपप्रतिकृतित्वाद् **यूपम्** । क्रामति **क्रमुकम्**, "क्रमे क्रुम् च वा" [ हैमोणादिसू० ५३ ] इत्युक । ब्रह्म चरतीत्येवंशीलं **ब्रह्मचारि** । आह च—

तूलं नूदं च यूपं च क्रमुकं ब्रह्मकाष्ठकम् ।
ब्रह्मदारु ब्रह्मनिष्ठं ब्रह्मण्य ब्रह्मचारि च ॥
[ ] इति ।

अन्योऽप्याह—

नूदस्तु यूप क्रमुको ब्रह्मण्यो ब्रह्मदारु च ॥
तूलं च [ अमर० का० २ वर्ग ४ श्लो० ४१–४२ ] इति ।

एतस्य लोके 'पद्मनस' इति प्रसिद्धिः ॥१६३॥

**मुष्कके मूषको घण्टा झाटलो मोक्ष-मुश्चकौ ।**
**पाटलिर्गोलिहः क्षारश्रेष्ठः, कृष्णः सितश्च सः ॥१६४॥**

मुष्णाति रोगान् क्षारत्वात् मुष्कः, "विचि-पुषि-" [ हैमोणादिसू० २२ ] इति कित् कः, स्वार्थिके के **मुष्ककः**, तत्र । "मूष स्तेये" मूषति **मूषकः**, णकः प्रत्ययः । हन्यते **घण्टा**, "घटा-घाटा-घण्टादयः" [ हैमोणादिसू० १४१ ] इति टे निपात्यते । झाटं–सङ्घातं लाति **झाटलः**, "क्वचित्" [ सिद्ध० ५. १. १७१ ] इति

१ मोक्षको घण्टा कन्दालो मोक्ष० नि० ॥

कः । मोक्षति-क्षिपति **मोक्षः**; मुञ्चति वा, "मा-वा-वदि-" [ हैमोणादिसू० ५६४ ] इति सः । मुञ्चति **मुञ्चकः** । पाटं–विस्तारं लाति **पाटलिः**, "नाम्युपान्त्य-" [ हैमोणादिसू० ६०९ ] इति बहुवचनात् किदि । गोभिर्लिह्यते **गोलिहः, गोलीढो**ऽपि । क्षारश्चासौ श्रेष्ठश्च **क्षारश्रेष्ठः**। कृष्णोऽयं श्वेतश्च । आह च—

मुष्कको मोक्षको घण्टा मूषको मुञ्चकस्तथा ।
क्षारश्रेष्ठो गोलिहश्च द्विविधः श्वेत-कृष्णकः ॥
[ ] इति ।

एतस्य लोके 'मोषउ' इति प्रसिद्धिः ॥१६४॥

**वंशो यवफलो वेणुः शतपर्वा तृणध्वजः ।**
**मस्करस्त्वचिसारस्त्वक्सार-कर्मार-तेजनाः ॥१६५॥**

वमति **वंशः**, "पा-दा-वमि-" [ हैमोणादिसू० ५२७ ] इति शः; "वन्यते वंशः" इति **क्षीरस्वामी**, तत्र । यवाकारं फलमस्य **यवफलः** । अजन्त्यनेन **वेणुः**, पुंल्लिङ्गः, "अजि-स्था-" [ हैमोणादिसू० ७६८ ] इति णुः । शतं–बहूनि पर्वाण्यस्य **शतपर्वा** । तृणानां ध्वज इव **तृणध्वजः** । माक्रियते–प्रतिषिध्यते अनेन **मस्करः**, वर्चस्कादित्वात् साधु । त्वचि सरति **त्वचिसारः**, "सृ स्थिरे" [पाणिनि० ३.३.१२] इति घञ्, "तत्पुरुषे कृति" [ सिद्ध०३.२.२० ] "बहुलम्" [सिद्ध० ५. १. २. ] इति सप्तम्या अलुक्, लोपे **त्वक्सारः** । कर्म इयर्ति **कर्मारः** । तेजयति **तेजनः** । आह च—

वंशो वेणुर्यवफलः कर्मारस्तृणकेतुकः ।
त्वक्सारः शतपर्वा च मस्करः कीचकस्तथा ॥
[ ] इति ।

एतस्य लोके 'वांसु' इति प्रसिद्धिः ॥१६५॥

**गाङ्गेरुक्यां विश्वदेवा झषा ह्रस्वगवेधुका ।**
**खण्डाऽरिष्टा नागबला खरगन्धनिकेत्यपि ॥१६६॥**

गाङ्गमीरयति पवित्रत्वाद **गाङ्गेरुकी**, "कञ्चुकांशुक-" [ हैमोणादिसू० ५७ ] इत्युके निपात्यते, तस्याम् । विश्वे दीव्यति **विश्वदेवा** । झषति–हिनस्ति गन्धेन **झषा**, अच् । ह्रस्वा–लघ्वी, गवि–जले एधते गवेधुः, "भृ-मृ-तॄ-त्सरि-" [ हैमोणादिसू० ७१६] इति बहुवचनादुः, स्वार्थिके के गवेधुका, गूयते गवेधुका इति वा, "गुड

१ विश्वदेवदेवा ह्रस्वाग्नवेधुका । खण्डारिष्टा नागबला स्वरयन्धनिकेत्यपि ॥ १६६ ॥ नि० ॥
२ ह्रस्वा गवेधुका पु १ पु २ ॥

**ईधुकैधुकौ"** [ हैमोणादिसू० ७४ ] इत्यनेन एधुकप्रत्ययः, हृस्वा चासौ गवेधुका च **हृस्वगवेधुका**। "खजु गतिवैकल्ये" खञ्जत्यनया **खञ्जा**। न रिष्यते अनया **अरिष्टा**। नागानां बलकृद् **नागबला**। खर —कठोरो दुःसहत्वाद् गन्धोऽस्त्यस्याः [१ खरगन्धा, सैव खरगन्धना, स्वार्थिके के] **खरगन्धि(न्धनि)का**। आह च—

गाङ्गेरुकी नागबला खरगन्धनिका रसा।
विश्वदेवा तथाऽरिष्टा खञ्जा हृस्वगवेधुका॥
[ ] इति।

एतस्या लोके 'गांगेटी' इति प्रसिद्धिः ॥१६६॥

**दार्वी दारुहरिद्रायां हरिद्रुः कण्टकेरुका।**
**पीतद्रुमः पीतदारुः पीतनं पीतचन्दनम् ॥१६७॥**
**[२]पर्जनी च कण्टकिनी कालीयकः पचम्पचा।**

दृणाति **दार्वी**, "कृ-वा-पा-जि-" [ हैमोणादिसू० १] इति उण्, गौरादित्वाद् ङीः। **दारुहरिद्रा** पिण्डहरिद्रातोऽन्या, तस्याम्। हरि -पीतो द्रुः—स्कन्धोऽस्य **हरिद्रुः**। कण्टकान् ईर्ते कण्टकेरुः, "भृ-मृ-तृ-त्सरि" [ हैमोणादिसू० ७१६ ] इति बहुवचनादुः, के **कण्टकेरुका**। पीतश्चासौ द्रुमश्च **पीतद्रुमः**। पीतं दारु अस्य **पीतदारुः**। पीतयति **पीतनम्**। पीतं च तच्चन्दनं च **पीतचन्दनम्** ॥१६७॥

पिपर्त्ति रोगेभ्यः **पर्जनी**, "विदन-गगन-" [ हैमोणादिसू० २७५ ] इत्यनेन निपात्यते। कण्टका सन्त्यस्या **कण्टकिनी**। कालयति दोषान् कालीयः, "गयहृदयादयः" [ हैमोणादिसू० ३७० ] इत्ययं निपात्यते, स्वार्थिके के **कालीयकः**। अत्यर्थं पचति **पचम्पचा**। आह च--

हरिद्रा पीतिका पिण्डा रजनी रञ्जनी निशा।
गौरी वर्णवती पीता हरिता वरवर्णिनी॥
अन्या दारुहरिद्राऽपि हरिद्रुः पीतचन्दनम्।
निर्दिष्टा वै कण्टकिनी स च कालेयकः स्मृतः॥
कालीयको दारुनिशा दार्वी-पीतद्रु-पीतिका।
कटङ्कटेरी पर्जन्या पीतदारुः पचम्पचा॥
[ ] इति।

एतस्या लोके 'दारुहल्द' इति प्रसिद्धिः।

---

१ "या पीता कटङ्कटेरिका। नि० ॥ २ पर्जनी कर्कटकिनी काल्यक पच० नि० ॥

**ग्रन्थिपर्णे श्लिष्टपर्णं विकीर्णं शीर्णरोमकम् ॥१६८॥**
**हरितं कुकुरं पुष्पं शुकगुच्छं शुकच्छदम् ।**
**स्थौणेयकं वह्निचूडमारामं ग्रन्थिकाऽपि च ॥१६९॥**

ग्रन्थिप्रधानानि पर्णान्यस्य **ग्रन्थिपर्णम्** । ग्रन्थीन् पिपर्ति वा ग्रन्थिमत्त्वात्, "इणुर्बि-शा-वेणि-" [हैमोणादिसू० १८२] इति णः, तत्र । श्लिष्टानि पर्णान्यस्य **श्लिष्टपर्णम्** । विकीर्यते **विकीर्णम्** । शीर्णानि रोमाण्यस्य **शीर्णरोमकम्** ॥१६८॥

हरति ह्रियते अनेन वा **हरितम्**, "हृ-श्या रुहि-" [हैमोणादिसू० २१०] इति इतः । "कुक वृकि आदाने" कोकते **कुकुरम्**, "श्वशुर-कुकुन्दुर-" [हैमोणादिसू० ४२६] इत्युर निपात्यते । पुष्यति **पुष्पम्**, अच् । शुकस्येव गुच्छोऽस्य **शुकगुच्छम्** । शुकस्येव छदान्यस्य **शुकच्छदम्** । स्थूणाया इदं स्थौणेयम्, "तस्येदम्" [सिद्ध० ६ ३ १६०] इत्येयण, स्वार्थिके के **स्थौणेयकम्** । वह्निरिव चूडा अस्य **वह्निचूडम्** । आरमन्त्यत्र **आरामम्** । "ग्रथुङ् कौटिल्ये" ग्रन्थ्यते ग्रन्थि, "पदि-पठि" [हैमोणादिसू० ६०७] इति इ, स्वार्थिके के **ग्रन्थिका** । "ग्रन्थि इति क्लीबे" इत्यन्ये । ग्रन्थिरत्रास्ति **ग्रन्थिका**, व्रीह्यादित्वादिकः, स्त्रियाम् । क्लीबेऽप्ययम् । यदाह --

ग्रन्थिकं पिप्पलीमूलं ग्रन्थिपर्णकमेषजे ।

[ ] इति ।

आह च—

स्थौणेयकं वह्निचूडं शुकगुच्छं शुकच्छदम् ।
विकीर्णं शुकबर्हं च हरितं शीर्णरोमकम् ॥

[ ] इति ।

एतस्य लोके 'थूणीयउ' इति प्रसिद्धि ॥१६९॥

**स्पृक्कायां ब्राह्मणी पद्मुष्टिका पिशुना वधूः ।**
**समुद्रान्ता मरुन्माला निर्माल्या देवपुत्रिका ॥१७०॥**
**लङ्कोयिका कोटिवर्षा देवी पङ्कजमुष्टिका ।**
**गोमी स्वर्णलतेन्द्राणी मैरुद् माला लता लघुः ॥१७१॥**

---

१ कुकुरं च तथा गुच्छ शुकपुष्प शुकच्छदम् । स्थौणेयकं वह्निचूडा सुगन्ध-ग्रन्थिकावपि ॥१६९॥ नि० ॥ २ लङ्कातिका नि० ॥ ३ मरन्माला नि० ॥

स्पृशति गन्धैः **स्पृक्का,** "निष्क-तुरुष्क-" [हैमोणादिसू० २६] इति के निपात्यते, तस्याम् । ब्रह्मणोऽपत्यमिव **ब्राह्मणी,** "ङसोऽपत्ये" [सिद्ध० ६.१.२८] इत्यण्, "अणञेये-" [सिद्ध० २.४.२०] इति ङीः । पङ्कस्य मुष्टिः **पङ्कमुष्टिः,** के **पङ्कमुष्टिका** । "पिशत् अवयवे" पिशति **पिशुना,** गन्धसूचनात्, "पिशि-मिथि-क्षुधिभ्यः कित्" [हैमोणादिसू० २९०] इति किदुनः । "**वधूः** आशावधूत्वात्" इति **क्षीरस्वामी,** उह्यते **वधूरिति** वा, "वहेर्ध् च" [हैमोणादिसू० ८३२] इति ऊः धश्चान्तादेशः । समुद्रे अन्तो यस्याः सा **समुद्रान्ता** । मरुत्सहिता मालाऽस्याः **मरुन्माला** । निर्गतं माल्यमस्याः **निर्माल्या** । देवानां पुत्री देवपुत्री, के **देवपुत्रिका** ॥१७०॥

"वेञ् तन्तुसन्ताने" लङ्कायामूयते **लङ्कोयिका,** णक प्रत्ययः । कोटिभिर्वर्षति मधु **कोटिवर्षा** । दीव्यति **देवी;** देवपुत्र्या एकदेशो वा **देवी,** यथा सत्या सत्यभामेत्यादिवत् । पङ्कजं मुष्टिरस्याः पङ्कजमुष्टि, के **पङ्कजमुष्टिका** । गावः सन्त्यस्य **गोमी,** "गो" [सिद्ध० ७.२.५०] इति मिन् । स्वर्णस्य लता **स्वर्णलता** । **इन्द्राणी** देवपुत्रीत्वात् । म्रियते **मरुत्,** मारुताख्यात्वात्, "म्र उत्" [हैमोणादिसू० ८८९] इति उत्, मल्यते-धार्यते **माला,** मीयते इति वा "शा-मा-श्या-" [हैमोणादिसू०४६२] इति लः, "**मारुत-स्रगाख्ये** द्वे संज्ञे एते" **इत्यपरैरुक्तत्वात्** । "लांक् दाना-ऽऽदानयोः" लाति लायते वा **लता,** "पृषि-रञ्जि-" [हैमोणादिसू० २०८] इति किदतः । "लघुङ् गतौ" लङ्घते **लघुः,** "रङ्घि-लङ्घि-लिङ्गेर्नलुक् च" [हैमोणादिसू० ७४०] इति उः नकारस्य च लोपः । **इन्द्राद्या आहुः—**

स्पृक्का माला पङ्कमुष्टिर्नीला देवी लता गुरु ।
देवपुत्री च लङ्कोयी सीता पङ्कजमुष्टिका ॥
स्रग् मारुता कोटिवर्षा निर्माल्या सा वधूः स्मृता ॥

[ ] इति ।

**धन्वन्तरिरप्याह—**

स्पृक्का स्पृग् ब्राह्मणी देवी लता लङ्कोयिका मरुत् ।
पङ्कमुष्टिर्देवपुत्री निर्माल्या पिशुना वधूः ॥

[ ] इति ।

स्पृक्कानामानि । लोके 'पीक' इति प्रसिद्धिः ॥१७१॥

**विडङ्गे केरला-ऽमोघा तण्डुलश्चित्रतण्डुला ।**
**भस्मकः कृमिहा जन्तुघातको मृगगामिनी ॥१७२॥**

"विड् आक्रोशे" विडति **विडङ्गम्,** "विडि-विलि-" [हैमोणादिसू० १०१] इति किदङ्गः, विलङ्गति वा, ड-लयोरैक्यमत्र, पुं-क्लीबलिङ्गोऽयम्, स्त्रियां **निघण्टुः,** तत्र । किरति–क्षिपति **केरला,** "मुरलोरल-विरल-केरल-" [हैमोणादिसू० ४७४] इत्यले निपात्यते । न मोघा **अमोघा** । "तडुङ् ताडने" तण्डयते **तण्डुलः,** "कृषि-वृति-चटि-पटि-" [हैमोणादिसू० ४८५] इत्युलः । चित्रास्तण्डुला अस्याः **चित्र-तण्डुला** । भस्मयति **भस्मकः,** पुं-क्लीबलिङ्गोऽयम् । यदाह—

भस्मकं भस्मलग्ने(रोगे)स्याद् विडङ्ग-कलधौतयोः ।

[विश्वलोचन कतृतीय श्लो० १२९] इति ।

कृमीन् हन्ति **कृमिहा** । अत एव जन्तून् घातयति **जन्तुघातकः** । मृगं गच्छतीत्येवंशीला **मृगगामिनी** । आह च—

अथो वेल्लममोघा चित्रतण्डुला ।
तण्डुलश्च कृमिघ्नश्च विडङ्गं पुं-नपुंसकः ॥

[अमर० का० २ वर्ग ४ श्लो० १०६] इति ।

**धन्वन्तरि**रपि—

विडङ्गा जन्तुहन्त्री च कृमिघ्नी चित्रतण्डुला ।
तण्डुल कृमिहाऽमोघा केरला मृगगामिनी ॥

[ ] इति ।

एतस्य लोके 'विडंग' इति प्रसिद्धिः ॥१७२॥

**इन्द्राक्षे ऋषभो वीरः श्रीमान् वृषभनामकः ।**
**धूर्वहो गोपतिः शृङ्गी बन्धुरः पृथिवीपतिः ॥१७३॥**

इन्द्रवद् अक्षाण्यस्माद् **इन्द्राक्षः;** इन्द्रवद् अक्ष्णोति वा, तत्र । "ऋषैत् गतौ" ऋषति **ऋषभः,** "ऋषि-वृषि-लुसिभ्य. कित्" [हैमोणादिसू० ३३१] इति

१ तन्दुल· कृष्णतन्दुल । वेल्लक. कृमिहा नि० ॥ २ धूर्धुरो गो० नि० ॥

किदभः । विशेषेण ईरयति **वीरः** । श्रीर्विद्यतेऽस्य **श्रीमान्** । वृषभस्य नामान्यस्य **वृषभनामकः**, तेन **वृषादयो**ऽपि । धुर वहति **धूर्वहः** । गवां पतिः **गोपतिः** । शृङ्गाणि सन्ति अस्य **शृङ्गी** । बध्नाति **बन्धुरः**, "वाश्यसि-" [ हैमोणादिसू० ४२३ ] इत्युर । पृथिव्या पति **पृथिवीपतिः** । आह च —

ऋषभो धूर्वहो धीरो मातृको वृषभो वृष. ।
विषाणी ककुदीन्द्राक्षो बन्धुरो गोपति स्मृत ॥

[ ] इति ।

एतस्य लोके 'ऋषभु' इति प्रसिद्धि. ॥१७३॥

**ऋद्धौ सिद्धिर्युगं योग्यं रथाङ्गं मङ्गलं वसु ।**
**ऋषिसृष्टा सुखं लक्ष्मीर्वृद्धेरप्याह्वया अमी ॥१७४॥**

"ऋधौट् वृद्धौ" ऋध्नोति **ऋद्धिः**, क्तिप्रत्यय । सिध्यति अस्या **सिद्धिः**, क्तिप्रत्ययान्त । युज्यते अनेन **युगम्**, "वर्षादय क्लीबे" [ सिद्ध० ५.३ २९ ] इति साधु । योजनीयं **योग्यम्**, "शक्तार्हे कृत्याश्च" [सिद्ध० ५ ४ ३५] इति घ्यण् । योगं साधु वा. "तत्र साधौ" [ सिद्ध० ७ १ १५ ] इति य । रथस्य अङ्ग **रथाङ्गम्** । 'मगु गतौ" मङ्गति **मङ्गलम्**, "मृदि-कन्दि " [हैमोणादिसू० ४६५ ] इत्यल । वसत्यत्र **वसु**, "भृ-मृ-तृ-त्सरि " [ हैमोणादिसू० ७१६ ] इत्यु । ऋषिभि सृष्टा **ऋषिसृष्टा** । सुखयति **सुखम्** । लक्ष्यते **लक्ष्मीः**, "लक्षेर्माऽन्तश्च" [ हैमोणादिसू० ७१५ ] इति ई । 'वृद्धेरप्याह्वया अमी' '**वृद्धेः**' ओषधविशेषस्यापि **ऋद्ध्यादी**नि नामानि ज्ञेयानि । आह च—

ऋद्धिर्वृद्धि सुखं सिद्धी रथाङ्गं मङ्गलं वसु ।
ऋषिसृष्टा युगं योग्य लक्ष्मी सर्वजनप्रिया ॥

[ ] इति ।

ऋद्धि-वृद्ध्योर्नामानि । अनयोर्लोके 'ऋद्धि वृद्धि इति प्रसिद्धि ॥१७४ ॥

**पद्मके मालकः पीतरक्तश्चाकश्च सुप्रभः ।**
**सुरभिः शीतवीर्यश्च पाटलः पीतवर्णकः ॥१७५॥**

१ °लं तथा । ऋषिसृष्टसुख नि० ॥ २ पीतो रक्तश्चरुसरुश्यव । सुमन शीत° नि० ॥

पद्मप्रतिकृतिः **पद्मकः**, "तस्य तुल्ये क संज्ञा-प्रतिकृत्योः" [ सिद्ध० ५. १. ५४. ] इति कः, तत्र । मल्ते-दधाति **मालकः**, णकः प्रत्ययः । पीतश्चासौ रक्तश्च **पीतरक्तः** । चरति मनोऽत्र **चारुः**, "मि-वहि-" [ हैमोणादिसू० ७२६ ] इति णिदुः । शोभना प्रभाऽस्य **सुप्रभः** । सुरभते **सुरभिः**, "पदि-पठि-" [ हैमोणादिसू० ६०७ ] इति बहुवचनादिः । शीतं वीर्यमस्य **शीतवीर्यः** । पाटयति **पाटलः**, "मृदि-कन्दि-" [ हैमोणादिसू० ४६५ ] इत्यलः । पीतं वर्णमस्य पीतवर्णः, स्वार्थिके के **पीतवर्णकः** । आह च—

पद्मकं मलयश्चारुः पीतरक्तश्च सुप्रभः ।

[ ] इति ।

एतस्य लोके 'पदमाकु' इति प्रसिद्धिः ॥१७५॥

**कङ्कुष्ठे स्यात् काककुष्ठः पुलकः काकपालकः ।**
**रेचनः शोधनो ह्रासो विडङ्गो रङ्गदायकः ॥१७६॥**

कम् इत्यव्ययं कुत्सायाम्, कुत्सितं कुष्ठमस्य **कङ्कुष्ठः**, तत्र । काकानां कुष्ठमस्मात् **काककुष्ठः** । "पुल महत्त्वे" पोलति **पुलकः**, "धु-धून्दि-रुचि-तिलि-पुलि-" [ हैमोणादिसू० २९ ] इति किदकः । काकानां पालकः **काकपालकः** । रेचयति **रेचनः**, विरेचकत्वात् । शोधयति **शोधनः** । "ह्रस ह्लस रस शब्दे" ह्रस्यते **ह्रासः** । "विड आक्रोशे" वेडति **विडङ्गः**, "विडि विलि-" [ हैमोणादिसू० १०१ ] इति किदङ्गः । रङ्गस्य दायको **रङ्गदायकः** । आह च—

कङ्कुष्ठं काककुष्ठं तु विडङ्गं रङ्गदायकम् ।
रेचकं पुलकं ह्रासं शोधनं काकपालकम् ॥

[ ] इति ।

एवमेते पुं-क्लीबलिङ्गाः । एतस्य लोकेऽपि 'कङ्कुष्ठ' इत्येव प्रसिद्धिः ॥१७६॥

**परूषके स्यादल्पास्थि परुषो नीलपर्णकः ।**
**परापरः पकश्चेरुः परिमण्डल इत्यपि ॥१७७॥**

१ परोपर परश्चेष परि० नि० ॥

"पॄश् पालन-पूरणयो॰" पृणाति परूष॰, "खलि-फलि-" [ हैमोणादिसू० ५६० ] इत्यूष॰, स्वार्थिके के **परूषकः**, तत्र । अल्पमस्थि अस्य **अल्पास्थि** । पृणाति **परुषः**, "ऋ-पॄ-नहि-" [ हैमोणादिसू० ५५७ ] इत्यादिना उष॰ । नीलानि पर्णान्यस्य नीलपर्णः, के **नीलपर्णकः** । परमापिपर्त्ति **परापरः** । "पॄश् पालन-पूरणयोः" पृणाति **परुः**, "रुयर्त्ति-जनि-" [ हैमोणादिसू० ९९७ ] इत्युस् । "चिंगट् चयने" चीयते **चेरुः**, "शिग्रु-गेरु-नमेर्वादयः" [ हैमोणादिसू० ८११ ] इति रौ निपात्यते । परि—सर्वतोभावे मण्डलमस्य **परिमण्डलः**; परिमण्डयति वा, "मृदि-कन्दि-कुन्दि-मण्डि-" [ हैमोणादिसू० ४६५ ] इत्यलः । आह च—

परूषकः परु॰ प्रोक्तो नीलपर्ण॰ परापरः ।
परिमण्डलमल्पास्थि परुषं चापि नामतः ॥

[ ] इति ।

एतस्य लोके 'फरुहा' इति प्रसिद्धिः ॥१७७॥

**खर्जूरं त्वग्रजः पिण्डी निःश्रेणिः स्वादुमस्तकः ।**

"खर्ज मार्जने च" चकाराद् व्यथने, खर्जति **खर्जूरः**, "मी-मसि-पशि-" [ हैमोणादिसू० ४२७ ] इत्यूर , तत्र । [अग्रे जायते **अग्रजः** । ] पिण्डमस्त्यस्य **पिण्डी** । निष्क्रान्ता श्रेणे॰— तरुसमूहाद् **निःश्रेणिः**, उच्चविटपित्वात् । यदाह—

निःश्रेणिरधिरोहिण्यां खर्जूरीपादपेऽपि च ।

[ विश्वलोचने णतृतीये श्लो०६१ ] इति ।

स्त्रीलिङ्ग । स्वादु -मृष्टं मस्तकमस्य **स्वादुमस्तकः** । आह च—

खर्जूरी तु खरस्कन्धा कषाया मधुराऽग्रजा ।
दुष्प्रधर्षा दुरारोहा निःश्रेणिः स्वादुमस्तका ॥

[ ] इति ।

महाखर्जूरिकेयम् ।

**खर्जूरिकायां स्याद् भूमिखर्जूरी काकपर्कटी ॥१७८॥**

१. त्वग्रज॰ नि० ॥ २ °द्पे स्त्रियाम् विश्वलोचने ॥ ३ काककर्कटी नि० ॥

'**खर्जूरिकायां**' खर्जूरीविशेषे 'स्याद्' भवेद् भूमेः खर्जूरी **भूमिखर्जूरी** । काकैः पृच्यते **काकपर्कटी**, "कपट-कीकटादयः" [ हैमोणादिसू० १४४ ] इत्यटे निपात्यते । पिण्डखर्जूरिकेयम् । आह च **मदनपालः**—

बृहत्खर्जूरिका श्रेणी सुफला द्वीपसम्भवा ।
पिण्डखर्जूरिका खर्जूः दुष्प्रधर्षा च कण्टका ॥
अन्या स्कन्धफला स्वाद्वी दुरारोहा मृदुच्छदा ।
भूमिखर्जूरिका काकपर्कटी

[ ] इति ।

अनयोर्लोके 'महाखजूरि' 'पिंडखजूरि' इति प्रसिद्धिः ॥१७८॥

**तले तालो लेख्यपत्रस्तृणराजो ध्वजद्रुमः ।**

तलति—प्रतिष्ठते बहुमूलत्वात् **तलः**, अच् , तत्र । प्रज्ञाद्यणि **तालः** । लेख्यानि पत्राण्यस्य **लेख्यपत्रः** । तृणानां राजा **तृणराजः**, तृणद्रुममध्ये मुख्यत्वात् , "राजन्-सखेः" [ सिद्ध० ७. ३. १०६ ] इत्यट् समासान्तः । ध्वज इव द्रुमेषु **ध्वजद्रुमः** । आह च—

तालो ध्वजद्रुमः पां(³प्रां)शुर्दीर्घस्कन्धो दुरारुहः ।
तृणराजो दीर्घतरुर्लेख्यपत्रो द्रुमेश्वरः ॥

[ ] इति ।

एतस्य लोके 'ताड' इति प्रसिद्धिः । अष्टविधोऽयम् । यदाह—

तालश्चाष्टविधो ज्ञेयो हृद्यः कुष्ठकृमिप्रणुत् ।
पित्ताऽस्रघ्नो रुचिस्वादु वातजिद् बृंहणो गुरुः ॥

[ ]

इत्येतस्य गुणाः ।

**नालिकेरे रसफलो लाङ्गली कूर्चकेसरः ॥१७९॥**

**दाक्षिणात्यो दृढफलो नौलिकेलो लतातरुः ।**

१. ताले तलो लेख्य° मि० ॥ २ "तलति—प्रतिबिम्बति बहुरूपत्वात् तलः" इत्यभिधानचिन्तामणिस्वोपज्ञटीकायाम् ॥ ३. नारिकेरो लता° मि० ॥

नालिकान्—नालयुक्तान् पुष्पादीन् ईरयति **नालिकेरः**, नलति वा, "शतेरादयः" [ हैमोणादिसू० ४३२ ] इति केरे निपात्यते, पुं-स्त्रीलिङ्ग , तत्र । रसमयं फलमस्य **रसफलः** । हलाकारपत्रशाखत्वाद् **लाङ्गली** । कूर्चे केसराण्यस्य **कूर्चकेसरः** ॥१७९॥

दक्षिणस्यां दिशि भवो **दाक्षिणात्यः**, "दक्षिणा-पश्चात्पुरसस्त्यण् " [ सिद्ध० ६. ३. १३ ] इति त्यण् । दृढानि फलान्यस्य **दृढफलः** । नालिकेर इत्यस्य लत्वे **नालिकेलः** । लता चासौ तरुश्च **लतातरुः** । आह च—

नालिकेरो रसफलः सतुङ्ग कूर्चकेसरः ।
लतावृक्षो दृढफलो लाङ्गली दाक्षिणात्यकः ॥

[ ] इति

एतस्य लोके 'नालेर' इति प्रसिद्धिः ।

**पूंगे क्रमुक-गूवाक-खपुरा नीलवल्कलः ॥१८०॥**
**घोण्टा**

"पूगश् पवने" पुनाति **पूगः**, "पू-सुदिभ्यां कित" [हैमोणादिसू० ९३ ] इति किद् गः, तत्र । क्रामति **क्रमुकः**. "क्रमे क्रम् च वा" [हैमोणादिसू० ५३] इत्युक. । "गुंत् पुरीषोत्सर्गे" गुवत्यनेन स्रंसकत्वाद **गूवाकः**, "मवाक-श्यामाक-" [हैमोणादिसू० ३७] इत्याके निपात्यते । "पुरत् अग्रगमने" ख पुरति **खपुरः** । "खानि पृणाति **खपुरः**" इति **क्षीरस्वामी** । पुंलिङ्ग । यद् **गौडः**—

खपुरो लसके भद्रमुस्तके क्रमुकेऽपि च ।

[ ] इति ।

नीलं वल्कलमस्य **नीलवल्कलः** ॥१८०॥

"घुण् घूर्णत् भ्रमणे" घुणति **घोण्टा**. "घटा-घाटा " [ हैमोणादिसू० १४१] इति टे निपात्यते । एतस्य लोके 'सोपारी' इति प्रसिद्धिः ।

**अस्य फलमुद्वेगं**

'अस्य' पूगस्य फलं उद्गतो वेगोऽस्य **उद्वेगम्**, [स्रंसकत्वात्] ।

**चिंक्के तत्र तु चिक्कणम् ।**

---

१ पूगे गूवाक क्रमुकः पूगी च नीलवल्कल ॥१८०॥ एतस्य फल० नि० ॥ २. **चिक्कणे तत्र चिक्कणम्** नि० ॥

'तत्र' इति पूगे 'तु' इति पुनरर्थे, चिनोति **चिक्कम्**, "निष्क-तुरुष्क-" [हैमोणादिसू० २६] इति के निपात्यते ; "चिक्कण् व्यथने" इति **कौशिकः**, चिक्कयति वा **चिक्कम्**, अच्, तस्मिन् । चिनोति **चिक्कणम्**, "चिक्कण-कुक्कण-" [हैमोणादिसू० १९०] इत्यणे निपात्यते । **धन्वन्तरिस्तु** सामान्येनाऽऽह—

स्यात् पूगफलमुद्वेगं खंसि घोण्टाफलं मतम् ।
चिक्कणं वल्कलं चिक्कं गवा मदकरं च तत् ॥

[ ] इति ।

पूगफलनामान्यमूनि । लोके 'फोफल' इति प्रसिद्धि ।

## हिन्ताले तु तृणराजो राजवृक्षो लताङ्कुरः ॥१८१॥

हिनोति- वर्धते **हिन्तालः**, "चात्वाल-कङ्काल-हिन्ताल-" [हैमोणादिसू० ४८०] इत्याले निपात्यते, तत्र । तृणानां राजा **तृणराजः** । वृक्षाणां राजा **राजवृक्षः**, राजदन्तादित्वात् पूर्वनिपात. । लताया अङ्कुर इव **लताङ्कुरः** । एतस्य लोके 'हिन्ताल' इत्येव प्रसिद्धि' ॥१८१॥

## ताल्यां तु मृत्युपुष्पा स्यादेकपत्रफलाऽपि च ।

ताड्यते **ताली**, ऋफिडादित्वाद लत्वम्, **ताडी** इत्यपि, तस्याम् । मृत्युप्रदानि पुष्पाण्यस्या **मृत्युपुष्पा** । एकं पत्रं फलं चास्याः **एकपत्रफला** ।

## केतके तु रजःपुष्पो जम्बूलः क्रकचच्छदः ॥१८२॥

"कित निवासे" केतति वने **केतकः**, णक' प्रत्यय', पुं-क्लीबलिङ्गोऽयम् । यद् **वाचस्पतिः**— "केतकस्तु द्वयो" [ ] इति । रजोयुक्तानि पुष्पाण्यस्य **रजःपुष्पः** । जायते **जम्बूलः**. "दुकूल कुकूल-" [हैमोणादिसू० ४९१] इत्यूले निपात्यते । क्रकचाकाराणि छदान्यस्य **क्रकचच्छदः** ॥१८२॥

## खर्जूर-ताल-खर्जूरी-ताली-हिन्ताल-केतकाः ।
## क्रमुको नालिकेरश्च [1]स्युरेतास्तृणजातयः ॥१८३॥

**खर्जूरः** – बृहत्खर्जूराख्यः, **तालः** – लेख्यपत्रः, **खर्जूरी** – पिण्डखर्जूरिका, अत्रानुक्रमव्यत्ययश्छन्दोभङ्गभयादिति, एवमन्यत्रापि, **ताली**—मृत्युपुष्पा, **हिन्तालः**–

१ स्युरेते तृणपादपाः नि० । अमरेऽपि तृणद्रुमत्वेनैवोल्लेख' ॥

तृणराजः, **केतकः**—क्रकचच्छदः, एषां द्वन्द्वः । **क्रमुकः**— पूगः । **नालिकेरः** प्रतीतः । एताः तृणजातयः 'स्युः' इति भवन्ति, तृणप्रधानवृक्षत्वादिति । आह च—

एते च हिन्तालसहितास्त्रयः ॥
खर्जूरः केतकी ताली खर्जूरी च तृणद्रुमाः ।

[अमर० का०२ वर्ग ५ श्लो०१६९–७०] ॥१८३॥

॥ इति श्रीमद्बृहत्खरतरगच्छे श्रीजिनराजसूरिशिष्यश्रीजयसागरमहोपाध्यायपट्टानुक्रमवाचनाचार्यधुर्यश्रीभानुमेरुगणिशिष्यसमस्तप्रशस्तग्रन्थावलिविचक्षणश्रीज्ञानविमलोपाध्यायशिष्यवाचनाचार्यश्रीश्रीवल्लभगणिविरचितायां श्रीहेमचन्द्राचार्यकृतनिघण्टुशेषटीकायां वृक्षकाण्डः प्रथमः समाप्तः ॥ १ ॥



# २

## [ द्वितीयो गुल्मकाण्डः ]

॥ अर्हम् ॥ अथ द्वितीयं गुल्मकाण्डं व्याख्यायते—

**सिन्दुवारे[1] च निर्गुण्डी सिन्दुको नीलसिन्दुकः[2] ।**
**शीतसहेन्द्रसुरसाविन्द्राणी सिन्दुवारिका ॥१८४॥**

स्यन्दते **सिन्दुवारः**, "द्वार-शृङ्गार-" [हैमोणादिसू० ४११] इत्यारे निपात्यते, "स्यन्दं वृणोति **सिन्दुवारः**, पृषोदरादित्वात्" इति **क्षीरस्वामी**, तत्र। निष्क्रान्ता गुण्डाद्—वेष्टनाद् **निर्गुण्डी**। **निर्गुण्ठी**त्यपि। "स्यन्दौङ् स्रवणे" अन्तस्थीयमध्योऽयम्, स्यन्दते **सिन्दुकः**, "केवयु-भुरण्यु-" [हैमोणादिसू० ७४६] इत्यादिना उप्रत्यये निपात्यते, स्वार्थिके के **सिन्दुकः**। नीलश्चासौ सिन्दुकश्च **नीलसिन्दुकः**। शीतं सहते **शीतसहः**। इन्द्रस्य सुरस—दिव्य इत्यर्थ **इन्द्रसुरसः**। अत एव **इन्द्रो**ऽपि अनिति अनया **इन्द्राणी**। सिन्दुं वृणोति **सिन्दुवारिका**, णके आप्। आह च—

सिन्दुवारः श्वेतपुष्प सिन्दुक सिन्दुवारिका ।
नीलपुष्पः शीतसहो निर्गुण्डी नीलसिन्दुक ॥
[ ] इति ।

**अन्योऽपि**—

अथ सिन्दुक ।
सिन्दुवारेन्द्रसुरसौ निर्गुण्डीन्द्राणिकेत्यपि ॥
[अमर० का० २ व० ४ श्लो० ६८] **इति** ।

एतस्य लोके 'निर्गुण्डी' इति प्रसिद्धि ॥१८४॥

**सा नीला वनशेफाली सुपुष्पा नीलमञ्जरी ।**

'सा' निर्गुण्डी 'नीला' नीलवर्णा वनस्य शेफाली **वनशेफाली**। शोभनानि पुष्पाण्यस्याः **सुपुष्पा**। नीलवर्णा मञ्जर्योऽस्या **नीलमञ्जरी**।

---

१ तु नि० ॥ २ नीलसन्धिक । शीतसहा च सुरसा चेन्द्राणी सिन्दुवारक. ॥१८४॥ नि० ॥

**श्वेता तु श्वेतसुरसा गोलोमी[1] भूतवेश्यपि[2] ॥१८५॥**

'तुः' पुनरर्थे । 'श्वेता' श्वेतवर्णा श्वेतः शोभनश्च रसोऽस्याः **श्वेतसुरसा ।** गोरिव लोमान्यस्या **गोलोमी,** गोलोमशत्वात्, पृषोदरादित्वात् साधुः । गोभिर्लूयते वा **गोलोमी.** "रुक्म-ग्रीष्म" [ हैमोणादिसू० ३४६ ] इति मान्तो निपात्यते । भूतानि विशति-आह्लादयति **भूतवेशी** । आह च-

शेफालिकाऽन्या निर्गुण्डी वनौका नीलमञ्जरी ।
शुक्लाऽन्या श्वेतसुरसा भूतवेशी[3] च कथ्यते ॥

[ ] इति ।

द्वितीया निर्गुण्डीयम् ॥१८५॥

**शेफालिकायां सुवहा निर्गुण्डी नीलिका[4] च सा ।**
**सुरसा रक्तवृन्ता च श्वित्रघ्नी पुष्पवर्षिणी ॥१८६॥**

शेरते शेफा, "शी-शीभ्यां फः" [ हैमोणादिसू० ३१४ ] इति फः, ते अलयोऽस्या **शेफालिका,** तस्याम् । सुष्ठु वहत्यामोदं **सुवहा** । निर्गुण्डयति **निर्गुण्डी,** "गुडण् वेष्टने" । **नीलिका** नीलवर्णा । शोभनो रसोऽस्या **सुरसा** । रक्तं वृन्तमस्या **रक्तवृन्ता** । श्वित्रं-कुष्ठं हन्ति **श्वित्रघ्नी** । पुष्पाणां वर्षः पुष्पवर्षः, स विद्यतेऽस्या **पुष्पवर्षिणी** ॥१८६॥

**सा तु शुक्ला भूतवेशी[5] सत्यनामा बहुक्षमा ।**

'सा' शेफालिका शुक्ला भूतानि विशति--आह्लादयति **भूतवेशी ।** सत्यं नाम अस्याः **सत्यनामा** । बहु क्षमते **बहुक्षमा** ।

**प्रियङ्गौ प्रियकः कङ्गुः प्रियवल्ली प्रिया लता ॥१८७॥**

**विष्वक्सेना गन्धफली कारम्भा फलिनी फली ।**
**गुन्द्रा गोवन्दनी श्यामा गोषाह्वा वर्णभेदिनी[6] ॥१८८॥**

---

१ गोलोमा नि० ॥ २ भूतकेश्यपि पु १, पु २ नि० । यद्यपि टीकादर्शयोः मूलपाठे 'भूतकेशी' इति पाठो वर्तते, किन्तु व्याख्या तु 'भूतवेशी' पाठानुसारिणी वर्तते । अमरादिष्वपि "सिताऽसौ श्वेतसुरसा भूतवेशी" [का० २ वर्ग ४ श्लो० ७२] इत्यादौ 'भूतवेशी' नामैव दृश्यते ॥ ३ भूतकेशी पु २ ॥ ४ नालिका मुना । सुरसा नि० ॥ ५ भूतकेशी सत्यनाम्नी बहु० नि० ॥ ६ पर्णभेदनी नि० ॥

"प्रींगृश् तृप्ति-कान्त्योः" प्रीणाति इति **प्रियङ्गुः**, स्त्रीलिङ्गः, "प्री-कै-पै-नीले-रङ्गुक्" [हैमोणादिसू० ७६१] इत्यङ्गुक्, तत्र । प्रीणाति **प्रियकः**, "कीचक-पेचक-" [हैमोणादिसू० ३३] इत्यके निपात्यते । "कै शब्दे" कायते **कङ्गुः**, "-प्री-कै-पै-नीले-रङ्गुक्" [हैमोणादिसू० ७६१] इत्यङ्गुक् । प्रिया चासौ वल्ली च **प्रियवल्ली** । प्रीणाति **प्रिया**, "नाम्युपान्त्य-" [सिद्ध०५.१.५४] इति कः । लायते **लता**, "पृषि-रञ्जि-" [हैमोणादिसू० २०८] इति "लांक् आदाने" इत्यस्मात् किद् अतः ॥१८७॥

विषूची सेनाऽस्याः **विष्वक्सेना;** विष्वक् सिनोति—सर्वतो बध्नाति वा "सेर्वा" [हैमोणादिसू० २६२] इति विकल्पेन किद् नः प्रत्ययः । गन्धप्रधाना फली **गन्धफली** । ईषद् रम्भा **कारम्भा**, 'अल्पे" [सिद्ध०३.२.१३६] इत्यनेन ईषदर्थे कादेशः । फलति—विशीर्यते **फलिनी**, "श्या-कठि-खलि-" [हैमोणादिसू० २८२] इति बहुवचनादिनः । फलति **फली**, अच् , गौरादित्वाद् ङीः । गुण्ड्यते—क्रीड्यते **गुन्द्रा**, "खुर-क्षुर-" [हैमोणादिसू० ३९६] इति रे प्रत्यये निपात्यते । गवि—भूमौ वन्द्यते **गोवन्दनी** । इन्दुस्तु "**गौः वन्दनी**" इति भिनत्ति । यदाह—

वन्दनी पुष्पशोभना ।
गन्धप्रियङ्गुः कारम्भा लता गौर्वर्णभेदिनी ॥
[ ] इति ।

' **श्यामा** वर्णेन गौरश्यामवर्णा" इति **क्षीरस्वामी** । योषा—स्त्री तस्याः आह्वा अस्या **योषाह्वा** । वर्णं भिनत्तीत्येवंशीला **वर्णभेदिनी,** "अजातेः शीले" [सिद्ध० ५.१ १५४] इति णिन् । आह च—

श्यामा तु महिलाह्वया ।
लता गोवन्दनी गुन्द्रा प्रियङ्गुः फलिनी फली ॥
विष्वक्सेना गन्धफली कारम्भा प्रियकश्च सौ[1] ।
[अमर० का० २ वर्ग ४ श्लो० ५५–५६] इति ।

तथा च—

प्रियङ्गुः प्रियवल्ली च फलिनी कङ्गुनी प्रिया ।
वृत्ता गोवन्दनी श्यामा कारम्भा वर्णभेदिनी ॥
[ ] इति ।

एतस्या लोके 'प्रियंगु' इति प्रसिद्धिः ॥१८८॥

१ अमरे तु 'स' इति पाठ ॥

**मधुयष्ट्यां यष्टीमधुस्तल्लक्षणं मधुस्रवा ।**
**क्लीतकं च नोरजाऽसौ मधुपर्णी मधूलिका ॥१८९॥**

मधुनो यष्टी **मधुयष्टी**, तस्याम् । यष्टीरूपं मधु **यष्टीमधुः** । तल्लक्षयति **तल्लक्षणम्** । मधु स्रवति **मधुस्रवा** । क्लीबत्व तकति–प्रतिहन्ति वृष्यत्वात् **क्लीतकम्**, पृषोदरादित्वात् साधु', **क्लीतक**संज्ञं वा, क्लीबलिङ्ग', स्थलजेयम् । नीरे जाता **नीरजा** । 'असौ' इति मधुयष्टी । मधूनि पर्णान्यस्याः **मधुपर्णी**, "पाक-कर्ण-पर्ण-" [सिद्ध० २ ४.५५] इति डी । **मधूलिका** माधुर्यात् । आह च—

मधुयष्टी च यष्टी च यष्टीमधु मधुस्रवा ।
यष्टीमधूकं मधुकं यष्ट्याह्व मधुयष्टिका ॥
तल्लक्षणं क्लीतनं च क्लीतक क्लीतका च सा ।
स्थलजा जलजाऽन्या च मधुपर्णी मधूलिका ॥
[ ] इति ।

मधुयष्टीनामानि । लोके 'जेठीमधु' इति प्रसिद्धि' ॥१८९॥

**अश्वगन्धायां तुरगी कञ्चुकाऽश्वावरोहकः ।**
**अश्वकन्दो बहुगन्धा पुत्रदा लोककर्ण्यपि ॥१९०॥**

अश्वस्येव गन्धोऽस्या **अश्वगन्धा**, तस्याम् । तुरो गच्छति **तुरगी**, "नाम्नो गम-" [सिद्ध० ५.१.१३१] इति ड । यदाह **श्रीधरः**—

तुरगी त्वश्वगन्धाया तुरगो हय-चित्तयो' ।
[ विश्वलोचन गतृतीये श्लो० ४० ] इति ।

"कचि बन्धने" कच्यते **कञ्चुका**, "कञ्चुकाशुक-" [हैमोणादिसू० ५७] इत्युके निपात्यते । अश्वै. अवरुह्यते अश्वावरोह, स्वार्थिके के **अश्वावरोहकः** । अश्वस्य कन्द' **अश्वकन्दः** । बहुर्गन्धोऽस्या **बहुगन्धा** । पुत्रं ददाति **पुत्रदा** । "कर्णण् भेदे" लोकं कर्णयति **लोककर्णी**, वातहन्त्रीत्वात् । आह च—

अश्वगन्धा वाजिगन्धा कुम्भकोऽश्वावरोहक' ।
वराहकर्णी तुरगी बल्या वाजीकरी मता ॥
[ ] इति ।

१ तुरङ्गी कम्बुका ° नि० ॥ २ कोलकर्ण्यपि नि० ॥

एतस्या लोके 'आसगंधि' इति प्रसिद्धिः ॥१९०॥

**मेषश्रृङ्ग्यामजश्रृङ्गी वर्त्तिका सर्पदंष्ट्रिका।**

मेषस्येव श्रृङ्गाण्यस्याः **मेषश्रृङ्गी**, तस्याम्। अजस्येव श्रृङ्गाण्यस्या **अजश्रृङ्गी**। वर्त्तते वर्तयति वा **वर्त्तिका**, ण्वकः प्रत्ययः। सर्पस्येव दंष्ट्रा अस्याः सर्पदंष्ट्रा, स्वार्थिके के **सर्पदंष्ट्रिका**। आह च **मदनपालः**—

मेषश्रृङ्गी मेण्ढवल्ली सर्पदंष्ट्राऽजश्रृङ्गिका।
[ ] इति।

मेषश्रृङ्गीनामानि। लोके तु 'मीढासिंगी' इति प्रसिद्धिः।

**सैव स्याद् दक्षिणावर्ता वृश्चिकाली विषाणिका ॥१९१॥**
**उष्ट्र-धूमकपुष्पा च काली च विषघातनी।**

'एव' इति निश्चयार्थे। 'सा' मेषश्रृङ्गी 'स्याद्' भवेद् दक्षिणा आवर्ता अस्या **दक्षिणावर्ता**, दक्षिणस्यां दिशि आवर्तते इति वा। वृश्चिकालमिव **वृश्चिकाली**, '**अलम्**' इति वृश्चिककण्टक उच्यते। विषाणानि सन्त्यस्या **विषाणिका**, श्रृङ्गीत्वात् ॥१९१॥

'उष्ट्र-धूमकपुष्पा' इति उष्ट्र-धूमशब्दाभ्यां पर पुष्पशब्दः सम्बध्यते, तेन **उष्ट्रपुष्पा धूमपुष्पा** च। **काली** कालवर्णत्वात्। विषं घातयति **विषघातनी**, अनट्। आह च—

अन्या तु दक्षिणावर्ता वृश्चिकाली विषाणिका।
[ ] इति।

**धन्वन्तरिरप्याह**—

अजश्रृङ्गी मेषश्रृङ्गी सर्पदंष्ट्रा च वर्त्तिका।
द्वितीया दक्षिणावर्ता वृश्चिकाली विषाणिका॥
[ ] इति।

मेषश्रृङ्गीविशेषोऽयम्।

**कर्कटश्रृङ्ग्यां तु श्रृङ्गी नताङ्गी शिशिरेफला ॥१९२॥**
**कर्कटाह्वा महाघोषा वक्रा मञ्जीरशिम्बिका।**

१ °काला वि° नि०॥ २ °पुच्छा च नि०॥ ३ श्रृङ्गी तु कर्कटश्रृङ्ग्यां नता° नि०॥ ४ मञ्जरिशि° नि०॥

कर्कटशब्देन जलचरजीवविशेषः, तदाकाराणि शृङ्गाण्यस्याः **कर्कटशृङ्गी**, तस्याम्। शृणाति **शृङ्गी**, "शृङ्ग-शार्ङ्गादयः" [हैमोणादिसू० ९६] इति गे निपात्यते। नतमङ्गमस्या **नताङ्गी**। शिशिरे फलान्यस्या **शिशिरेफला**, पृषोदरादित्वात् सप्तम्यलोपः ॥१९२॥

कर्कटस्य आह्वा अस्याः **कर्कटाह्वा**। महती चासौ घोषा च **महाघोषा**। **यन्महेश्वरः**—

स्मृता कर्कटशृङ्ग्यां च महाघोषा मनीषिभिः।
[ ] इति।

**वक्रा** कुटिला। मञ्जीर इव शिम्बिरस्या [मञ्जीरशिम्बि, स्वार्थिके के] **मञ्जीरशिम्बिका**। आह च —

शृङ्गी कर्कटशृङ्गी च कुलीरः कर्कटाह्वया।
कुलिङ्गशृङ्गी वक्रा च महाघोषा नताङ्ग्यपि॥
चन्द्रा स्वादु विषाणी च प्रोक्ता च निजमूर्द्धजा।
[ ] इति।

कर्कटशृङ्गीनामानि। लोके तु 'काकडासिंगी' इति प्रसिद्धिः।

**निर्दिग्धिकायां कण्टाली दुःस्पर्शा कण्टकारिका ॥१९३॥**
**व्याघ्री क्षुद्रा दुष्प्रधर्षा धावनी हेमपुष्पिका।**

निर्दिह्यते निर्दिग्धा, स्वार्थिके के **निर्दिग्धिका**, तस्याम्। कण्टैरलति-दीप्यते **कण्टाली**। दुष्टः स्पर्शोऽस्या **दुःस्पर्शा**। कण्टकान् इयर्त्ति कण्टकारी, के **कण्टकारिका** ॥१९३॥

व्याघ्रीव **व्याघ्री**, दुःस्पर्शत्वात्। [क्षुणत्त्यङ्गं **क्षुद्रा**।] "धृषण् शक्तिबन्धे" धर्षणं धर्षः, दुष्टः प्रधर्षोऽस्या **दुष्प्रधर्षा**। धाव्यते **धावनी**, "अनट्" [सिद्ध०५ ३.१२४] इत्यनट्। हेमवर्णानि पुष्पाण्यस्या हेमपुष्पी, के **हेमपुष्पिका**। आह च—

कण्टकारी च दुःस्पर्शा क्षुद्रा व्याघ्री निर्दिग्धिका।
कण्टालिका कण्टकिनी धावनी दुष्प्रधर्षणी॥
[ ] इति।

१ मञ्जरी इव शिम्बिरस्या मञ्जरीशिम्बिका पु १ ॥

अस्या लोके 'रींगणी' इति प्रसिद्धिः ।

**बृहत्यां क्षुद्रा भण्टाकी वार्ताकी राष्ट्रिका कुली ॥१९४॥**
**विशदा सिंह्यनाक्रान्ता महोटिका महत्यपि ।**

कण्टकबाहुल्याद् **बृहती**, तस्याम् । क्षुणत्ति **क्षुद्रा** हिंस्रा, "ऋज्यजि-" [हैमोणादिसू० ३८८] इति किद् रः ; **क्षुद्रवार्ताक्येकदेशे** वा **क्षुद्रा**, यथा सत्या सत्यभामा । "भट भृतौ" भटति **भण्टाकी**, वर्तते **वार्ताकी**, उभावपि "मवाक-श्यामाक-वार्ताक-" [हैमोणादिसू० ३७] इत्याके निपात्येते । "**भण्टाकी** कण्टकार्था वा" इत्यपरः । राष्ट्रमस्त्यस्या **राष्ट्रिका**, "अतोऽनेकस्वरात्" [सिद्ध० ७.२.६] इतीकः । कोलति **कुली**, "नाम्युपान्त्य-" [सिद्ध० ५.१.५४] इति कः ॥१९४॥

**विशदा** श्वेता । हिनस्ति **सिंही**, पृषोदरादित्वात् । न आक्रान्ता **अनाक्रान्ता** । **महोटिके**त्ययमव्युत्पन्नः शब्दः । **महती** वृद्धा । आह च --

बृहती सिंह्यनाक्रान्ता वार्ताकी राष्ट्रिका कुली ।
विशदा स्थूलभण्टाकी महती तु महोटिका ॥
[ ] इति ।

**भागुरि**स्तु द्वयोर्बृहतीत्वं मन्यते । यत् **शाश्वतः** —

क्षुद्रायां क्षुद्रवार्ताक्या बृहती छन्दसि क्वचित् ।
[श्लो० ४२०] इति ।

एतस्या लोके 'वृद्धरींगणी' 'डोल्हरी' इति प्रसिद्धिः ।

**विदार्यां तु स्वादुकन्दा पुष्पकन्दा शृगालिका ॥१९५॥**
**वृक्षादनी चर्मकषा कूष्माण्डी चाऽश्ववल्लभा ।**
**बिडालिका वृक्षपर्णी**

विदारयति **विदारी**, अच्, गौरादित्वाद् ङी., "विदार्य भक्ष्यते **विदारी**" इति **क्षीरस्वामी**, पृषोदरादित्वात्, तस्याम् । स्वादुः--मृष्टः कन्दोऽस्याः **स्वादुकन्दा** । पुष्पाकारः कन्दोऽस्याः **पुष्पकन्दा** । सृजति रसं **शृगाली**, "चात्वाल-कङ्काल-" [**हैमोणादिसू०** ४८०] इत्याले निपात्यते, के **शृगालिका** ॥१९५॥

वृक्षमत्ति **वृक्षादनी**, अनट् । चम कषति **चर्मकषा** । कुष्णाति कुष्यते वा **कूष्माण्डी**, "पिचण्डैरण्ड-" [हैमोणादिसू० १७६] इत्यण्डे निपात्यते । अश्वानां

१ क्षुद्रभण्टाकी नि० ॥ २ विशदः नि० ॥ ३ ° षा भूकूष्माण्डयश्च ° नि० ॥

वल्लभा **अश्ववल्लभा** । "विड आक्रोशे" वेडति विड्यते वा विडाली , "कुलिपिलि-" [हैमोणादिसू० ४७६] इति किदालः, के **विडालिका** । वृक्ष इव पर्णान्यस्या **वृक्षपर्णी** । आह च—

विदारिका मता शुक्ला स्वादुकन्दा सृगालिका ।
वृक्षकन्दा विदारी च वृक्षवल्ली विडालिका ॥

[ ] इति ।

एतस्या लोके 'विदारि' इति प्रसिद्धिः ।

**महाश्वेताऽपरा तु सा ॥१९६॥**

**क्षीरशुक्ला क्षीरकन्दा क्षीरवल्ली पयस्विनी ।**
**ऋक्षगन्धेक्षुगन्धेक्षुवल्ली क्षीरविदारिका ॥१९७॥**

'तुः' पुनरर्थे । 'सा' विदारी 'अपरा' अन्या महती चासौ श्वेता च **महाश्वेता** ॥१९६॥

क्षीरेण शुक्ला **क्षीरशुक्ला** । क्षीरप्रधान. कन्दोऽस्या. **क्षीरकन्दा** । क्षीरस्य वल्ली **क्षीरवल्ली** । पयोऽस्त्यस्या **पयस्विनी** । ऋक्षान् गन्धयति—अर्दयति **ऋक्षगन्धा** । इक्षोरिव गन्धोऽस्या. **इक्षुगन्धा** माधुर्यात् । इक्षोर्वल्लीव **इक्षुवल्ली** । क्षीरप्रधाना विदारी क्षीरविदारी, स्वार्थिके के **क्षीरविदारिका** । आह च---

अन्या क्षीरविदारी स्याद् ऋक्षगन्धेक्षुवल्ल्यपि ।
क्षीरकन्दा क्षीरयुक्ता क्षीरवल्ली पयस्विनी ॥

[ ] इति ।

क्षीरविदारिकेयम् ॥१९७॥

**पृष्णिपर्णी पृथक्पर्णी लाङ्गली क्रोष्टुपुच्छिका ।**
**शृगालविन्ना कलशिर्धृतिला धावनी गुहा ॥१९८॥**
**सिंहपुच्छी चित्रपर्ण्यहिपर्णी तिलपर्ण्यपि ।**

पृष्णिरिव पर्णान्यस्या **पृष्णिपर्णी सूक्ष्मपर्णा** वा, यदाह —"पृष्णि(श्निः)रल्पतनौ" [अमर० का० २ वर्ग ६ श्लो० ४८], तस्याम् । पृथक् पर्णान्यस्याः

---

१ ऋष्यग⁰ नि० ॥ २ पृश्निपर्णी नि० । हैमोणादौ 'पृष्णि'शब्दः स्वीकृतोऽस्ति । पाणिन्युणादौ अमरादौ च 'पृश्नि'शब्द स्वीकृतोऽस्ति ॥

**पृथक्पर्णी** । "लगु गतौ" लङ्गति **लाङ्गली**, "नहि-लङ्गेर्दीर्घश्च" [ हैमोणादिसू० ४६६ ] इत्यालः । क्रोष्टोरिव पुच्छमस्या. क्रोष्टुपुच्छी, के **क्रोष्टुपुच्छिका** । अत एव क्रोष्टुभिर्विन्ना दत्तेव **क्रोष्टुविन्ना** इत्यपि । शृगालैर्विन्ना—दत्तेव **शृगालविन्ना** । **कलशिः** गर्गरीव । धृतिलत्वाद धृतिं लाति **धृतिला**, "क्वचित्" [ सिद्ध० ५. १. १७१ ] इति डः । धावति—प्रसरति **धावनी**, "ग्वसि-रसि-" [ हैमोणादिसू० २६१ ] इत्यादिवचनादनः । 'गुहौग् सवरणे" गूहति रसं **गुहा**, "तुदादि-विषि-गुहिभ्यः कित्" [ हैमोणादिसू० ५ ] इति किदः ॥१९८॥

सिंहस्येव पुच्छमस्या. **सिंहपुच्छी** । लोकोक्त्या **सिंहपुच्छकः** । चित्राणि पर्णान्यस्या **चित्रपर्णी** । अंह्रे—बुध्नादारभ्य पर्णान्यस्याः **अंह्रिपर्णी** । तिलवत् स्निग्धानि पर्णान्यस्याः **तिलपर्णी** । आह च —

पृष्णि('श्नि)पर्णी पृथक्पर्णी चित्रपर्ण्यंह्रिपर्णिका ॥
क्रोष्टुविन्ना सिंहपुच्छी कलशिर्धावनी गुहा ।

[ अमर० का० २ वर्ग ४ श्लो० ९२–९३ ] इति ।

तथा च---

पृष्णि('श्नि)पर्णी पृथक्पर्णी कलशिर्धावनी गुहा ।
शृगालविन्ना धृतिला पर्णी क्रोष्टुकपुच्छिका ॥
ब्रह्मपर्णीति विख्याता वृष्णित्वा[द्] विष्णुपर्णिका ।

[ ] इति ।

पृष्णिपर्णीनामानि । [1]* लोके तु 'पीठवनी' इति प्रसिद्धिः ।

**गोक्षुरे स्थलशृङ्गाट-वनशृङ्गाट-गोखुराः ॥१९९॥**
**कण्टी षडङ्गो गोकण्टस्त्रिकण्टस्त्रिककण्टकः ।**
**इक्षुगन्धा व्यालदंष्ट्रः श्वदंष्ट्रः स्वादुकण्टकः ॥२००॥**
**पलङ्कषा कण्टफलः षडन्तो भूक्षुरः क्षुरः ।**

गा' क्षुरति—व्यथयति **गोक्षुरः**, तत्र । स्थलस्य शृङ्गाट. स्थलशृङ्गमटति वा **स्थलशृङ्गाटः** । वनस्य शृङ्गाटो **वनशृङ्गाटः** । गवां खुरो वेधकत्वाद् **गोखुरः** ॥१९९॥

१. पु २ प्रति. * फुल्लिकाचिह यावदेव लिखिता वर्त्तते । अग्रेऽपूर्णेति । २ षडङ्गो गोकण्टस्त्रिकण्टस्तु त्रिकस्त्रिकः । नि० ॥ ३ षडङ्गस्तूक्षुर' नि० ॥

कण्टाः सन्त्यस्य **कण्टी** । षड् अङ्गान्यस्य **षडङ्गः** । गवां कण्टो **गोकण्टः** । त्रयः कण्टा अस्य **त्रिकण्टः** । त्रिकं कण्टकानामस्य **त्रिककण्टकः** । इक्षोर्गन्ध इव गन्धोऽस्याः **इक्षुगन्धा** । व्यालस्येव दंष्ट्राऽस्य **व्यालदंष्ट्रः** । शुनो दंष्ट्रेव हिंस्रत्वात् **श्वदंष्ट्रः** । स्वादवः–मृष्टाः कण्टका अस्य **स्वादुकण्टकः** ॥२००॥

पलं मांसं कषति **पलङ्कषा** । कण्टप्रधानं फलमस्य **कण्टफलः** । षड् अन्ता यस्य स **षडन्तः** । भुवः क्षुर इव **भूक्षुरः** । क्षुरति **क्षुरः** । आह च—

गोक्षुरः स्याद् गोक्षुरको भक्षटः स्वादुकण्टकः ।
गोकण्टको भक्षटकः षडन्तः क्षुरकः क्षुरः ॥
गोकण्टो गोखुरः कण्टी षडङ्गस्त्रिकटस्त्रिकः ।
त्रिकण्टकः कण्टफलः श्वदंष्ट्रो व्यालदंष्ट्रकः ॥

[ ] इति ।

गोक्षुरनामानि । लोके 'गोखरू' इति प्रसिद्धिः ।

**दन्त्यां शीघ्रोपशल्योपचित्रोदुम्बरपर्णिका ॥२०१॥**
**मकूलको रामदूती निकुम्भो घुणवल्लभा ।**

दन्ताभत्वाद् **दन्ती**, दाम्यन्त्यनया वा दोषाः "दम्यमि-" [ हैमोणादिसू० २०० ] इति तः, तस्याम् । श्यायते **शीघ्रा**, "खुर-क्षुर-" [ हैमोणादिसू० ३९६ ] इति रे निपात्यते । उपशल्यति **उपशल्या**, "स्था-छा-मा-सा" [ हैमोणादिसू० ३५७ ] इति यः । उप–समीपे चित्राण्यस्या **उपचित्रा** । उदुम्बर इव पर्णान्यस्या उदुम्बरपर्णी, के **उदुम्बरपर्णिका** ॥२०१॥

"मकुङ् मण्डने" मङ्कते चित्रत्वाद् मकूलः, "दुकूल-कुकूल-" [ हैमोणादिसू० ४९१ ] इत्यूले निपात्यते, स्वार्थिके के **मकूलकः** । रामस्य दूतीव **रामदूती** । नियतः कुम्भो **निकुम्भः** । घुणानां वल्लभा **घुणवल्लभा** । आह च—

दन्ती शीघ्रा निकुम्भा स्यादुपचित्रा मकूलकः ।
तथोदुम्बरपर्णी च विशल्या च घुणप्रिया ॥

[ ] इति ।

दन्तीनामानि । लोके तु 'दांती' इति प्रसिद्धिः ।

१ शीघ्रा विशल्या च चित्र° नि० ॥

**नागदन्त्यां हस्तिदन्ती वारुणी गजचिर्भिटी ॥२०२॥**
**मृगादनी मृगेर्वारुर्मृगाक्षी तु गजस्फुटा ।**
**श्वेतपुष्पी मधुपुष्पी पर्वपुत्री विषौषधी ॥२०३॥**

नागस्य दन्ती **नागदन्ती,** तस्याम् । हस्तिनो दन्ती **हस्तिदन्ती** । वरुणस्येयं **वारुणी,** "तस्येदम्" [ सिद्ध० ६ ३. १६० ] इत्यण् । गजस्य चिर्भिटीव **गजचिर्भिटी** ॥२०२॥

मृगैरद्यते **मृगादनी,** "अनट्" [ सिद्ध०५. १.१२४ ] इत्यनट् । मृगस्य ईर्वारुरिव **मृगेर्वारुः** । मृगमक्ष्णोति **मृगाक्षी** । गजानां स्फुटा **गजस्फुटा** । श्वेतानि पुष्पाण्यस्याः **श्वेतपुष्पी** । मधूनि पुष्पाण्यस्याः **मधुपुष्पी,** "असत्काण्डप्रान्त-" [ सिद्ध० २. ४. ५६ ] इति ङी । पर्वाणां पुत्रीव **पर्वपुत्री** । विषस्य ओषधी **विषौषधी** । दन्तीविशेषोऽयम् ॥२०३॥

**अपामार्गे स्वधःशल्या किणिही खरमञ्जरी ।**
**धामार्गवः शैखरिको वशिरः कपिपिप्पली ॥२०४॥**

**कपिवल्ली मर्कटिका शिखर्याघाट-दुर्ग्रहौ ।**
**प्रत्यक्पुष्पी पत्रपुष्पी केशवल्ली मयूरकः ॥२०५॥**

अपकृष्टः आ—समन्तान्मार्गोऽस्य **अपामार्गः,** तत्र । अधः शल्यमस्या **अधःशल्या** । किणिनो जिहीते—याति **किणिही,** स्पर्शात् किणोत्पादनात् । खरा मञ्जर्योऽस्य **खरमञ्जरी** । धाम इयर्ति **धामार्गवः,** "कैरव-भैरव-" [ हैमोणादिसू० ५१९ ] इत्यवे निपात्यते । "अधर्मं मार्गं वाति न धाम अर्कति वेति [**अधामार्गवः**], पृषोदरादित्वात्" इति क्षीरस्वामीति । अयमपि द्व्यर्थे—**अधामार्गवो**ऽपामार्गः कोशातकी च । शिखरे भवः **शैखरिकः,** "भवे" [ सिद्ध० ६.३. १२३ ] इति इकण् । "वशक् कान्तौ" उश्यते **वशिरः,** मध्यतालव्यः, "स्थविर-पिठिर-" [ हैमोणादिसू० ४१७ ] इतीरे निपात्यते । कपीनां पिप्पली **कपिपिप्पली** ॥२०४॥

कपीनां वल्ली **कपिवल्ली** । मर्कि सौत्रः, मर्कति मर्कटी, "दिव्यवि-" [ हैमोणादिसू० १४२ ] इत्यट., स्वार्थिके के **मर्कटिका;** मर्कटाः सन्त्यस्यामिति

१ °णी चापि चि° नि० ॥ २ °क्षी भुजगस्फटा । श्वेतपुष्पा मधुपुष्पा पर्वपुष्पा विषौषधिः ॥ २०३ ॥ नि० ॥ ३ °शल्य. नि० ॥

वा, तेषां प्रियत्वात्, "अतोऽनेकस्वरात्" [सिद्ध० ७.२.६] इतीकः । शिखरोऽस्त्यस्य **शिखरी** । आघटन्ते कफयोऽत्र **आघाटः** । दुःखेन गृह्यते **दुर्ग्रहः**; दुष्टो ग्रहोऽस्य वा । प्रत्यञ्चि पुष्पाण्यस्याः **प्रत्यक्पुष्पी** । **प्रत्यक्पर्ण्यपि** । पत्राण्येव पुष्पाण्यस्य **पत्रपुष्पी** । केशानां वल्ली **केशवल्ली** । **केशपर्ण्यपि** । मयूरप्रतिकृतिर्मयूरकः, "तस्य तुल्ये कः संज्ञा-प्रतिकृत्योः" [सिद्ध० ७.१ १०८] इति कः । आह च—

अपामार्गश्च शिखरी प्रत्यक्पुष्पी मयूरकः ।
अधःशल्याऽथ किणिही दुर्ग्रहः खरमञ्जरी ॥
स एवोक्तः शैखरिको मर्कटी दुरतिग्रहः ।
पत्रपुष्पी च वशिरः कुटो मर्कटपिप्पली ॥

[धन्व० वर्ग ५ श्लो० २६०-६१] इति ।

तथा च—

अपामार्गः शैखरिको धामार्गव-मयूरकौ ॥
प्रत्यक्पर्णी [कीशपर्णी] किणिही खरमञ्जरी ।

[अमर० का० २ वर्ग ४ श्लो० ८८–८९] इति ।

अपामार्गनामानि । लोके तु 'आझाझाडा' इति प्रसिद्धिः ॥२०५॥

**आर्द्रके तु शृङ्गबेरं कटुभद्रं कटूत्कटम् ।**
**शुण्ठी महौषधं विश्वा नागरं विश्वभेषजम् ॥२०६॥**

"अर्द गति-याचनयोः" अर्दते आर्द्रम्, "चि-जि-शु-सि-" [हैमोणादिसू० ३९२] इति रो दीर्घश्च, आर्द्रमेव **आर्द्रकम्**, पुं-क्लीबलिङ्गः, तत्र । शृणाति रसनां **शृङ्गबेरम्**, "शतेरादयः" [हैमोणादिसू० ४३२] इति बेरे निपात्यते । कटुः—क्षारः भद्रोऽस्य तत् **कटुभद्रम्** । कटुषु उत्कटम् **कटूत्कटम्** । शुण्ठति—शुष्यति **शुण्ठिः**, "किलि-पिलि-" [हैमोणादिसू० ६०८] इति इः, ङ्यां **शुण्ठी** । महच्च तदौषधं च **महौषधम्** । "विशंत् प्रवेशने" विशति दोषान् **विश्वा**, स्त्री-क्लीबलिङ्गः, "निघृषि-" [हैमोणादिसू० ५११] इति किद् वः । **नगराख्ये** देशे भवं **नागरम्**, "भवे" [सिद्ध० ६. ३ १२३] इत्यण्, "गॄत् निगरणे" न न गिरति कफमिति वा, नखादित्वात् साधु, पृषोदरादित्वाद् दीर्घः । विश्वस्य भेषजं **विश्वभेषजम्**, अनेकदोषजित्वात् । आह च—

शुण्ठी महौषधं विश्वा नागरं विश्वभेषजम् ।
विश्वौषधं शृङ्गवेरं कटुभद्रं तथाऽऽर्द्रकम् ॥
[ धन्व० वर्ग० २ श्लो० ८२ ] इति ।

शुण्ठीनामानि । लोके तु 'सूंठि' इति प्रसिद्धि. ॥२०६॥

**पुनर्नवायां वृश्ची च दीर्घपत्रः शिलाटकः ।**
**विशाखः क्षुद्रवर्षाभूः कटिल्लः प्रावृषायणी ॥२०७॥**
**शोफघ्नी च**

पुनर्नवेव **पुनर्नवा**, विशेषत्वात् । "ओव्रस्चोत् छेदने" दन्त्योपान्त्योऽयम् "सस्य श-षौ" [ सिद्ध० १ ३. ६१ ] इति शे "ग्रह-व्रस्च-" [ सिद्ध० ४. १. ८४ ] इति य्वृति वृश्चति **वृश्ची** । दीर्घाणि पत्राण्यस्य **दीर्घपत्रः** । शिलामटति **शिलाटकः** । विशाखति—व्याप्नोति **विशाखः**, अच् । क्षुद्रश्चासौ वर्षाभूश्च **क्षुद्रवर्षाभूः** । कटति–गच्छति **कटिल्लः**, "भिल्ला-ऽच्छभल्ल-" [ हैमोणादिसू० ४६४ ] इति ले निपात्यते । प्रावृषि भवा **प्रावृषायणी** ॥२०७॥

शोफं हन्ति **शोफघ्नी**, टक् । आह च—

पुनर्नवा विशाखश्च कटिल्ल. शशिलाटकः ।
वृश्वी च क्षुद्रवर्षाभूर्दीर्घपत्र. कटिल्लकः ॥
[ धन्व० वर्ग १ श्लो० २७४] इति ।

तथा चाऽमरः—

पुनर्नवा तु शोफघ्नी [ का० २ वर्ग ४ श्लो० १४९ ] इति ।
पुनर्नवानामानि । लोके तु 'साटहडा' इति प्रसिद्धिः ।

**अपरा त्वेषा क्रूरा मण्डलपत्रकः ।**
**श्वेतमूला महावर्षाभूर्वर्षाकेतुरित्यपि ॥२०८॥**

'तुः' पुनरर्थे । 'एषा' पुनर्नवा 'अपरा' अन्या कृन्तति **क्रूरा**, "कृतेः क्रू-कृच्छ्रौ च" [ हैमोणादिसू० ३९५ ] इति सूत्रेण "कृतैत् छेदने" इत्यस्माद् रः प्रत्ययोऽस्य च क्रू इत्यादेश । मण्डलाकाराणि पत्राण्यस्य मण्डलपत्रः, के **मण्डलपत्रकः** । श्वेतं मूलमस्याः **श्वेतमूला** । महती चासौ वर्षाभूश्च **महावर्षाभूः** । वर्षाणां केतुरिव **वर्षाकेतुः** । आह च—

१ वृश्चीरो दीर्घपत्रा शिलाटिका मि० ॥ २ क्रमण्ड० मि० ॥ ३ ०वर्षकेतु ० मि० ॥

पुनर्नवाऽपरा क्रूर सद्योमण्डलपत्रक ।
श्वेतमूलो वर्षकेतुर्महावर्षाभूरुच्यते ॥

[धन्व० वर्ग १ श्लो० २७६] इति ।

एतस्या लोके 'साटहडी' इति प्रसिद्धिः ॥२०८॥

**ज्योतिष्मत्यां स्वर्णलता दुर्मदा लवणाऽग्निभा ।**
**पारावतपदी पण्या ज्योतिष्का कटभीत्यपि ॥२०९॥**

ज्योतिर्विद्यतेऽस्याः **ज्योतिष्मती,** तस्याम् । स्वर्णस्य लतेव **स्वर्णलता** । दुष्टो मदोऽस्याः **दुर्मदा** । लुनाति जाड्यं **लवणा,** नन्द्यादित्वादनः । अग्निवद् भा–दीप्तिरस्याः **अग्निभा** । पारावतस्येव पदा अस्या **पारावतपदी** । अत एव **पारावतांह्रिः** । पणे साधुः **पण्या,** "स्तुत्या" इति **क्षीरस्वामी** । द्योतते ज्योतिः, "द्युतेरादेश्च ज" [हैमोणादिसू० ९९१] इतीस्, तदेव **ज्योतिष्का** । "कटति–आवृणोति **कटभी**" इति **क्षीरस्वामी,** "कॄ-शॄ-गॄ-शलि-" [हैमोणादिसू० ३२९] इत्यभः । आह च—

ज्योतिष्मती तु कटभी स्यात् सुवर्णलतेति च ।
ज्योतिष्का चाग्निभा सा च लवणोदा च दुर्दिना ॥

[धन्व० वर्ग १ श्लो० २६७] इति ।

द्व्यर्थे **पारावतपदी**–काकजङ्घा ज्योतिष्मती च ।

**अमरो**ऽप्याह—

पारावतांह्रि कटभी पण्या ज्योतिष्मती लता ।

[का० २ वर्ग ४ श्लो० १५०] इति ।

ज्योतिष्मतीनामानि । लोके तु 'मालकांगुणी' इति प्रसिद्धिः ॥२०९॥

**माषपर्ण्यामार्द्रमाषा मांसमाषा महासहा ।**
**अश्वपुच्छी सिंहवृन्ता काम्बोजी कृष्णवृन्तिका ॥२१०॥**

माष इव पर्णान्यस्या **माषपर्णी,** तस्याम् । आर्द्रा चासौ माषा च **आर्द्रमाषा** । मांसोपलक्षिता माषा **मांसमाषा** । **महासहेति** मुद्गपर्ण्याः सहाया भिन्नेयम् । अश्व-

१ ०ता कङ्गुनी लव० नि ॥ २ माषपर्ण्यां सूर्यपर्णी पाण्डुश्चापि महासहा । अश्वपुच्छा सिं० ॥

पुच्छाकृतित्वाद् **अश्वपुच्छी** । सिंहाकारं वृन्तमस्याः **सिंहवृन्ता** । **कम्बोजदेशे भवा काम्बोजी** । कृष्णं वृन्तमस्याः **कृष्णवृन्तिका** । आह च —

माषपर्णी तु काम्बोजी कृष्णवृन्ता महासहा ।
आर्द्रमाषा सिंहवृन्ता मांसमाषाऽश्वपुच्छिका ॥

[ धन्व० वर्ग १ श्लो० १३६ ] इति ।

माषपर्णीनामानि । लोके तु 'माषवनी' इति प्रसिद्धिः ॥२१०॥

**मुद्गपर्ण्यां काकमुद्रा वर्णा मार्जारगन्धिका ।**
**शिम्बी क्षुद्रसहा ह्रासा रङ्गणी शूर्पपर्णिका ॥२११॥**

मुद्गस्येव पर्णान्यस्याः **मुद्गपर्णी**, तस्याम् । काकस्येव मुद्राऽस्या **काकमुद्रा** । यदाह—

मुद्गपर्णी तु काकमुद्रा सहेत्यपि ।

[ अमर० का० २ वर्ग ४ श्लो० ११३ ] इति ।

वर्ण्यते **वर्णा** । मार्जारस्येव गन्धोऽस्या **मार्जारगन्धिका** । शिनोति **शिम्बिः**, "छवि-छिवि-" [ हैमोणादिसू० ७०६ ] इति वौ निपात्यते, ङ्यां **शिम्बी** । सहते सहा, क्षुद्रा चासौ सहा च **क्षुद्रसहा** । ह्रस्यते **ह्रासा** । रङ्गत्यवश्यं **रङ्गणी** । शूर्प इव पर्णान्यस्याः शूर्पपर्णी, के **शूर्पपर्णिका** । आह च —

मुद्गपर्णी क्षुद्रसहा शिम्बी मार्जारगन्धिका ।
वनजा रङ्गणी ह्रासा शूर्पपर्णी बुधैः स्मृता ॥

[ धन्व० वर्ग १ श्लोक १३८ ] इति ।

तथा च—

मुद्गपर्णी क्षुद्रसहा शूर्पपर्णी कु( ' तु ) रङ्गणी ।
वनजा रिङ्गणी शिम्बी सिंही मार्जारगन्धिका ॥

[ ] इति ।

मुद्गपर्णीनामानि । लोके तु 'मुदगवनी' इति प्रसिद्धिः ॥२११॥

---

१ °मुद्रा वन्या मार्जारगन्धिका । शिवा क्षुद्रसहा ह्रासी रङ्गणी सूर्यपर्णिका ॥ २११ ॥ नि० ॥

२ व्याख्यासुधायां 'काकमुद्रा' इति पाठानुसारेण "ईषत् कम् 'ईषदर्थे' [ पा० ६. ३.१०५] इति कोः कादेश, काकेन-ईषज्जलेन मुद गच्छति 'गमश्च' [पा० ३ २. ४७] इति ड.। यद्वा काका मुद्गाः-हर्षप्राप्ता यस्याम् ।" इति व्याख्यान वर्तते ॥

**भूम्यामलक्यामामला बहुपत्री वितुन्नकः ।**
**तामलक्यज्झटाऽज्झाटा तालिका च तमालिनी ॥२१२॥**

भूमेरामलकी **भूम्यामलकी,** तस्याम् । आमलते **आमला,** आमलकीत्वात् । बहूनि पत्राण्यस्या **बहुपत्री** । वितुद्यते वितुन्नः के **वितुन्नकः** । ताम्यति **तामलकी,** "कीचक-पेचक-" [ हैमोणादिसू० ३३ ] इत्यके निपात्यते । अत्—आश्चर्यकारी झटा—सङ्घातोऽस्या **अज्झटा** । "आश्चर्यकारिसङ्घाता" इति **क्षीरस्वामी** । अत्—आश्चर्ये, अद्भुतवद् झाट.—सङ्घातोऽस्त्यस्या **अज्झाटा,** अभ्रादित्वाद. । ताडयति मालास्ताली, ड-लयोरैक्यात् , स्वार्थिके के **तालिका** । तमाला सन्त्यस्याः **तमालिनी** । आह च—

तामलक्युत्तमा ताली तमालं तु तमालिनी ।
वितुन्नकस्त्वज्झटा च झाटा साऽऽमलकीति च ॥
[ धन्व वर्ग ३ श्लो० ८४ ] इति ।

भूम्यामलकीनामानि । लोके तु 'भुंइआमली' इति प्रसिद्धि ॥२१२॥

**हरिद्रायां वर्णवती काञ्चनी वरवर्णिनी ।**
**निशाख्या रजनिर्गौरी पीतिका मेहघातिनी ॥२१३॥**
**वेश्या विटप्रिया पिङ्गा हरिता च तरङ्गिणी ।**

हरि—पीतवर्णं द्राति-गच्छति **हरिद्रा,** तस्याम् । वर्णो विद्यतेऽस्या **वर्णवती** । काञ्चनवर्णत्वात् **काञ्चनी** वर्णेन पीतेयम् । वरो वर्णोऽस्त्यस्या **वरवर्णिनी** । निशाया आख्या अस्या **निशाख्या,** रात्रिपर्यायेत्यर्थ । "रञ्जीं रागे" रज्यते अनया **रजनिः,** "रञ्जे. कित्" [ हैमोणादिसू० ६८१ ] इति किदनि. । **गौरी** वर्णेन । पीतो वर्णोऽस्त्यस्या **पीतिका,** "अतोऽनेकस्वरात्" [ सिद्ध० ७. २. ६ ] इतीक । **मेहस्य—प्रमेहस्य घातिनी मेहघातिनी** ॥२१३॥

वेश्येव **वेश्या** । अत एव विटाना प्रिया **विटप्रिया** । **पिङ्गा हरिता** च **वर्णेन** । तरङ्गा सन्त्यस्यां **तरङ्गिणी** । आह च—

हरिद्रा पीतिका पिङ्गा रजनी रञ्जनी निशा ।
गौरी वर्णवती पीता हरिता वरवर्णिनी ॥

---

१ ⁰क्याममला बहुपुत्रा वितुन्नक । तामलक्युज्झटा झायतालिका तुन्नमालिनी ॥२१२॥ नि० ॥ २ "अथ वितुन्नकः ॥ झटाऽमलाऽज्झटा ताली शिवा तामलकीति च । "इत्यमर. [का० २ वर्ग ४ श्लो० १२६-२७] ॥ ३ ⁰या पीता तथा हट्टविलासिनी । नि० ॥ ४-५ पिण्डा प्रतौ पाठः ॥

हलदी हलना श्रेष्ठा ज्ञेया वर्णविलासिनी ।
विषघ्नी च जयन्ती च दीर्घरक्ता सुरङ्गिणी ॥
[ धन्व० वर्ग १ श्लो० ५४–५५ ] इति ।

हरिद्रानामानि । लोके तु 'हलद्र' इति प्रसिद्धि. ।

**प्रपुनाटे[1] तु दद्रुघ्नश्चक्रहश्चक्रमर्दकः[2] ॥२१४॥**
**मेषाक्षो मेषकुसुमः पद्माटैडगजावपि ।**

प्रपुणति प्रपुनाति वा **प्रपुनाटः**, "कपाट-" [ हैमोणादिसू० १४८ ] इत्याटे निपात्यते, तत्र। दद्रुं हन्ति **दद्रुघ्नः** । चक्राणि–दद्रुमण्डलानि हन्ति **चक्रहः**, "क्वचित्" [ सिद्ध० ५. १. १७१ ] इति ड । चक्राणि मृद्नाति **चक्रमर्दकः** ॥२१४॥

मेषवद् अक्षीण्यस्य **मेषाक्षः** उरणाक्ष । मेषाकाराणि कुसुमान्यस्य **मेषकुसुमः** । पद्मवद् आटयति **पद्माटः** । एडवन्मेषाकृतित्वाद् गज्यते–शब्द्यते **एडगजः** । आहुश्च—

चक्रमर्द स्मृतश्चक्री प्रपुनाटश्च नामतः ।
एकैरेणो दद्रुहरो मेषाक्षैडगजावपि ॥
[ ] इति ।

तथा च—

चक्रमर्दस्त्वेडगजो मेषाक्षाऽण्डगज. स्मृत ।
प्रपुनाट. प्रपुनटश्चक्री त्वाऽऽवर्तक स च ॥
[ धन्व० वर्ग ४ श्लो० ५ ] इति ।

[प्रपुनाटनामानि] । एतस्य लोके पमाड' इति प्रसिद्धि ।

**मुण्डयां मुण्डनिका भिक्षुः श्रावणी जीवबोधनी ॥२१५॥**
**श्रवणा श्रवणशीर्षा प्रव्रजिता तपस्विनी ।**

मुण्ड्यते **मुण्डी**, तस्याम । मुण्डनं विद्यतेऽस्याः **मुण्डनिका**, "अतोऽनेकस्वरात" [ सिद्ध० ७. २ ६ ] इतीक । भिक्षणशीला **भिक्षुः**, "सन् भिक्षा-" [सिद्ध० ५. २ ३३ ] इत्यु । श्रवणानामिय **श्रावणी**, "तस्येदम" [ सिद्ध० ६. ३. १६० ] इत्यग् । जीवान् बोधयति **जीवबोधनी** ॥२१५॥

१ प्रपुन्नाटे नि० ॥ २ ⁰श्चक्रकश्चक⁰ नि० ॥

श्रूयते **श्रवणा**, "तृ-कृ-शृ-" [हैमोणादिसू० १८७] इत्यणः। श्रवणानां शीर्षमिव **श्रवणशीर्षा**। प्रव्रियते (? प्रव्रज्यते) **प्रव्रजिता**। तपो विद्यतेऽस्याः **तपस्विनी**। आह च—

श्रावणी स्यान्मुण्डनिका भिक्षुः श्रवणशीर्षिका।
श्रवणाह्वा प्रव्रजिता परिव्राजी तपोधना॥
[ धन्व० वर्ग १ श्लो० १५९ ]
श्रावणी श्राविता पूर्वं गालवेन महात्मना।
आत्रेयस्त्वैषिका चोक्ता छिन्नग्रन्थनिका च सा।
[ ] इति।

मुण्डीनामानि। लोके तु 'मोडथेरी' इति प्रसिद्धिः।

**महाश्रावणिकायां तु व्यथा[1] कदम्बपुष्पिका॥२१६॥**
**ग्रन्थिका लोचनीया[2] च छिन्नग्रन्थनिकाऽपि च।**

महती चासौ श्रावणिका च **महाश्रावणिका**, तस्याम्। व्यथते इति **व्यथा**। कदम्बस्येव पुष्पाण्यस्याः कदम्बपुष्पी, के **कदम्बपुष्पिका**॥२१६॥

ग्रन्थिरत्रास्ति **ग्रन्थिका**, व्रीह्यादित्वादिक। लोच्यते इति **लोचनीया**। छिन्ना चासौ ग्रन्थनिका च **छिन्नग्रन्थनिका**। आह च—

महाश्रावण्यथाऽन्या तु लोचनीया तथाऽपरा।
कदम्बपुष्पिका चोक्ता छिन्नग्रन्थनिका च सा॥
[ धन्व० वर्ग १ श्लो० १६० ] इति।

एतस्या लोके 'महामुण्डी' इति प्रसिद्धिः।

**बाकुच्यां स्यात् कालमेषी दुर्गन्धा कुष्ठनाशनी॥२१७॥**
**पूतिपर्णी सोमराजी सुवल्ली सोमवल्लिका।**
**अवल्गुजः कृष्णफली[3]न्दुलेखा पूतिफल्यपि॥२१८॥**

"वातं सङ्कोचयति" इति वचनाद् **बाकुची**, पृषोदरादित्वात्, तस्याम्। कालेन मिष्यते—शद्यते (? शव्यते) **कालमेषी**, कृष्णफलत्वात्। दुष्टो गन्धोऽस्या **दुर्गन्धा**। कुष्ठं नाशयति **कुष्ठनाशनी**॥२१७॥

पूतीनि पर्णान्यस्याः **पूतिपर्णी**, "पाक-कर्ण-पर्ण-" [सिद्ध० २.४.५५] इति ङीः। सोमेन—आह्लादनेन राजते **सोमराजी**। शोभना वल्ली **सुवल्ली**। सोमस्य

१ त्वव्यथा नि० ॥ २ लोभनीया नि० ॥ ३ कृष्णफला दुर्लेखा नि० ॥

**वल्लिका सोमवल्लिका**। अवल्गोः—अरम्याज्जातो **अवल्गुजः**। कृष्णानि फलान्यस्याः **कृष्णफली**। इन्दोर्लेखेव **इन्दुलेखा**। पूतिः फलेषु अस्याः **पूतिफली**, "पाक-कर्ण-पर्ण-पुष्प-फल-मूल-वालोत्तरपदाच्च" इति **पाणिनीय**[४ १.६४]सूत्रेण ङीष्। यदाह—

अवल्गुजः सोमराजी सुवल्लिः सोमवल्लिका॥
कालमेषी कृष्णफला बाकुची पूतिफल्यपि।

[अमर० का० २ वर्ग ४ श्लो० ९५–९६] इति।

तथा च—

बाकुची सोमराजी च सोमवल्ली सुवल्ल्यपि।
अवल्गुजः कृष्णफली सैव पूतिफली मता॥
चन्द्रलेखेन्दुलेखा च शशिलेखा च सा मता।
पूतिपर्णी कालमेषी दुर्गन्धा कुष्ठनाशनी॥

[धन्व० वर्ग १ श्लो० १६५–६६] इति।

बाकुचीनामानि। लोके तु 'बाबची' इति प्रसिद्धिः॥२१८॥

**रास्नायां श्रेयसी रस्या रसनाऽतिरसा रसा।**
**एलापर्णी गन्धमूला सुवहा मारुतापहा॥२१९॥**

रसत्यनया रस्यते वा **रास्ना**, "रसेर्वा" [हैमोणादिसू० २६०] इति विकल्पेन णित् नः, तस्याम्। **श्रेयसी** श्रेष्ठा। रस्यते इति **रस्या**। रस्यते **रसना**। रसमतिक्रान्ता **अतिरसा**। रस्यते **रसा**। एलावत् पर्णान्यस्याः **एलापर्णी**, "पाक-कर्ण-पर्ण" [सिद्ध० २. ४. ५५] इति ङीः। गन्धो मूलेऽस्या **गन्धमूला**। सुष्ठु वहति **सुवहा**। मारुतमपहन्ति **मारुतापहा**। आह च—

रास्ना युक्तरसा रस्या श्रेयसी रसना रसा।
सुगन्धमूलाऽतिरसा सैव युक्तरसा स्मृता॥

[धन्व० वर्ग १ श्लो० २७०] इति।

रास्नानामानि। लोके तु 'राठ' इति प्रसिद्धिः॥२१९॥

**नाकुल्यां सर्पगन्धा सुगन्धा वीरितपत्रिका।**

१ ⁰न्धा तु सुगन्धा वारिपत्रका नि०॥

नकुलानामियं **नाकुली,** प्रियत्वात्, "तस्येदम्" [सिद्ध०६.३. १६०] इत्यण्, तस्याम्। सर्प इव गन्धोऽस्या **सर्पगन्धा**। शोभनो गन्धोऽस्या **सुगन्धा**। चीरितानि पत्राण्यस्याः **चीरितपत्रिका**। यदाह—

नाकुली सुरसा नागसुगन्धा गन्धनाकुली ॥
नकुलेष्टा भुजङ्गाक्षी छत्राकी सुवहा च सा।

[अमर० का०२ वर्ग ४ श्लो० ११४-१५] इति।

नाकुलीनामानि। लोके तु 'नउली' इति प्रसिद्धि।

**गन्धनाकुलिकायां तु सर्पाक्षी विषमर्दनी ॥२२०॥**
**महासुगन्धा सुवहा छत्राकी नकुलप्रिया।**

गन्धोपलक्षिता नाकुलिका **गन्धनाकुलिका,** तस्याम्। सर्पस्येव अक्षीण्यस्या **सर्पाक्षी**। विषं मृद्नाति **विषमर्दनी** ॥२२०॥

महती चासौ सुगन्धा च **महासुगन्धा**। सुष्ठु वहति **सुवहा**। छत्रमकति—याति **छत्राकी** छत्राभपत्रा। नकुलाना प्रिया **नकुलप्रिया**। आह च—

अन्या महासुगन्धा तु सुवहा गन्धनाकुली।
सर्पाक्षी नकुलेष्टा च छत्राकी विषमर्दनी ॥

[धन्व० वर्ग ४ श्लो० १०५] इति।

एतस्या लोके 'गन्धनउली' इति प्रसिद्धिः। नाकुलीभेदोऽयम्।

**कुठेरके ऽर्जकः स्यात् क्षुद्रपत्रः कठिञ्जरः ॥२२१॥**
**वैकुण्ठस्तीक्ष्णगन्धश्च**

कुठि सौत्रः, कुण्ठति कुठेरः, "कु-गु-पति-कथि-" [हैमोणादिसू० ४३१] इति किद् एर. प्रत्ययः, स्वार्थिके के **कुठेरकः,** तत्र। अर्जयति **अर्जकः,** णकः। क्षुद्राणि पत्राण्यस्य **क्षुद्रपत्रः**। कठिनं जारयति **कठिञ्जरः,** पृषोदरादित्वात् ॥२२१॥

। अयं **वैकुण्ठः,** "तस्येदम्" [सिद्ध० ६.३. १६०] इत्यण्। तीक्ष्णो गन्धोऽस्य **तीक्ष्णगन्धः**।

१ °सा रास्ना सुग° इति अमरकोशे पाठ ॥ २ विषमर्दिनी नि० ॥ ३ कुठिञ्जर नि० ॥

**द्वितीयो वटपत्रकः ।**

**पर्णासो बिल्वगन्धश्च**

'द्वितीयः' अपरः कुठेरकः वटपत्राणीव पत्राण्यस्य [वटपत्र, के] **वटपत्रकः** । पर्णैः असति—दीप्यते **पर्णासः** । बिल्व इव गन्धोऽस्य **बिल्वगन्धः** ।

**स तु कृष्णः करालकः ॥२२२॥**
**कालतालः कृष्णमल्ली मालुकः कृष्णमालुकः ।**

'तु' पुनरर्थे । 'सः' कुठेरकः 'कृष्णः' श्यामः करोति करालः, "ऋ-कृ-मृ-" [हैमोणादिसू० ४७५] इत्यालः, स्वार्थिके के **करालकः** ॥२२२॥

कालं ताडयति **कालतालः**, ऋफिडादित्वाल्लत्वम् । कृष्णा चासौ मल्ली च **कृष्णमल्ली** । मलत **मालुकः**, "कम्बुकांशुक-" [हैमोणादिसू० ५७] इत्युके निपात्यते । कृष्णश्चासौ मालुकश्च **कृष्णमालुकः** । आह च --

कुठेरकस्तु वैकुण्ठः क्षुद्रपत्रोऽर्जकः सितः ।
वटपत्रः कुठेरोऽन्यः पर्णासो बिल्वगन्धकः ॥
कुठेरकस्तृतीयोऽन्यो मालुकः कृष्णमालुकः ।
कृष्णार्जकः कालतालः करालः कृष्णमल्लिकः ॥

[धन्व० वर्ग० ४ श्लो० ५४, ५६] इति ।

त्रयोऽपि कुठेरकभेदाः । एषां लोके 'आजऊ' इति प्रसिद्धिः ।

**तुलस्यां सुरसाऽऽपीता राक्षसी बहुमञ्जरी ॥२२३॥**
**ग्राम्या गौरी शक्रपत्नी भूतघ्नी देवदुन्दुभिः ।**

'तुलण् उन्माने' तोल्यते **तुलसी**, "फनस-" [हैमोणादिसू० ५७३] इत्यसे निपात्यते । शोभनो रसोऽस्याः **सुरसा** । आपीयते रसोऽस्याः **आपीता** । रक्षसामियं **राक्षसी** । बह्व्यः मञ्जर्योऽस्याः **बहुमञ्जरी** ॥२२३॥

ग्रामे भवा **ग्राम्या**, "भवे" [सिद्ध० ६.३. १२३] इति यः; ग्रामे साध्वी वा. 'तत्र साधौ" [सिद्ध० ७.१.१५] इति यः । गूयते **गौरी**, "खुर-क्षुर-" [हैमोणादिसू० ३९६] इति रे निपात्यते । शक्रस्य पत्नीव **शक्रपत्नी** । भूतानि हन्ति **भूतघ्नी** । देवानां दुन्दुभिरिव **देवदुन्दुभिः** । आह च—

१ सरालकः नि० ॥ २ काकतालः नि० ॥ ३ °सा प्रेतराक्षसी नि० ॥ ४ वस्या गौरी नि० ।

सुरसा तुलसी ग्राम्या तुलसी बहुमञ्जरी ।
आपीता राक्षसी गौरी भूतघ्नी देवदुन्दुभिः ॥
[धन्व० वर्ग० ४ श्लो० ५० ] इति ।

तुलसीनामानि । लोके तु 'तुलछी' इति प्रसिद्धिः ।

**फणिज्जके मरिचकः खरपत्रोऽल्पपत्रकः ॥२२४॥**
**मरूवको मरुबको जम्भीरो मारुतः फणी ।**

फणाभवर्णत्वाद् देश्यः **फणिज्जकः**, तत्र । म्रियते अनेन मरिचः, "मृ-त्रपि-भ्यामिचः" [ हैमोणादिसू० ११७ ] इति इचः प्रत्ययः, स्वार्थिके के **मरिचकः** । खराणि पत्राण्यस्य **खरपत्रः** । अल्पं—तुच्छं पत्रमस्य अल्पपत्रः, के **अल्पपत्रकः** ॥२२४॥

मरौ बक इव **मरूबकः**, पृषोदरादित्वाद् दीर्घः; पक्षे **मरुबकः** । "जमू अदने" जम्यते **जम्भीरः**, "जम्भीरा-ऽऽभीर-" [ हैमोणादिसू० ४२२ ] इतीरे निपात्यते । **जम्बीरो**ऽपि । मरुदेव **मारुतः**, प्रज्ञादित्वादण् । फणाः सन्त्यस्य **फणी** । आह च—

जम्बीरः खरपत्रश्च फणी चोक्तः फणिज्जकः ।
मरूबको मरुबको मरुन्मरिचकस्तथा ॥
[ धन्व० वर्ग ४ श्लोक० ५२ ] इति ।

मरुबकनामानि । लोके तु 'मरुअउ' इति प्रसिद्धिः ।

**त्रायमाणायां त्रायन्ती कृतत्राणाऽद्रिसानुजा ॥२२५॥**
**वार्षिकं बदरा घृष्टिर्वाराही बलभद्रिका ।**
**बलदेवा सुत्रात्राणा विष्वक्सेनप्रियाऽपि च ॥२२६॥**

त्रायते **त्रायमाणा**, तस्याम् । "आत्मनेपदमनित्यम्" इति न्यायात् शतृप्रत्यये **त्रायन्ती** । कृतं त्राणमनया **कृतत्राणा** । अद्रिसानौ जाता **अद्रिसानुजा** ॥२२५॥

वर्षासु भवं **वार्षिकम्** । 'बद स्थैर्ये" बदति **बदरा** "ऋच्छि-चटि-वटि-" [ हैमो-णादिसू० ३९७ ] इत्यरः । घृष्यतेऽनया **घृष्टिः**, "स्त्रियां क्तिः" [ सिद्ध० ५.३.९१ ] इति क्तिः । वराहस्येयं **वाराही**, "तस्येदम्" [ सिद्ध० ६.३. १६० ] इत्यण् ।

---

१ ० ज्जके प्रस्थपुष्प खरपत्रोऽत्रपत्रकः नि०॥ २ त्रायन्ती त्रायमाणायां कृतत्राणाऽद्रिसा-नुजा नि ॥ ३ ०त्रा 'सुत्राणा नि० ॥

बलेन भद्रमस्याः **बलभद्रा**, स्वार्थिके के **बलभद्रिका** । बलेन दीव्यति **बलदेवा** । जुहुत्यनया **जुहूः**, "दिद्युद्दद्-" [सिद्ध० ५.२ ८३] इति क्विपि साधुः । त्रायते स्म **त्राणा**, "ऋ-ह्री-घ्रा-" [ सिद्ध० ४.२. ७६ ] इति क्तस्य नत्वम् । विष्वक्सेनस्य प्रिया **विष्वक्सेनप्रिया** । आह च—

त्रायमाणा कृतत्राणा त्रायन्ती त्रायमाणिका ।
बलभद्रा बलदेवा बार्षिकं गिरिसानुजा ॥

[ धन्व० वर्ग १ श्लो० २५४ ] इति ।

त्रायमाणानामानि । लोके तु 'त्रायमाण' इति प्रसिद्धिः ॥२२६॥

**यवासके धन्वयासो यासो धन्वयवासकः ।**
**वीरमूलो दीर्घमूलो बालपत्रो मरूद्भवः ॥२२७॥**

**अधिकण्टकः कुनाशस्ताम्रमूली प्रतोदनी ।**
**दुःस्पर्शा कच्छुराऽनन्ता समुद्रान्ता दुरालभा ॥२२८॥**

"युक् मिश्रणे" यौति यवास, "यु-बलिभ्यामास" [हैमोणादिसू० ५७४] इत्यासः, स्वार्थिके के **यवासकः**, तत्र । **धन्वयासो** मरूद्भवत्वात् । याति–प्रसरति **यासः**, "मा-वा-वद्यमि-" [ हैमोणादिसू० ५६४ ] इति बहुवचनात् सः । धन्वनो यवासको **धन्वयवासकः** । वीरं मूलमस्य **वीरमूलः** । दीर्घं मूलमस्य **दीर्घमूलः** । बाल इव पत्राण्यस्य **बालपत्रः** । मरुषु उद्भवति **मरूद्भवः** ॥२२७॥

अधिकानि कण्टकान्यस्य **अधिकण्टकः** । कुं–पृथ्वीं नाशयति **कुनाशः**, कण्टकित्वात् । ताम्रं मूलमस्यास्ता**ताम्रमूली** । प्रतोदते **प्रतोदनी** । दुष्टः स्पर्शोऽस्याः **दुःस्पर्शा** । कच्छुरोगं राति–ददाति **कच्छुरा**, पृषोदरादित्वात् । नास्ति अन्तोऽस्या **अनन्ता** । अत एव **समुद्रान्ता** च, दूरव्याप्तेः । कृच्छ्रेण लभ्यते–स्पृश्यते **दुरालभा** । आह च –

यासो यवासकोऽनन्ता बालपत्रोऽधिकण्टकः ।
वीरमूलः समुद्रान्ता दीर्घमूलो मरूद्भवः ॥
धन्वयासो दुरालम्भा ताम्रमूली च कच्छुरा ।
दुरालभा च दुःस्पर्शा यासो धन्वयवासकः ॥

[ धन्व० वर्ग १ श्लो० २२, २० ] इति ।

---

१ दूरमूलो नि० ॥ २ कुनाशकोऽधिष्टकण्टस्ताम्रमूली प्रचोदनः । दुःस्पर्शः क० नि० ॥

[यवासकनामानि] । एतस्य लोके 'जवासउ' इति प्रसिद्धि । धन्वन्तरिस्तु मेदमाह—धन्वयास इत्यादिकस्य लोके 'धमासउ' इति प्रसिद्धिरिति ॥२२८॥

**किराततिक्ते कैरातो रामसेनः किरातकः ।**
**अनार्यतिक्तको हैमो भूनिम्बः काण्डतिक्तकः ॥२२९॥**

**किरात**देशे भवस्तिक्तो रस **किराततिक्तः**, तत्र । किरातदेशे भवः **कैरातः** । रामा सेनाऽस्य **रामसेनः** । किरति गेगान् किरात "कॄ-वृ-कन्यलि-" [ हैमोणादिसू० २०९ ] इत्यातक् , स्वार्थिके के **किरातकः** । अनार्यस्य तिक्त अनार्यतिक्तः, के **अनार्यतिक्तकः** । हिमस्यायं **हैमः**, "तस्येदम्" [ सिद्ध० ६.३.१६० ] इत्यण् शीतलत्वात् । भुवि निम्ब इव **भूनिम्बः** । काण्ड—कुत्सितश्चासौ तिक्तश्च काण्डतिक्त, के **काण्डतिक्तकः** । आह च —

किराततिक्तको हैम काण्डतिक्त किरातक ।
भूनिम्बोऽनार्यतिक्तश्च कैरातो रामसेनक ॥
कैडर्य पिचुमन्दश्च निम्बो रिष्टो वरत्वच ।
छर्दनो हिङ्गुनिर्यास प्रियमालश्च पर्वत ॥
नेपाल कथितश्चान्यो जात्यश्चैष ज्वरान्तक ।
नाडीतिक्तोऽर्द्धतिक्तश्च निद्रारि सन्निपातहा ॥

[ धन्व० वर्ग १ श्लो० ३३–३५ ] इति ।

किरातनामानि । लोके तु 'किरायता' इति प्रसिद्धि ॥२२९॥

**कुष्ठे तु पाकलं रामं वानीरं वाप्यमुत्पलम् ।**
**वानीरजं पारिभव्यं कौरव्यं व्याधिनामकम् ॥२३०॥**

कुष्णाति **कुष्ठम्**, "कुषेर्वा" [ हैमोणादिसू० १६४ ] इति विकल्पेन कित् ठः, पुं-क्लीबलिङ्ग, तत्र । **पाकलं** व्याधित्वात् , पाकं लाति वा, "क्वचित्" [ सिद्ध० ५. १. १७१ ] इति डः । रमते **रामम्**, " वा ज्वलादि-" [ सिद्ध० ५.१. ६२ ] इति णः, क्लीबलिङ्ग । "वन सम्भक्तौ" वन्यते **वानीरम्**, "वनि-वपिभ्यां णित्" [ हैमोणादिसू० ४२१ ] इति णिदीरः । वाप्या भवं **वाप्यम्**, "भवे" [सिद्ध० ६. ३. १२३ ] इति यः । **व्याप्यमित्येके** । उत्पलं दाहहृत्वात्, उत्पलपुष्पत्वाद्वा ।

१ °रज वापिभाव्यं कौरवं नि० ॥

वानीरे जातं **वानीरजम्** । पारिषु—तोयाशयेषु भवति **पारिभव्यम्**, "भव्य-गेय-" [सिद्ध० ५. १. ७] इति साधु. । कुरौ भवं **कौरव्यम्**, पृषोदरादित्वात् । व्याधेर्नामास्य **व्याधिनामकम्** । यदमरः—

> व्याधिः कुष्ठं पारिभव्यं व्याप्यं पाकलमुत्पलम् ।
> वाप्यं वानीरजं गमं कौबेरं पारिभव्यकम् ॥
> [का० २ वर्ग ४ श्लो० १२६] इति ।

तथा च—

> कुष्ठं रोगो गदो व्याधिरुत्पलं पाकलं रुजा ।
> [ धन्व० वर्गा० ३ श्लो० ४९ ] इति ।

कुष्ठनामानि । लोके तु 'उपलोठ' इति प्रसिद्धिः ॥२३०॥

**वालके जल-केशाख्यं बर्हिष्ठं दीर्घरोमकम् ।**
**ह्रीबेरोदीच्य वज्राणि पिङ्गमाचमनं कचम् ॥२३१॥**

"वाडृड् आप्लावे" वाडते वालम्, ऋफिडादित्वाद् डस्य लः; वलति वा, "वा ज्वलादि-" [सिद्ध० ५ १ ६२] इति ण, स्वार्थिके के **वालकम्**, पुं-क्लीबलिङ्गः, तत्र । 'जल-केशाख्यम्' इति जल-केशयोराख्या—नामाऽस्य **जलाख्यं केशाख्यं** च, तेन **नीरं वारीत्यादि, केश** इत्यादि । बर्हते—वर्धते **बर्हिष्ठम्**, "पृष्ठेधिठादयः" [हैमोणादिसू० १६६] इति ठे निपात्यते । दीर्घाणि रोमाण्यस्य **दीर्घरोमकम्** । जिह्रेतीव **ह्रीबेरम्**, "शतेरादयः" [हैमोणादिसू० ४३२] इति बेरे निपात्यते । उदीचि भवं **उदीच्यम्** । "वज गतौ" वजति **वज्रम्**, "भी-वृधि-" [हैमोणादिसू० ३८७] इति रः, पु-क्लीबलिङ्गः । पीयते **पिङ्गम्**, "स्फुलि-कलि-" [हैमोणादिसू० १०२] इतीङ्गक् । "चमू अदने" आचम्यते **आचमनम्** । "कचि बन्धने" कचते **कचम्**, अच् । आह्लामरः—

> वालं ह्रीबेर-बर्हिष्ठोदीच्यं केशा-ऽम्बुनाम च ।
> [ का० २ वर्ग ४ श्लो० १२२ ] इति ।

तथा च—

> वालकं वारि तोयं च ह्रीबेरं जलमम्बु च ।
> केशं वज्रमुदीच्यं च पिङ्गमाचमनं कचम् ॥
> [ धन्व० वर्ग १ श्लो० ४७ ] इति ।

---

१ रुचम् मि० ॥

ह्रीबेरनामानि। लोके तु 'वालउ' इति प्रसिद्धिः ॥२३१॥

**शट्यां पलाशः षड्ग्रन्था गन्धोली हिमजा वधूः।**
**कर्चूरः सुव्रता गन्धमूली पृथुपलाशिका ॥२३२॥**

"शट रुजा-विशरण-गत्यवसादनेषु" शटति **शटी**, अचि ङीः। केचित् **षटी**ति मूर्द्धन्यादिमाहुः, **शढी**त्यपि, तस्याम्। पलाशा सन्त्यस्य **पलाशः**, अभ्रादित्वादः। षड् ग्रन्थयोऽस्या **षड्ग्रन्था**। गन्धयति–अर्दयति **गन्धोली**, "पिञ्छोल-कल्लोल-" [हैमोणादिसू० ४९५] इत्योल निपात्यते। हिमे जाता **हिमजा**। उह्यते **वधूः**, "वहेर्धु च" [हैमोणादिसू० ८३२] इत्यूः। करोति **कर्चूरः**, "सिन्दूर-कर्चूर-" [हैमोणादिसू० ४३०] इत्यूरे निपात्यते। शोभनो(नं) व्रतो(तम)ऽस्या **सुव्रता**। गन्धयुक्तं मूलमस्या **गन्धमूली**। पृथ्वी चासौ पलाशिका च **पृथुपलाशिका**। आह च—

शटी षटी पलाश स्यात ज्ञेया पृथुपलाशिका।
सुगन्धमूला गन्धोली षड्ग्रन्था सुव्रता वधू ॥
[धन्व० वर्ग १ श्लो० ६१] इति।

शटीनामानि। लोके तु 'शढि' इति प्रसिद्धिः ॥२३२॥

**एलावालुके त्वैलेयं वालुकं हरिवालुकम्।**
**सुगन्ध्यालुकमेल्वालं दुर्वर्णं प्रसरं दृढम् ॥२३३॥**

**एलावद्** वलते **एलावालुकम्**, "कञ्चुकांशुक-" [हैमोणादिसू० ५७] इत्युके साधुः, तत्र। एलाया इदम् **ऐलेयम्**, "तस्येदम्-" [सिद्ध० ६.३. १६०] इत्येयण्। **वलते वालुकम्**, "कञ्चुकांशुक-" [हैमोणादिसू० ५७] इत्युके साधु। हरि–पिङ्गं वालुकं **हरिवालुकम्**। शोभनो गन्धोऽस्येति **सुगन्धि**, "सु-पूत्युत्सुरभेर्गन्धादिद् गुणे" [सिद्ध० ७ ३. १४४] इति समासान्त इत्। "ऋक् गतौ" इयर्त्ति आलु, "ऋ प्रापणे च" ऋच्छति वा "ऋ-तृ-शृ-" [हैमोणादिसू० ७२७] इति णिदुः रकारस्य लत्वं च, स्वार्थिके के **आलुकम्**। पृषोदरादित्वाद दीर्घे **आलूकमपि**। **एलावद् वलते एल्वालम्**, पृषोदरादित्वात। दुष्टो वर्णोऽस्य **दुर्वर्णम्**। प्रसरति–वर्धते **प्रसरम्**। **दृढं** स्थिरम्। आह च--

एलावालुकमाढकं वालुकं हरिवालुकम्।

१ गन्धाली नि० ॥ २ ०थुफला० नि० ॥ ३ ०ल्वालु दु०नि० ॥

एल्वालकं कपित्थं च दुर्वर्णं प्रसरं दृढम् ॥

[ धन्व० वर्ग ३ श्लो० ७६ ] इति ।

एतस्य लोके 'एलीयउ' इति प्रसिद्धिः ॥२३३॥

**कुङ्कुमे रक्तपर्यायं सङ्कोचपिशुनं वरम् ।**
**धीरं कुसुम्भं घुसृणं पीतं वाल्हीक-पीतने ॥२३४॥**
**कश्मीरजं वह्निशिखं वर्णं लोहितचन्दनम् ।**

"कुकि वृकि आदाने" कुक्यते **कुङ्कुमम्**, "कुन्दुम-लिन्दुम-" [हैमोणादिसू० ३५२] इत्युमे निपात्यते, क्लीबलिङ्गोऽयम् । **वाचस्पतिस्तु** 'मिदाघेऽपि कुङ्कुमः सुख' स्यात्" इति पुंस्याह, तत्र । रक्तपर्यायं **रक्ताख्यम्** । सङ्कोचस्य पिशुनं—सूचकं **सङ्कोचपिशुनम्** । **सङ्कोचं पिशुनं** चेति द्वे नाम्नी इत्यन्ये । व्रियते **वरम्**, "युवर्ण-" [सिद्ध० ५.३ २८] इत्यल् । **धीरं** स्थिररागम्, धीयते **धीरम्**, "इण्-धाग्भ्यां वा" [हैमोणादिसू० ३८९] इति कित् र' । "**कुसच् श्लेषे**" दन्त्यान्तः, कुस्यते **कुसुम्भम्**, "का-कुसिभ्या कुम्भ'" [हैमोणादिसू० ३३७] इति किदुम्भः । घुष्यते अनेनाङ्गं घुंषते—कान्तिं करोति वा **घुसृणम्**, "भ्रूण-तृण-" [हैमोणादिसू० १८६] इति णे निपात्यते । **देश्यामप्ययम्** । पीयते स्म **पीतम्**, पीतयति वा । वाल्हीकेषु जातं **वाल्हीकम्**, "कोपान्त्यात्-" [सिद्ध० ६.३. ५६] इत्यण् । **वाल्हिकमपि** । पीतयत्यङ्गं **पीतनम्** ॥२३४॥

कश्मीरेषु जातं **कश्मीरजम्** । वह्नेरिव शिखा—केसरोऽस्य **वह्निशिखम्** । वर्ण्यते **वर्णम्**, अल् प्रत्यय', व्रियते वा, "इणुर्विशा-वेणि-" [हैमोणादिसू० १८२] इति णः, क्लीबलिङ्ग' । **वर्ण्यमपि** । लोहितं चन्दनमिव **लोहितचन्दनम्** । आह च—

कुङ्कुमं रुधिरं रक्तमसृगास्नं च पीतकम् ।
काश्मीरं चारु वाल्हीकं सङ्कोचं पिशुनं वरम् ॥

[ धन्व० वर्ग ३ श्लो० १२ ] इति ।

[ कुङ्कुमनामानि । ] एतस्य लोके 'केसर' 'कुङ्कुम' इति वा प्रसिद्धिः ।

**जात्यां तु रजनिः पुष्पा मालती तैलभाविनी ॥२३५॥**
**प्रियंवदा हृद्यगन्धा मनोज्ञा सुमना लता ।**

१ °नं शुकम् । द्दीरं मि० ॥ २ वरं लों° मि० ॥

जायते अस्यां पुष्पादि **जातिः**, "स्त्रियां क्तिः" [सिद्ध० ५.३. ९१] इति क्तिः, तस्याम् । रज्यति **रजनिः**, "रञ्जे कित्" [हैमोणादिसू० ६८१ ] इति किदनि । पुष्पति **पुष्पा** । मालयत्यामोदैर्**मालती**, "पुत-पित्त" [हैमोणादिसू० २०४] इति ते निपात्यते । तैलं भावयति **तैलभाविनी** ॥२३५॥

प्रियं वदति **प्रियंवदा** । हृद्यो गन्धोऽस्या **हृद्यगन्धा** । **[मनोज्ञा]** मनोहरा । सुष्ठु मन्यते **सुमना** । लाति लायते वा **लता**, "पृषि रञ्जि-" [हैमोणादिसू० २०८] इति किदतः । आह च—

जाती मनोज्ञा सुमना राजपुत्री प्रियंवदा ।
मालती हृद्यगन्धा च चेतिका तैलभाविनी ॥

[ धन्व० वर्ग ५ श्लो० १३७ ] इति ।

जातीनामानि । लोके तु 'जाइ' इति प्रसिद्धिः ।

**तस्यास्तु कलिकायां स्यात् पत्त्री सौमनसायनी ॥२३६॥**

'तुः' पुनरर्थे । 'तस्याः' जात्याः कलिकायां स्यात् पतति **पत्त्री**, "नी-दाव्-" [सिद्ध० ५.२ ८८] इति त्रट् । सुमनसामियं **सौमनसायनी** ॥२३६॥

**जातीफले जातिकोशं शालूकं मालतीफलम् ।**
**मज्जसारं जातिसूतं शौण्डं सौमनसं पुटम् ॥२३७॥**

जात्याः फलं **जातीफलम्**, ङ्यां प्रयोगदर्शनात्, तिगन्तोऽप्ययम् इति स्त्र्युक्ता इति न सिध्यति, तत्र । **जातिफलमित्यपि** । जातीलताया कोशं **जातिकोशम्**, जातिसस्याख्यम् । **जातिरित्यपि** । "शल गतौ" शलति **शालूकम्**, "शल्यलेर्णित्" [हैमोणादिसू० ५९] इत्यूकः । मालत्याः फलं **मालतीफलम्** । मज्जनि सारोऽस्य **मज्जसारम्** । जात्याः सूतं **जातिसूतम्** । शौण्ड इव **शौण्डम्**, मदकर्तृत्वात् । सुमनसा—देवानामिदं **सौमनसम्**, "तस्येदम्" [सिद्ध० ६. ३. १६०] इत्यण् । "पुट लुटत् संश्लेषणे" पुटति **पुटम्**, "नाम्युपान्त्य-" [सिद्ध० ५.१ ५४ ] इति कः, पुंक्लीबलिङ्गः । आह च—

जातीफलं जातिसस्यं शालूकं मालतीफलम् ।
मज्जासारं जातिसूतं पुटं सौमनसं फलम् ॥

[ धन्व० वर्ग ३ श्लो० ३५ ] इति ।

एतस्य लोके 'जाइफल' इति प्रसिद्धिः ॥ २३७ ॥

**यूथिकायां बालपुष्पी मागधी गन्धयूथिका ।**
**गुणोज्ज्वला पुण्यगन्धा चारुमोटा शिखण्डिनी ॥२३८॥**
**अम्बष्ठा गणिका**

यूयते–मिश्रीक्रियते यूथी, 'पथ यूथ-" [ हैमोणादिसू० २३१ ] इति थे निपात्यते, के **यूथिका**, यूथः–जालकमस्त्यस्यां वा, "अतोऽनेकस्वरात्" [ सिद्ध० ७. २. ६ ] इतीकः, तस्याम् । बालानि पुष्पाण्यस्या **बालपुष्पी**, "असत्काण्ड-प्रान्त-" [ सिद्ध० २. ४. ५६ ] इति ङीः । मगधदेशे भवा **मागधी**, "भवे" [ सिद्ध० ६. ३. १२३ ] इत्यण्, "अणञेये-" [ सिद्ध० २. ४. २० ] इति ङीः । गन्धस्य यूथिका **गन्धयूथिका** । गुणैरुज्ज्वला **गुणोज्ज्वला** । पुण्यो गन्धोऽस्याः **पुण्यगन्धा** । चारुमा–प्रधानगन्धश्री· तामटति **चारुमोटा**, पृषोदरादित्वात् । शिखण्डाः सन्त्यस्यां **शिखण्डिनी** ॥ २३८ ॥

अम्बे तिष्ठति **अम्बष्ठा**, "स्था-पा-स्ना-त्रः कः" [ सिद्ध० ५. १. १४२ ] इति कः प्रत्यय., गो-ऽम्बा-ऽम्ब-सव्य-" [ सिद्ध० २. ३. ३० ] इत्यादिना षत्वम् । गणयति **गणिका**, णके आप् , चित्ताकर्षणात् । आह च—

यूथिका बालपुष्पी च पुण्यगन्धा गुणोज्ज्वला ।
गणिका चारुमोटा च शिखण्डी

[ धन्व० वर्ग ५ श्लो० १४८ ] इति ।

एतस्या लोके 'जूही' इति प्रसिद्धिः ।

**सा तु पीता स्याद्धेमपुष्पिका ।**

सा' यूथिका 'पीता' पीतवर्णा हेमवर्णं पुष्पमस्या हेमपुष्पी, "असत्काण्ड-प्रान्तशतैकाञ्चः पुष्पात्" [ सिद्ध० २ ४. ५६ ] इति ङीः, स्वार्थिके के **हेमपुष्पिका** । आह च—

स्वर्णयूथिका ॥

यूथशालिनी [ धन्व० वर्ग ५ श्लो० १४८–४९ ] इति ।

एतस्या लोके 'सुवर्णजूही' इति प्रसिद्धिः । इह प्रस्तावात् **शङ्खयूथिका**ऽपि ज्ञेया । आह च—

प्रोक्ताऽन्या शङ्खधवला नामतः शङ्खयूथिका ।
[ धन्व० वर्ग ५ श्लो० १४९ ] इति ।

**कुन्दे माघ्यः सदापुष्पी मकरन्दो मनोहरः ॥२३९॥**
**अट्टहासो भृङ्गमित्रं शाल्योदनोपमश्च सः ।**

कुन्धति **कुन्दम्**, पृषोदरादित्वात्, **कुन्द** इति माला, तत्र । माघे मासि भवो **माघ्यः**, "भवे" [ सिद्ध० ६ ३. १२३ ] इति य. । सदा पुष्पाण्यस्या. **सदापुष्पी** । मङ्क्यते–मण्ड्यते अनेन **मकरन्दः**, "कुमुद-" [ हैमोणादिसू० २४४ ] इति उदे [प्रत्ययादेः अत्वे] निपात्यते । मनो हरति **मनोहरः** ॥ २३९ ॥

अट्टहास इव **अट्टहासः**, श्वेतत्वात् । भृङ्गस्य मित्रं **भृङ्गमित्रम्** । शाल्योदनेनोपमाऽस्य **शाल्योदनोपमः** । आह च—

कुन्दः सुमकरन्दश्च श्वेतपुष्पो मनोहरः ।
अट्टाट्टहासो भृङ्गस्तु शुक्रशाल्योदनोपमः ॥

[ धन्व० वर्ग ५ श्लो० १५० ] इति ।

एतस्य लोके 'कुन्द' इति प्रसिद्धिः ।

**स्यान्नवमालिकायां तु नेमाली वनमालिनी ॥ २४० ॥**

**सप्तला सुकुमाराऽतिसुरभिः शशिगन्धिका ।**
**कान्ता विभावरी ग्रीष्मा ग्रैष्मिका शिखरिण्यपि ॥२४१॥**

नवा–स्तुत्या मालाऽस्या **नवमालिका**, तस्याम् । नेमस्य आलिरस्या **नेमाली** । वने मालते इत्येवंशीला **वनमालिनी** ॥२४०॥

सप्त–मनो बुद्धिमिन्द्रियाणि च लाति **सप्तला**; सपति–समवैति वा, "मुरलोरल-" [ हैमोणादिसू० ४७४ ] इत्यले निपात्यते । सुतरां काम्यते **सुकुमारा**, "कमेरत उच्च" [ हैमोणादिसू० ४०९ ] इत्यारः । **अतिसुरभिः**, अतिसौगन्ध्यात् । शशी–चन्द्रपर्यायत्वात् कर्पूर, स इव गन्धोऽस्या. **शशिगन्धिका** । **कान्ता**, कमनीयत्वात् । विभातीति वनि प्रत्यये ङ्यां च **विभावरी** । "ग्रसूङ् ग्लसूङ् अदने" ग्रसते **ग्रीष्मा**, "रुक्म-ग्रीष्म-" [ हैमोणादिसू० ३४६ ] इति मे निपात्यते; ग्रीष्मोत्पन्नत्वाद्वा । अत एव ग्रीष्मे भवा **ग्रैष्मिका**, "भवे" [ सिद्ध० ६.३.१२३] इति इकण् प्रत्ययः । शिखरमस्त्यस्याः **शिखरिणी** । आह च –

१ °दनो यमश्वस नि० ॥ २ तु मोमाली नवमालिनी ॥२४०॥ सप्तला सुकुरारातिसुरतिः शिशुगन्धिका नि० ॥

ग्रीष्माऽतिसुरभिः कान्ता सुगन्धा वनमालिनी ।
सुकुमारा शिखरिणी नेमाली नवमालिका ॥
[ धन्व० वर्ग ५ श्लो० १४० ] इति ।

एतस्या लोके 'नीमाली' इति प्रसिद्धिः ॥२४१॥

**मल्लिकायां शीतभीरुर्मदयन्ती प्रमोदनी ।**
**अष्टापदी तृणशूल्यं गवाक्षी भूपदीत्यपि ॥२४२॥**

"मलि मल्लि धारणे" मल्ल्यते–ध्रियते मूर्ध्नि मल्लिः, "पदि-पठि-" [ हैमोणादिसू० ६०७ ] इति इ, स्वार्थिके के **मल्लिका;** "दु-कु-नु-" [ हैमोणादिसू० २७ ] इत्यको वा, तस्याम् । शीताद् भीरु **शीतभीरुः,** ग्रीष्मकत्वात् । मदयति **मदयन्ती,** शतृप्रत्ययः । प्रमोद्यतेऽनया **प्रमोदनी,** अनट् । अष्टौ पदान्यस्या **अष्टापदी,** "नाम्नि" [ सिद्ध० ३.२.७५ ] इति दीर्घः । तृणशूले–गुल्मे साधु **तृणशूल्यम् ।** गोरिव अक्षीण्यस्या **गवाक्षी ।** भुवि पदमस्या **भूपदी ।** आह च-—

मल्लिका शीतभीरुश्च मदयन्ती प्रमोदनी ।
मदनीया गवाक्षी च भूपद्यष्टापदी तथा ॥
[ धन्व० वर्ग ५ श्लोक १३४ ] इति ।

आह च( [१] तथा ) –

तृणशूल्यं तु मल्लिका ॥
भूपदी शीतभीरुश्च
[ अमर० का० २ वर्ग ४ श्लो० ६९-७० ] इति ।

मल्लिकानामानि । लोके तु 'केवडी' इति प्रसिद्धिः ॥२४२॥

**वार्षिक्यां षट्पदानन्दा श्रीमती सुभगा प्रिया ।**
**सुवर्षा त्रिपुटा ऽपस्रा सुरूपा मुक्तबन्धनी ॥२४३॥**

वर्षासु भवा **वार्षिकी,** "वर्षाकालेभ्यः" [ सिद्ध० ६.३.८० ] इतीकण्, तस्याम् । षट्पदानानन्दयति **षट्पदानन्दा ।** श्रीर्विद्यतेऽस्याः **श्रीमती ।** शोभनो भगोऽस्याः **सुभगा ।** प्रीणाति **प्रिया,** "नाम्युपान्त्य-" [ सिद्ध० ५.१.५४ ] इति कः । शोभनो वर्षोऽस्याः **सुवर्षा ।** त्रीणि पुटान्यस्याः **त्रिपुटा ।** त्रयः अस्राः

१ मुद्रितेऽमरे 'तृणशून्य' इति पाठो दृश्यते ॥

अस्याः **त्र्यस्रा** । शोभन रूपमस्या **सुरूपा** । मुक्तं बन्धनमस्या **मुक्तबन्धनी** । आह च—

वार्षिकी त्रिपुटा त्र्यस्रा सुरूपा सुभगा प्रिया ।
श्रीमती षट्पदानन्दा सुवर्षा मुक्तबन्धनी ॥

[ धन्व० वर्ग ५ श्लोक १३६ ] इति ।

मल्लिकाविशेषोऽयम् ॥२४३॥

**कुमार्यां कर्णिका चारुकेसरा भृङ्गसम्मता ।**
**तरणी रामतरणी गन्धाढ्या कन्यका सहा ॥२४४॥**

कुं—भूमिं मारयति **कुमारी**; कुत्सितो मारोऽस्या इति वा, तस्याम् । कर्णयति **कर्णिका** । चारव केसरा अस्या **चारुकेसरा** । भृङ्गाणां सम्मता **भृङ्गसम्मता** । तरन्त्यनया दुःखं **तरणी**, अनट् प्रत्यय । यत् **चन्द्रनन्दनः**—

कुब्जकस्तरणी वल्ली कुमार्यलिकुलप्रिया ।

[ ] इति ।

रामा चासौ तरणी च **रामतरणी** । गन्धेन आढ्या **गन्धाढ्या** । कनति—दीप्यते कन्या, "स्था-छा-मा-" [ हैमोणादिसू० ३५७ ] इति यः, के **कन्यका**; **कुमारीपर्याया** वा । सहते परिमलं **सहा**, अच् । आह च—

तरणी रामतरणी वर्णिनी चारुकेसरा ।
रम्या कुमारी गन्धाढ्या द्विरेफगणसम्मता ॥

[ धन्व० वर्ग ५ श्लोक १४५] इति ।

एतस्या लोके 'सेवंत्री' इति प्रसिद्धिः ॥२४४॥

**अमिलाते स्यादम्लातोऽपरिम्लानो महासहा ।**
**रक्तपुष्पः कुरबकः पीतपुष्पः कुरण्टकः ॥ २४५ ॥**

"म्लै गात्रविनामे" न म्लायति **अमिलातः**, "पुत-पित्त-" [हैमोणादिसू० २०४] इति ते निपात्यते, तत्र । न म्लायति **अम्लातः**, "पुत-पित्त-" [ हैमोणादिसू० २०४ ] इति ते निपात्यते । न परिम्लायते **अपरिम्लानः** । महती चासौ सहा च **महासहा** । रक्तानि पुष्पाण्यस्य **रक्तपुष्पः** । [ कौ रूयते- अर्यते **कुरबकः**, "कौ रु-रुण्टि-रण्टिभ्यः" हैमोणादिसू० २८ इति अक प्रत्ययः । ] पीतानि **पुष्पाण्यस्य**

**पीतपुष्पः**। "रण्टिः प्राणहरणे" सौत्रः, कौ रणटति **कुरण्टकः**, "को रु-रुण्टि-रण्टिभ्यः" [ हैमोणादिसू० २८ ] इत्यकः प्रत्ययः। "कौ रम्यते **कुरण्टकः**" इति **क्षीरस्वामी**। **कुरण्डको**ऽपि। आह च—

अमिलातोऽपरिम्लानस्तथैवाऽम्लातकः स्मृतः।
रक्तपुष्पः कुरबकः पीतपुष्पः कुरण्टकः॥
[ ] इति।

एतस्य 'वानउ' इति प्रसिद्धिः॥ २४५॥

**सैरेयकः सहचरो झिण्टी सहाचरश्च सः।**

'सः' अमिलातः, सीरे भवः सैरेयः, "भवे" [ सिद्ध० ६. ३. १२३ ] इत्येयण्, स्वार्थिके के **सैरेयकः**। सह चरति **सहचरः**। 'झिम्' इति रटतीति **झिण्टी**, पृषोदरादित्वात्। सह आचरति **सहाचरः**। आह च—

सैरेयकः सहचरः सैरेयश्च सहाचरः।
[ धन्व० वर्ग १ श्लो० २७८ ] इति।

**स तु रक्तः कुरबकः स्यात् पीतस्तु कुरण्टकः॥२४६॥**
**नील आर्त्तगलो दासी बाण ओदनपाक्यपि।**

'तु' पुनरर्थे। 'सः' सहचरः 'रक्तः' रक्तवर्णः कौ रूयते—अर्यते **कुरबकः**, "को रु-रुण्टि-रण्टिभ्यः" [ हैमोणादिसू० २८ ] इति अकः प्रत्ययः। 'तु' पुनरर्थे। 'पीतः' पीतवर्णः 'स्याद्' भवेत् **कुरण्टकः**, एतस्य साधना पूर्ववत्॥२४६॥

'नीलः' नीलवर्णः आर्तः—क्षीणो गलति **आर्तगलः**। दस्यति—क्षीयते **दासी**, गौरादित्वाद् ङीः। "वण शब्दे" वण्यते **बाणः**, घञ् प्रत्ययः, द्विलिङ्गः। ओदनस्येव पाकोऽस्या **ओदनपाकी**, "पाक-कर्ण-पर्ण" [ सिद्ध० २.४.५५ ] इति **ङीः**। आह च—

पीतो रक्तोऽथ नीलश्च कुसुमैस्तं विभावयेत्॥
पीतः कुरण्टको ज्ञेयो रक्तः कुरबकः स्मृतः।
नील आर्तगलो दासी बाण ओदनपाक्यपि॥
[ धन्व० वर्ग १ श्लो० २७८—७९ ] इति।

---

१ अमरे तु 'सैरीयक' इत्यपि दृश्यते॥

तथा च **अमरसिंहः**

सहा कुमारी तरणिरम्लानस्तु महासहा ॥
तत्र शोणे कुरबकस्तत्र पीते कुरण्टकः ।
नीली झिण्टी द्वयोर्बाणा दासी चाऽऽर्तगलश्च सा ॥
सैरेयकस्तु झिण्टी स्यात् [ तस्मिन् कुरबकोऽरुणे ।
पीता कुरण्टको झिण्टी ] तस्मिन् सहचरी द्वयोः ॥

[ का० २ वर्ग ४ श्लो० ७३-७५ ] इति ।

एतस्य लोके "कंटासेलउ" इति प्रसिद्धिः ।

**किङ्किराते किङ्किराटः पीतभद्रः प्रलोभ्यपि ॥२४७॥**

कुत्सितं किरति **किङ्किरातः**, "कॄ-गॄ-कल्यलि" [ हैमोणादिसू० २०९ ] इत्यातक्, किञ्चित् किरात --खर्वो वा, तत्र । "किरो लश्च वा" [ हैमोणादिसू० १४७ ] इति किदाटे प्रत्यये **किङ्किराटः** । पीतश्चासौ भद्रश्च **पीतभद्रः** । प्रलुभ्यतीत्येवं शीलः **प्रलोभी**, "अजाते शीले" [ सिद्ध० ५.१.१५४ ] इति णिन् ॥२४७॥

**चित्रके वल्लरी व्यालः पाठीनो दारुणः कुटः ।**
**ज्योतिष्को जरणोऽग्न्याख्यो वलिन द्वीपि-पाठिनः ॥२४८॥**

चेतति चित, चित --जन्तून् त्रायते चित्र, "क्वचित्" [ सिद्ध० ५.१ १७१ ] इति ड, स्वार्थिके के **चित्रकः**, तत्र । "वलि वल्लि संवरणे" वल्लते **वल्लरी**, "जठर-क्रकर-" [ हैमोणादिसू० ४०३ ] इत्यरे निपात्यते । विशेषेण आ--समन्ताद अडति लाति वा **व्यालः**, अत्र डस्य लत्वमैक्यात् । पठति **पाठीनः**, "पठेर्णित्" [ हैमोणादिसू० २८७ ] इति णिदीन । "दॄञ् विदारणे" णौ दारयति **दारुणः**, "ऋ-कॄ-वॄ-धॄ-दारिभ्य उण" [ हैमोणादिसू० १९६ ] इति उण । "कुटत् कौटिल्ये" कुटति **कुटः**, "नाम्युपान्त्य-" [ सिद्ध० ५.१.५४ ] इति कः । ज्योतिरेव **ज्योतिष्कः** । जीर्यते अनेन **जरणः** । अग्नेराख्याऽस्य **अग्न्याख्यः** । वलि --त्वक्सङ्कोचोऽस्त्यस्य **वलिनः**, अङ्गादित्वान्न । द्वीपोऽस्त्यस्य **द्वीपी** । पाठोऽस्यास्तीति **पाठी** । आह च--

चित्रको दहनो व्याल पाठीनो दारुणोऽग्निकः ।
ज्योतिष्को वल्लरी वह्निः पाठी पाली कुटः शिखी ॥

[ धन्व० वर्ग २ श्लो० ८० ] इति ।

एतस्य लोके 'चित्रक' इति प्रसिद्धि ॥२४८॥

**वासन्त्यां स्यात् प्रहसन्ती सुवसन्ता वसन्तजा ।**
**सेव्याऽलिबान्धवा शीतसंवासा शीकरा च सा ॥२४९॥**

वसन्ते भवा **वासन्ती**, "भर्तु-सन्ध्यादेरण्" [सिद्ध० ६.३.८९ ] इत्यण् । वसन्ते पुष्पति वा, ऋत्वग् , "अणजेये-" [सिद्ध० २.४.२० ] इति ङीः, तस्याम् । प्रहसति **प्रहसन्ती**, शतृप्रत्यय । शोभनो वसन्तोऽस्या **सुवसन्ता** । वसन्ते जाता **वसन्तजा**, "क्वचिद्" [ सिद्ध० ५.१.१७१ ] इति डः । **सेव्या** सेवनीया । अलीनां–भ्रमराणां बान्धवा **अलिबान्धवा** । शीते संवासोऽस्या **शीतसंवासा** । शीकते–सिञ्चतीव **शीकरा**, "ऋच्छि-चटि-वटि-" [ हैमोणादिसू० ३९७ ] इत्यरः । आह च—

वासन्ती प्रहसन्ती च सुवसन्ता वसन्तजा ।
शीकरा शीतसंवासा सेव्या भ्रमरबान्धवा ॥

[ धन्व० वर्ग ५ श्लो० १३९ ] इति ।

[ वासन्तीनामानि ] ॥२४९॥

**नील्यां श्रीफलिका काली दोला मेला विशोधनी ।**
**तूणी तुत्था भारवाही रञ्जनी मधुपर्णिका ॥२५०॥**
**द्रोणी क्लीतकिका ग्राम्या नीलकेशी महारसा ।**

"णील वर्णे" नीलति **नीली**, "नीलात् प्राण्यौषध्योः" [ सिद्ध० २.४.२७ ] इति ङी, तस्याम् । श्रीप्रधानानि फलान्यस्याः श्रीफली, स्वार्थिके के **श्रीफलिका** रम्यफला । **काली** वर्णेन । दोल्यते **दोला**, मेल्यते **मेला**, उभयत्र "भीषि-भूषि-" [ सिद्ध० ५.३.१०९ ] इति बहुवचनादङ् । विशोध्यते **विशोधनी** । "तूणण् सङ्कोचने" तूण्यते **तूणीः** "तुंक् वृत्त्यादिषु" इत्यस्मात् " स्था-क्षुतोरूच्च " [ हैमोणादिसू० १८५ ] इति णे प्रत्यये ऊकारे अन्तादेशे च वा **तूणी** । तुद्यते **तुत्था**, "नी-नु-रमि-" [ हैमोणादिसू० २२७ ] इति सूत्रेण "तुदींत् व्यथने" इत्यस्मात् कित् थ प्रत्ययः । भारं वहति **भारवाही**, कर्मण्यण् । रञ्जयति–नीलीकरोति **रञ्जनी** । मधूनि पर्णान्यस्याः मधुपर्णी, "पाक-कर्ण-पर्ण-" [ सिद्ध० २.४.५५ ] इति ङीः, के **मधुपर्णिका** ॥२५०॥

१ सीतप्लावसा नि० ॥ २ काला नि० अमरे च ॥ ३ तुच्छा नि० ॥

द्रवत्यस्याः स्पर्शाज्जनो **द्रोणी**, "द्रोर्वा" [ हैमोणादिसू० १८४ ] इति णः प्रत्ययः, गौरादित्वाद् ङीः । क्लीतकं–विनिमयोऽस्त्यस्या. **क्लीतकिका**, "अतोऽनेकस्वरात्" [ सिद्ध० ७.२.६ ] इतीकः । ग्रामे भवा **ग्राम्या**, "भवे" [ सिद्ध० ६.३.१२३ ] इति य । **ग्रामीणे**येत्यपि । नीलाः केशा अस्या **नीलकेशी** । महान् रसोऽस्या **महारसा** । आह च—

नीलिनी नीलिका काली ग्राम्या तूणी विशोधनी ।
तुत्था श्रीफलिका मेला भारवाही च रञ्जनी ॥
[ धन्व० वर्ग १ श्लो० २३२ ] इति ।

तथा च—

नीली काली क्लीतकिका ग्रामीणा मधुपर्णिका ।
रञ्जनी श्रीफली तुत्था द्रोणी दोला च नीलिनी ॥
[ अमर० का० २ वर्ग ४ श्लो० ९४–९५ ] इति ।

नीलीनामानि । लोके तु 'गुली' इति प्रसिद्धिः ।

**दमने स्याद् ब्रह्मजटा मुनिर्दान्तर्षिपुत्रकौ ॥२५१॥**
**गन्धोत्कटः पुण्डरीकः पाण्डुराङ्गस्तपस्व्यपि ।**

दाम्यति दमयति वा **दमनः**, तत्र । ब्रह्मणो जटेव **ब्रह्मजटा** । **मुनिः**, ऋषिपुत्रत्वात् । दम्यते **दान्तः**, वेट्त्वात् क्तयोर्नेट् । ऋषीणा पुत्र ऋषिपुत्रः, के **ऋषिपुत्रकः** ॥२५१॥

गन्धेन उत्कटः **गन्धोत्कटः** । "पुणत् शुभे" पुणति **पुण्डरीकः**; "पुड्ड प्रमर्दने" पुण्ड्यते वा, "सृगीका-ऽस्तीक-" [ हैमोणादिसू० ५० ] इतीके निपात्यते । पाण्डुरमङ्गमस्य **पाण्डुराङ्गः** । **तपस्वी** मुनित्वात् । आह च—

दमनो मदान्तो दमो दान्तो मुनिसुतो मुनि ।
गन्धोत्कटो दमनको विनीत कुलपुत्रक ॥
[ ] इति ।

तथा च —

दमनकं पाण्डुराङ्गं दान्त गन्धोत्कटं मुनिम् ।
पुण्डरीकं ब्रह्मजटमृषिपुत्रं तपस्विनम् ॥
[ धन्व० वर्ग ३ श्लो० ६४ ] इति ।

एतस्य लोके 'दमनउ' इति प्रसिद्धिः।

**धत्तूरे धूर्त-धुत्तूरौ कितवो देवता शठः ॥२५२॥**
**घण्टापुष्पस्तलफलो मातुलः कनकाह्वयः।**
**उन्मत्तो मदनश्च**

धयति दधाति वा धातून् **धत्तूरः**, "सिन्दूर-कर्चूर-" [हैमोणादिसू० ४३०] इत्यूरे निपात्यते, तत्र। "धुर्वै हिंसायाम्" धूर्वति **धूर्तः**, "शी-री-" [हैमोणादिसू० २०१] इति कित् तः। धुनोति **धुत्तूरः**, "सिन्दूर-" [हैमोणादिसू० ४३०] इत्यूरे निपात्यते। "कित निवासे" इत्यस्य "किति-कुडि-" [हैमोणादिसू० ५१८] इति किदवे **कितवः**। दीव्यति देवः, देव एव **देवता**, "देवात् तल्" [सिद्ध० ७.२.१६२] इति तल्। "शठ कैतवे च" शठति **शठः** ॥२५२॥

घण्टाकाराणि पुष्पाण्यस्य **घण्टापुष्पः**। तले फलान्यस्य **तलफलः**। माऽस्ति तुलाऽस्य **मातुलः**, "अ-मा-नो-नाः प्रतिषेधे" इत्युक्तत्वात्। कनकस्य आह्वयोऽस्य **कनकाह्वयः**। **उन्मत्तः**, उन्मादकत्वात्। मदयति **मदनः**। आह च—

धत्तूरकः स्मृतो धूर्तो देवता कितवः शठः।
उन्मत्तको मदनकतरुस्तलफलस्तथा ॥

[धन्व० वर्ग ४ श्लो० ७] इति।

एतस्य लोके 'धत्तूरउ' इति प्रसिद्धिः।

**अस्य फलं मातुलपुत्रकम् ॥२५३॥**

'अस्य' इति धत्तूरस्य फलं मातुलस्य पुत्रकमिव **मातुलपुत्रकम्**। यतो **धन्वतरिः** "मातुलं धत्तूरं मातुलपुत्रकं च तत्फलम्" आह। यदमरः—

अस्य फले मातुलपुत्रकः ॥ [का० २ वर्ग ४ श्लो० ७८] इति ॥२५३॥

**शङ्खपुष्प्यां क्षीरपुष्पी शिवा ब्राह्मी किरीटिनी।**
**मधुपुष्पी मधुगन्धा शङ्खाह्वा शङ्खमालिनी ॥२५४॥**
**धूसरच्छदना श्वेतपुष्पी वनविलासिनी।**

शङ्खवर्णं पुष्पमस्याः **शङ्खपुष्पी**, "असत्काण्ड-प्रान्त-" [सिद्ध० २.४.५६] इति ङीः, तस्याम्। क्षीरवर्णं पुष्पमस्याः **क्षीरपुष्पी**। **शिवा** निरुपद्रवा। ब्रह्मण इयम् **ब्राह्मी**। किरीटोऽस्त्यस्याः **किरीटिनी**। मधूनि पुष्पाण्यस्याः **मधुपुष्पी**।

मधुन इव गन्धोऽस्या **मधुगन्धा** । शङ्खस्य आह्वाऽस्या **शङ्खाह्वा** । शङ्खवद् मालते– शोभते इत्येवंशीला **शङ्खमालिनी** ॥२५४॥

धूसराणि छदनानि अस्याः **धूसरच्छदना** । श्वेतानि पुष्पाण्यस्याः **श्वेतपुष्पी** । वने विलसति इत्येवंशीला **वनविलासिनी** । आह च—

शङ्खपुष्पी कम्बुपुष्पी शङ्खाह्वा शङ्खमालिनी ।
किरीटी शङ्खकुसुमा मेध्या वनविलासिनी ॥

[ धन्व० वर्ग ४ श्लो० ११३ ] इति ।

एतस्या लोके 'शंखाहूली' इति प्रसिद्धिः ।

**कर्चूरे द्राविडः काल्यो वेधाग्र्यो गन्धमूलकः ॥२५५॥**

कृन्तति त्वग्दोषं **कर्चूरः**, "सिन्दूर-कर्चूर-" [ हैमोणादिसू० ४३० ] इत्यूरे निपात्यते, तत्र । द्रावयति **द्राविडः**, "विहड-कहोड-" [ हैमोणादिसू० १७२ ] इत्यडे निपात्यते । "कल्यकारी **काल्यः**" इति **क्षीरस्वामी** । वेधे अग्र्य:–श्रेष्ठो **वेधाग्र्यः** । गन्धयुक्तं मूलमस्य गन्धमूलः, गन्धो मूले अस्येति वा, के **गन्धमूलकः** । आह च—

कर्चूरको गन्धमूलो द्राविडः काल्य एव च ।
वेधमुख्यो दुर्लभश्च कस्यचित् सम्मता शटी ॥

[ धन्व० वर्ग ३ श्लो० ९४ ] इति ।

**अमरो**ऽपि—

कर्चूरको द्राविडकः काल्यको वेधमुख्यकः ।

[ का० २ वर्ग ४ श्लो० १३५ ] इति ।

एतस्य लोके 'कचूर' इति प्रसिद्धिः ॥२५५॥

**अजमोदायां तु मोचा मयूरो लोचमस्तकः ।**
**खराश्वा कारवी बस्तगन्धा हस्तिमयूरकः ॥२५६॥**
**दीप्यो वल्ली ब्रह्मदर्भौ[2] लोचमर्कट इत्यपि ।**

अजवन्मोद–गन्धोऽस्या **अजमोदा**, तस्याम् । मुञ्चति **मोचा**, लिहादित्वादच् । मीनाति अग्निमान्द्यं **मयूरः**, "मी-मसि-" [ हैमोणादिसू० ४२७ ] इत्यूरः । लोच्यते लुच्यते वा मस्तकोऽस्य बर्बराकारत्वाद् **लोचमस्तकः** । खरमश्नुते **खराश्वा**,

१ मोचा मस्त्वजमोदायां मयूरी नि० ॥ २ °दर्भा लोच° नि० ॥

"लटि-खटि-" [हैमोणादिसू० ५०५] इति वः । कारोरियं **कारवी**, कर्मण्येत्यर्थः, "तस्येदम्" [सिद्ध०६.३.१६०] इत्यण् । बस्तस्येव गन्धोऽस्या **बस्तगन्धा** । हस्तिनं मीनाति **हस्तिमयूरकः**, "मी-मसि-"[हैमोणादिसू० ४२७] इत्यूरे स्वार्थिके के च साधुः ॥२५६॥

दीप्यते **दीप्यः** अग्निदीपनः । वल्लीव **वल्ली** । ब्रह्मदर्भ इव **ब्रह्मदर्भः**, तदाभत्वात् । लोच्यते लुच्यते वा मर्कटोऽनेन **लोचमर्कटः** । आह च—

अजमोदा बस्तमोदा दीप्यको लोचमस्तकः ।
खराश्वा कारवी वल्ली मोचा हस्तिमयूरकः ॥

[धन्व० वर्ग २ श्लो० ९८] इति ।

**चन्द्रो**ऽप्याह—

अजमोदा ब्रह्मकुशा खराश्वा लोचमर्कटः ।
वल्ली मोदा बस्तमोदा सैव हस्तिमयूरकः ॥

[ ] इति ।

एतस्या लोके "अजमोद" इति प्रसिद्धिः ।

**यवान्यां स्यादुग्रगन्धा यमानी यवसाह्वया ॥२५७॥**

दोषदुष्टो यवो **यवानी**, "यव-यवना-ऽरण्य-हिमाद् दोष लिप्युरु-महत्त्वे" [सिद्ध० २ ४. ६५] इति ङी आन् चान्तः, तस्याम् । उग्रो गन्धोऽस्याः **उग्रगन्धा** । यच्छत्यग्निमान्द्यं **यमानी**, "विदन-गगन-" [हैमोणादिसू० २७५] इत्यने निपात्यते । यवस इत्याह्वयोऽस्या **यवसाह्वया** । आह च—

यवानी दीपको दीप्यो यवसाह्वा यवानिका ।
यमानिकोग्रगन्धा च दीपनीया च दीपनी ॥

[धन्व० वर्ग २ श्लो० ९१] इति ।

एतस्या लोके 'यवानि' इति प्रसिद्धिः ॥२५७॥

**सहदेवायां तु दण्डोत्पला गोवन्दनी**

सह दीव्यति **सहदेवा**, अजादित्वादाप्, तस्याम् । दण्डाकाराणि उत्पलान्यस्या **दण्डोत्पला** । गवि—भूमौ वन्द्यते **गोवन्दनी** ।

**च सा ।**

---

१ ()देव्यां तथा दण्डो() नि० ॥

**गन्धवर्णा सितैः पुष्पैः**

'च:' पुन· 'सा' सहदेवा 'सितै· पुष्पै·' इति श्वेतकुसुमै· गन्धेन **वर्ण्यते** **गन्धवर्णा,** उच्यते इति शेष ।

**विश्वदेवा तु साऽरुणैः ॥२५८॥**

'तु:' पुनरर्थे । 'सा' सहदेवा 'अरुणै' इति रक्तै· पुष्पै विश्वे दीव्यति **विश्वदेवा** उच्यते । एतस्या 'सहदेवी' इति प्रसिद्धि ॥२५८॥

**पर्पटके वरतिक्तो रेजको रजनामकः ।**

“पॄश् पालन-पूरणयो.” पृणाति पर्पट., “कपट-कीकटादय” [हैमोणादिसू० १४४] इत्यटे निपात्यते, स्वार्थिके के **पर्पटकः,** तत्र । व्रियते **वरः,** वरश्चासौ तिक्तश्च **वरतिक्तः** । द्वे नाम्नी इत्यपरे । रजति **रजकः,** “नृत्-खन्-रञ्ज शिल्पिन्यकट्” [सिद्ध० ५.१.६५] इत्यकट् । रजस्य नामाऽस्य **रजनामकः,** अत्र रजशब्दोऽकारान्त· । तेन **रेणुः पांसु**रित्यादीनि । आह च—

पर्पट· स्यात् पर्पटको वरतिक्तश्च नामत· ।
रजो रेणुश्च पामुश्च कवचश्चर्मकण्टकः ॥
[ धन्व० वर्ग १ श्लो० ४५ ]
कल्याणकश्च विज्ञेयः पर्पटो नामभिर्बुधै· ।
एकपुष्पोऽतिसारश्च चरको ज्वरनाशन· ॥
[ ] इति ।

एतस्य लोके 'पीतपापडा' इति प्रसिद्धिः ।

**गोजिह्वायां श्रृङ्गबेरी दार्विका भूमिकालिका ॥२५९॥**

**गोजिह्वा** गोजिह्वाभपत्रा तस्याम् । “शॄ हिंसायाम्” शृणाति रोगान् **श्रृङ्गबेरी,** “शतेरादयः” [हैमोणादिसू० ४३२] इति केरे निपात्यते, श्रृङ्गोपलक्षितं बेरं—देहोऽस्या इति वा । दारयति रोगान् दार्वी, दृणाति वा, “कृ-वा-पा-जि-” [हैमोणादिसू० १] इत्युण्, गौरादित्वाद् ङीः, स्वार्थिके के **दार्विका** । भूमौ कालिकेव **भूमिकालिका** । आह च—

गोजिह्वा गोजिका गोभी दार्विका खरपर्णिनी ।
[ ] इति ।

---

१ रजः कवचनामक. नि०

एतस्या लोके 'गोभी' इति प्रसिद्धिः ॥२५९॥

**बलायां शीतपाकी स्याद् भद्रादन्योदनाह्वया ।**
**वाटी वाट्यालकः(? लिका वाट्यपुष्पिका खरयष्टिका ॥२६०॥**
**काष्ठिका समराह्वा च समाङ्गा च महोदरी ।**

"बल प्राणन-धान्यावरोधयोः" बलन्त्यनया **बला**, बलकृत्वात्, तस्याम् । शीतेन पाकोऽस्याः **शीतपाकी**, "पाक-कर्ण-पर्ण-" [ सिद्ध० २.४.५५ ] इति ङीः । भद्रमदनमस्या **भद्रादनी** । ओदनस्य आह्वयोऽस्याः **ओदनाह्वया** । "वट वेष्टने" वट्यते **वाटी** । वटति वट्यते वा **वाट्याली**, "चात्वाल-कङ्काल-" [ हैमोणादिसू० ४८० ] इत्याले निपात्यते, [ के **वाट्यालिका** ] । यच्चन्द्रनन्दनः —

बला भद्रौदनी ह्या तथा वाट्यालकः

[ ] इति ।

वाट्यं—वेष्टनीयं पुष्पमस्याः **वाट्यपुष्पिका** । खरा यष्टिरस्याः **खरयष्टिका** ॥२६०॥

काष्ठमस्त्यस्या **काष्ठिका**, "अतोऽनेकस्वरात्" [ सिद्ध० ७. २. ६ ] इतीक । समर इत्याह्वाऽस्याः **समराह्वा** । सममङ्गमस्याः **समाङ्गा** । महद् उदरं—मध्यमस्याः **महोदरी** । आह च—

बला भद्रादनी वाटी समाङ्गा खरयष्टिका ।
महासमाङ्गौदनिका शीतपाक्योदनाह्वया ॥

[ धन्व० वर्ग १ श्लो० २८० ] इति ।

एतस्या लोके 'बला' इत्येव प्रसिद्धिः ।

**महाबलायां बलिका पुष्पिका पीतपुष्पिका ॥२६१॥**

**देवसहा सहदेवाऽतिबला वाट्यपुष्पिका ।**
**ऋष्यप्रोक्ता ऋक्षगन्धा कङ्कता वर्षपुष्पिका ॥२६२॥**

**वाट्यायनी भूरिबला तिष्या वीर्या बृहद्बला ।**
**महागन्धा गन्धवल्ली मङ्गल्यां च प्रसाधनी ॥२६३॥**

१ भद्रोदन्योदनाह्वया । वाट्यालकस्तथा वाट्य० नि० ॥ २ वाट्यपुष्पिका नि० ॥ ३ ऋष्यगन्धा नि० ॥ ४ ०ल्याऽर्थप्रसा० नि० ॥

महती चासौ बला च **महाबला**, तस्याम् । बला एव **बलिका** । पुष्पाणि सन्त्यस्याः **पुष्पिका**, "अतोऽनेकस्वरात्" [सिद्ध० ७.२.६] इतीकः । पीता चासौ पुष्पिका च **पीतपुष्पिका** ॥२६१॥

देवान् महते **देवसहा** । सह दीव्यति **सहदेवा** । अतिरिक्तं बलमस्या **अतिबला** । वाटचं–वेष्टनीयं पुष्पमस्या वाटचपुष्पी, के **वाटचपुष्पिका** । ऋष्यैः–मृगैः प्रोक्ता **ऋष्यप्रोक्ता** । ऋक्षस्य इव गन्धोऽस्या **ऋक्षगन्धा** । "**ककुङ् गतौ**" कङ्कते **कङ्कता**, "दृ-पृ-सृ-मृ-शी-" [हैमोणादिसू० २०७] इत्यादिना किदतः । वर्षे पुष्यति **वर्षपुष्पिका** ॥२६२॥

वाटचमयते **वाटचायनी** । भूरि बलमस्या **भूरिबला** । **तिष्या** मङ्गल्या । वीरे साध्वी **वीर्या**, "तत्र साधौ" [सिद्ध० ७. १. १५] इति य । बृहद् बलमस्या **बृहद्बला** । **बृहत्फला** इत्येके । महान् गन्धोऽस्या **महागन्धा** । गन्धस्य वल्ली **गन्धवल्ली** । मङ्गले साधुर्मङ्गल्या, "तत्र साधौ" [सिद्ध० ७.१ १५] इति यः । प्रसाध्यति **प्रसाधनी** । आह च--

महाबला वर्षपुष्पी तथा वाटचायनी स्मृता ।
सहदेवी देवसहा पीतपुष्पी बृहत्फला ।
बलिकाऽतिबला ज्ञेया वाटचपुष्पी च कङ्कता ।
ऋष्यप्रोक्ता ऋक्षगन्धा सैव भूरिबला मता ॥

[ धन्व० वर्ग १ श्लो० २८२, २८६ ] इति ।

एतद् बलात्रितयं ज्ञेयम् । यदवाधेतस्य गुणाधिकारे—

वात-पित्तापहं ग्राहि बल्यं वृष्यं बलात्रयम् ॥

[धन्व० वर्ग १ श्लो० २८७ ] इति ॥२६३॥

**मुसल्यां तु तालमूली दुर्नामारिर्महावृषा ।**
**वृष्यकन्दा तालपर्णी सुमूला बलदा शिवा ॥२६४॥**

"मुसच् खण्डने" दन्त्यान्त. मुस्यति **मुसली**, "तृपि-वपि-" [हैमोणादिसू० ४६८] इति किदल. तस्याम् । ताल इव मूलोऽस्या **तालमूली** । दुष्टो नाम–नमनमस्या दुनामा आवन्त. अर्शोरुक्, तस्या अरिः–नागनाद् **दुर्नामारिः** । महती वृषा **महावृषा** । वृष्य कन्दोऽस्या **वृष्यकन्दा** । ताले पर्णान्यस्या.

१ °हाबिषा लि० ॥

**तालपर्णी**, "पाक-कर्ण-पर्ण-" [ सिद्ध० २. ४.५५ ] इति ङीः। शोभनो मूलोऽस्याः **सुमूला** । बलं ददाति **बलदा** । **शिवा** निरुपद्रवा । आह च—

मुसली खलिनी तालपत्री काञ्चनपुष्पिका ।
महावृष्या वृष्यकन्दा खर्जूरी तालमूलिका ॥

[ ] इति ।

एतस्या लोके 'मुसली' इति प्रसिद्धिः ॥२६४॥

**हिङ्गौ जतुक-वाल्हीका-ऽगूढगन्धानि रामठम् ।**
**सहस्रवेधि भूतघ्नं जरणं सूपधूपनम् ॥२६५॥**

"हिंट् गति-वृद्धयोः" हिनोति नासां **हिङ्गुः**, पुं-क्लीबलिङ्गः, "हेर्हिन् च" [ हैमोणादिसू० ७६० ] इति गुः, तत्र । जायते **जतुकम्**, "कञ्चुकांशुक-" [हैमोणादिसू० ५७] इत्युके निपात्यते । **वाल्हीके**—उदीच्यदेशे भवं **वाल्हीकम्**, "कोपान्त्यात्" [ सिद्ध० ६.३.५६ ] इत्यण् । अगूढः—अगुप्तो गन्धोऽस्य **अगूढगन्धम्** । **रमठे**—उदीच्यदेशे भवं **रामठम्**, "भवे" [ सिद्ध० ६.३.१२३ ] इत्यण् । **सहस्रं**—बहु वेधयति **सहस्रवेधि** । भूतान् हन्ति **भूतघ्नम्** । जीर्यतेऽनेन **जरणम्**, क्लीबलिङ्गः । सूपस्य—प्रहितस्य धूपनं **सूपधूपनम्** । आह च—

हिङ्गु रामठमत्युग्रं जन्तुघ्नं भूतनाशनम् ।
अगूढगन्धं वाल्हीकं जरणं सूपधूपनम् ॥

[ धन्व० वर्ग २ श्लो०३६ ] इति ।

एतस्य लोके 'हिङ्गु' इति प्रसिद्धिः ॥२६५॥

**हिङ्गुपत्र्यां पृथुः पृथ्वी दीर्घिका वारिपत्रिका ।**
**जतुका रामठी वंशपत्री पिण्डा शिवाटिका ॥२६६॥**
**कारवी[1] कबरी तन्वी बाष्पिका बिल्विकेत्यपि ।**

हिङ्गोः पत्री **हिङ्गुपत्री**, तस्याम् । प्रथते **पृथुः**, "रमि-प्रथिभ्यामृच्च रस्य" [ हैमोणादिसू० ७३० ] इति सूत्रेण " प्रथिष् प्रख्याने " इत्यस्मात् किदुः प्रत्ययो रेफस्य च ऋकारः, "स्वरादुतः-" [सिद्ध०२.४.३५] इति ङ्यां **पृथ्वी** । **दीर्घिका**

१ करवी तन्वी नि० ॥

प्रलम्बत्वात् । वारि–वालकं तदिव पत्राण्यस्या. वारिपत्री, के **वारिपत्रिका** । **जतुका** प्राग्वत् । **रामठी**त्यत्र "अणञेये-" [ सिद्ध० २.४.२० ] इति ङीः । **वंशपत्री** वंशपत्राकारा । **पिण्डा** पिण्डत्वात् । शिवमटति **शिवाटिका** ॥२६६॥

कारोरियं **कारवी** संस्कर्त्री, "तस्येदम्" [ सिद्ध० ६.३.१६० ] इत्यण् । कबर्याकृतित्वात् **कबरी । बर्बरी** च **पाठभेदः** । **तन्वी** सूक्ष्मत्वात् । "बाष्पं स्रवति **बाष्पिका"** इति **क्षीरस्वामी** । बिल्वीव **बिल्विका** । आह च-

हिङ्गुपत्री तु कारवी पृथ्वीका पृथुका पृथुः ।
बाष्पिका दीर्घिका तन्वी बिल्विका दारुपत्रिका ॥
नाडी हिङ्गुपलाशा च जतुका रामठी रसा ।
वंशपत्री वेणुपत्री पिण्डा हिङ्गु शिवाटिका ॥
[ धन्व० वर्ग २ श्लो० ३८,४० ] इति ।

एतस्या लोके 'हिंगुउत्री' इति प्रसिद्धि ।

**काकजङ्घायां तु दासी लोमहीना प्रचीबला ॥२६७॥**
**नदीकान्ता नद्याख्या च पारापतपदीत्यपि ।**

काकस्येव जङ्घा अस्या **काकजङ्घा**, तस्याम् । "दासृग् दाने" दन्त्यान्तः, दासते **दासी,** अच् , गौरादित्वाद् ङी । लोमभिर्हीना **लोमहीना** । अत एव **लोमशा** । "चिंग्ट् चयने" प्रचिनोति **प्रचीबला,** "तुल्वलेल्वलादय" [ हैमोणादिसू० ५०० ] इति बले निपात्यते ॥२६७॥

नद्यां कान्ता **नदीकान्ता** । नदीन्याख्या अस्या **नद्याख्या** । पारापत इव पदान्यस्या· **पारापतपदी** । आह च—

काकजङ्घा ध्वाङ्क्षजङ्घा मदध्वाङ्क्षा सुलोमशा ।
पारापतपदी दासी नदीकान्ता प्रचीबला ॥
[ धन्व० वर्ग ४ श्लो० २३ ] इति ।

एतस्या लोके 'कालउवाडउ' इति प्रसिद्धिः ।

**काकनासायां सुरङ्गा वायसी वायसाङ्गिका ॥२६८॥**
**वाकणी तस्करा स्नायुः काकतुण्डफला च सा ।**

काकस्येव नासाऽस्याः **काकनासा**, तस्याम् । शोभनो रङ्गोऽस्याः **सुरङ्गा** । वायसस्येयं **वायसी**, "तस्येदम्" [ सिद्ध० ६.३.१६० ] इत्यण्, तदाभत्वात् । वायसस्येवाङ्गभासारूपं फलमस्याः वायसाङ्गी, स्वार्थिके के **वायसाङ्गिका** ॥२६८॥

वरुणस्येयं **वारुणी**, "तस्येदम्" [ सिद्ध०६.३.१६० ] इत्यण् । तस्करे इव **तस्करा** । स्नायति—वेष्टयति **स्नायुः**, "कृ-वा-पा-जि-" [ हैमोणादिसू० १ ] इत्युण् । काकतुण्डमिव फलमस्या **काकतुण्डफला** । आह च—

काकनासा ध्वाङ्क्षनासा काकतुण्डफला च सा ।
सुरङ्गा तस्करा स्नायुर्ध्वाङ्क्षतुण्डफला मता ॥
[ धन्व० वर्ग ४ श्लो० २५ ] इति ।

एतस्या लोके 'कायणी' इति प्रसिद्धिः ।

**पाषाणभेदे वृषभः शिलाभिच्चित्रपर्णकः** ॥२६९॥

पाषाणो भिद्यतेऽनेन **पाषाणभेदः**, तत्र । वर्षति **वृषभः**, "ऋषि-वृषि-" [ हैमोणादिसू० ३३१ ] इति किदभ । शिलां भिनत्ति **शिलाभित्** । चित्राणि पर्णान्यस्य **चित्रपर्णकः** । आह च—

पाषाणभेदकोऽश्मघ्नः शिलाभेदोऽश्मभेदकः ।
स चैवोपलभेदश्च नगविध्वंसकोऽश्मभित् ॥
[ धन्व० वर्ग २ श्लो० १५७ ] इति ।

एतस्य लोके 'पाषाणभेद' इत्येव प्रसिद्धिः ॥२६९॥

**हयुषायां विस्रगन्धा**

"हय क्रान्तौ च" हयति **हयुषा**, "ऋ-पृ-नहि-हनि-" [ हैमोणादिसू० ५५७ ] इत्यादिना उष प्रत्ययः, तस्याम् । विस्रो गन्धोऽस्या **विस्रगन्धा** ।

**विगन्धा वपुषा च सा ।**

'च' पुनः 'सा' हयुषा 'विगन्धा' गन्धरहिता "टुवपीं बीजसन्ताने" उच्यते **वपुषा**, "ऋ-पृ-नहि-हनि-" [ हैमोणादिसू० ५५७ ] इत्युषः । अनयोर्लोके 'हउंसि' इति प्रसिद्धिः । धन्वन्तरिस्तु अभेदेन आह—

हयुषा वपुषा विस्रा विस्रगन्धा विगन्धिका ।
अपरा [ धन्व० वर्ग २ श्लो० ९ ] इति ।

---

१ ⁰णभेदे नगभिच्छिलाभृच्चित्र⁰ मि० ॥ २ वपुषा मत्स्यगन्धिनी मि० ॥

**साऽन्याऽश्वत्थफला ध्वाङ्क्षनासिका कच्छुनाशनी ॥२७०॥**

'सा' इति हयुषा 'अन्या' अपरा अश्वत्थाकाराणि फलान्यस्या **अश्वत्थफला।** ध्वाङ्क्षस्येव नासिकाऽस्या **ध्वाङ्क्षनासिका**। कच्छुं नाशयति **कच्छुनाशनी**। आह च—

अन्याऽश्वत्थफला कच्छूघ्नी ध्वाङ्क्षनासिका।

[ धन्व० वर्ग २ श्लो० ९ ] इति।

हयुषाभेदोऽयम् ॥२७०॥

**घण्टारवायां स्यान्माल्यपुष्पिका शणघण्टिका।**
**अल्पघण्टा बृहत्पुष्पी शणपुष्पी महाशणः ॥२७१॥**

घण्टेव रवोऽस्याः **घण्टारवा**, तस्याम्। माल्यमिव पुष्पाण्यस्या माल्यपुष्पी, के **माल्यपुष्पिका**। शणाकारा घण्टिकेव **शणघण्टिका**। अल्पा चासौ घण्टा च **अल्पघण्टा**। बृहन्ति पुष्पाण्यस्याः **बृहत्पुष्पी**, "असत्काण्ड-प्रान्त-" [ सिद्ध० २.४.५६ ] इति ङीः। शणस्येव पुष्पाण्यस्याः **शणपुष्पी**, "असत्काण्ड-प्रान्त-" [ सिद्ध० २.४.५६ ] इति ङीः। महांश्चासौ शणश्च **महाशणः**। आह च—

शणपुष्पी बृहत्पुष्पी स चोक्तः शणघण्टकः।
महाशणो माल्यपुष्पी वामनी कटुतिक्तका॥

[ धन्व० वर्ग १ श्लो० २०० ] इति।

शणपुष्पीनामानि। लोके तु 'घूघरु' 'शेणहली' इति वा प्रसिद्धिः ॥२७१॥

**शणे तु किङ्कणी जाली जन्तुतन्तुर्महाशणः।**
**शीघ्रप्ररोही बलवान् सुपुष्पः क्षेत्रमण्डनः ॥२७२॥**

"शण् श्रण् मदने" इति **कविकल्पद्रुमधातुपाठोक्ते** शणयति **शणः**, तत्र। कङ्कते—यानि **किङ्कणिः**, "कङ्केरिच्चास्य वा" [ हैमोणादिसू० ६३९ ] इति अणिः, धातोरकारस्य चेकारः, विकल्पेन ङ्यां **किङ्कणी**। जालमस्त्यस्या **जाली**। जन्तुमयास्तन्तवोऽस्य **जन्तुतन्तुः**। द्वे नाम्नी इत्येके। महांश्चासौ शणश्च **महाशणः**। शीघ्रं प्ररोहति अवश्यं **शीघ्रप्ररोही**, "णिन् चावश्यका-" [ सिद्ध० ५.४.३६ ] इति णिन्। बलं विद्यतेऽस्य **बलवान्**। शोभनानि पुष्पाण्यस्य **सुपुष्पः**। क्षेत्रं मण्डयति **क्षेत्रमण्डनः**। आह च—

शणे तु किङ्कणी जाली [　　　　　　　　] इति ।
[ शणनामानि । एतस्य लोके 'शण' इति प्रसिद्धिः ] ॥२७२॥

**कुसुम्भेऽग्निशिख-महारजने कमलोत्तरम् ।**

"कुसुच् श्लेषे" कुस्यति **कुसुम्भम्**, "का-कुसिभ्यां कुम्भः" [ हैमोणादि-सू० ३३७ ] इति किदुम्भः; सुम्भि' सौत्रः, कौ सुम्भ्यते-निकुटयते वा [ **कुसुम्भः** ], पुं-क्लीबलिङ्गः, तत्र । अग्नेरिव शिखाऽस्य **अग्निशिखम्** । रज्यतेऽनेन **रजनम्** , "तुदादि-जिवृरञ्जि-" [हैमोणादिसू० २७३] इति किदनः, महच्च तद् रजनं च **महारजनम्**, क्लीबलिङ्गः । कमलेभ्य उत्तरं-प्रधानं **कमलोत्तरम्**, वर्णाधिक्यात् । आह **चामरः**—

अथ कमलोत्तरम् ।
स्यात् कुसुम्भं वह्निशिखं महारजनमित्यपि ॥
[ का० २ वर्ग ९ श्लो० १०६ ] इति ।

एतस्य लोके 'कुसुंभउ' इति प्रसिद्धिः ।

**शालपर्ण्यां दीर्घमूला त्रिपर्णी पीतनी ध्रुवा ॥२७३॥**
**विदारिगन्धाऽतिगुहा स्थिरा[1] शून्यांशुमत्यपि ।**

शालस्येव पर्णान्यस्याः **शालपर्णी**, "पाक-कर्ण-पर्ण-" [ सिद्ध० २. ४. ५५ ] इति ङी, तस्याम् । दीर्घो मूलोऽस्याः **दीर्घमूला** । त्रीणि पर्णान्यस्याः **त्रिपर्णी** । पीतयति **पीतनी** , "ध्रुंत् गति-स्थैर्ययो" ध्रुवति **ध्रुवा**, अच् ॥२७३॥

विदार्या गन्धोऽस्या **विदारिगन्धा** । "गुहौग् संवरणे" अत्यर्थं गूहति **अतिगुहा**, "नाम्युपान्त्य-" [ सिद्ध० ५. १. ५४ ] इति कः । तिष्ठति **स्थिरा**, "शुचीषि-" [ हैमोणादिसू० ४१६ ] इति किदिरः । शुने हिता **शून्या** "शुनो वश्चोदूत्" [ सिद्ध० ७. १. ३३ ] इति यः । अंशवः सन्त्यस्या **अंशुमती**, दीर्घमूलत्वात् । आह च—

शालपर्णी स्थिरा सौम्या त्रिपर्ण्यतिगुहा ध्रुवा ॥
विदारिगन्धांशुमती दीर्घमूला च पीतनी ।
सर्वानुकारिणी तन्वी दीर्घपर्णी च पर्णिका ।
[ धन्व० वर्ग १ श्लोक ८७, ८८, ९१] इति ।

एतस्या लोके 'सावनील' इति प्रसिद्धिः ।

---

१ स्थिरा शौम्यांशु° मु-शि० ॥

**भार्ग्यां बर्बरकः पद्मा वर्दको[1]ऽङ्गारवल्लिका ॥२७४॥**
**गर्दभशाक-ब्राह्मण्यौ हञ्जी ब्राह्मणयष्टिका ।**
**आवर्तक्या चर्मरङ्गा विभाण्डी [2]पीठिका लता ॥२७५॥**
**रक्तपुष्पी बिन्दुकिनी स्यान्महाजालिनी च सा ।**

"भृञ्जति **भार्गी**" इति **क्षीरस्वामी**; "भृगुजा" इत्येके, तस्याम् । "वृणोति **बर्बरः**" इति **क्षीरस्वामी**, "बर्ब् गतौ, बर्बरः" इत्यन्ये, "ऋच्छि-चटि-वटि-" [ हैमोणादिसू० ३९७ ] इत्यरः, स्वार्थिके के **बर्बरकः** । **पद्मा** पद्माभपुष्पा । "वृगट् वरणे" वृणोति वर्दः, "शा-शपि-मनि-कनिभ्यो दः" [ हैमोणादिसू० २३७ ] इति बहुवचनाद् दः, स्वार्थिके के **वर्दकः** । अङ्गाराभा वल्ल्योऽस्या अङ्गारवल्ली, स्वार्थिके के **अङ्गारवल्लिका** ॥२७४॥

गर्दभानां शाक इव **गर्दभशाकः**, गर्दभानां उपभोग्यत्वात् । **ब्राह्मणी** पवित्रत्वात् । हन्ति रोगं **हञ्जी**, "उटजादयः" [ हैमोणादिसू० १३४ ] इत्यजे निपात्यते । ब्राह्मणानां यष्टिका **ब्राह्मणयष्टिका** । आवर्तके साध्वी **आवर्तक्या**, "तत्र साधौ" [ सिद्ध० ७. १. १५ ] इति यः । चर्मेव रङ्गोऽस्या **चर्मरङ्गा** । विभायुक्तान्यण्डान्यस्या **विभाण्डी** । पीठोऽस्त्यस्या **पीठिका** । लाति **लता**, "पृषिरञ्जि-"[ हैमोणादिसू० २०८ ] इति किदतः ॥२७५॥

रक्तानि पुष्पाण्यस्या **रक्तपुष्पी**, "असत्काण्ड-प्रान्त-" [ सिद्ध० २. ४. ५६ ] इति ङीः । बिन्दुकाः सन्त्यस्याः **बिन्दुकिनी** । महाजालोऽस्त्यस्याः **महाजालिनी** ।

आह च—

भार्गी गर्दभशाकश्च पद्मा ब्राह्मणयष्टिका ।
अङ्गारवल्ली हञ्जी च वर्दो बर्बरकस्तथा ॥
शुक्रमाता च कासघ्नी भृगुजा भार्गवपर्णिनी ।
[ धन्व० वर्ग १ श्लोक ६८-६९ ] इति ।

तथा च—

हञ्जिका ब्राह्मणी पद्मा भार्गी ब्राह्मणयष्टिका ॥
अङ्गारवल्ली वालेयशाक-वर्बर-वर्दकाः ।
[ अमर० का० २ वर्ग ४ श्लो० ८९–९० ] इति ।

एतस्या लोके 'भाङंगि' इति प्रसिद्धिः ।

---

१ वन्दको नि० ॥ २ पिच्छिका नि०

**नाकुल्यां स्यादक्षिपीडा नेत्रपीडा विसर्पणी ॥२७६॥**
**शङ्खिनी दृढपादा च यवतिक्ता यशस्करी ।**

नकुलस्येयं **नाकुली**, "तस्येदम्" [ सिद्ध० ६. ३. १६० ] इत्यण् ; न आकुलयति वा, नखादित्वात् साधुः, तस्याम् । अक्ष्ण· पीडा अस्याः **अक्षिपीडा** । एवं **नेत्रपीडा** । "सृप्लृं गतौ" विसर्पति **विसर्पणी**, अनट् ॥२७६॥

शङ्खो विद्यतेऽस्या **शङ्खिनी** । दृढ पादो मूलेऽस्या· **दृढपादा** । यवाः तिक्ता अस्याः **यवतिक्ता** । यश करोति **यशस्करी** । आह च—

यवतिक्ता शङ्खिनी च दृढपादा विसर्पणी ।
नाकुली चाक्षिपिण्डा च चित्रमाला यशस्करी ॥
[ धन्व० वर्ग १ श्लो० २५६ ] इति ।

एतस्या लोके 'जवासी' इति प्रसिद्धि ।

**तेजस्विन्यां पारिजाता शीताऽश्वघ्नी महौजसी ॥२७७॥**
**तेजोवती तेजनी च तेजोह्वा वल्कलेति च ।**

तेजो विद्यतेऽस्या· **तेजस्विनी** , तस्याम् । पारिणः–पारवतोऽब्धेर्जाता **पारिजाता** । श्यायते स्म **शीता**, "श्य. शीर्द्रव-मूर्ति-" [सिद्ध० ४.१ ९७] इति शीरादेश । अश्वं हन्ति **अश्वघ्नी**, "अचित्ते टक्" [ सिद्ध० ५.१ ८३] इति टक् । महद् ओजोऽस्या **महौजसी** ॥२७७॥

तेजो विद्यतेऽस्या **तेजोवती** । तेजयति **तेजनी** । "ह्वेङ् आह्वाने" तेजः-शब्देन ह्वयते **तेजोह्वा** । "वलि वल्लि संवरणे" वलते **वल्कला**, "वलि-पुषे· कलक्" [ हैमोणादिसू० ४९६] इति कित् कलः प्रत्यय । आह च—

तेजस्विनी तेजवती तेजोह्वा तेजनी तिजा ।
अश्वघ्नी वल्कला शीता पारिजाता महौजसी ॥
[ धन्व० वर्ग १ श्लो० २५६] इति ।

एतस्या लोके 'तेजवती' इति प्रसिद्धि· ।

**मिश्रेयायां तालपर्णी छत्रा शीतशिवो मिसिः ॥२७८॥**
**शालेयो मधुरिका च शालीनस्तालकर्ण्यपि ।**

---

१ °डा नेत्रमूला विस° नि० ॥ २ दृढपादा च यवतिक्ताऽऽयसीश्वरा नि० ॥ ३ पीताऽश्वघ्ना नि० ॥ ४ °ल्कलेत्यपि नि० ॥

मस्यति–परिणमति **मिश्रेया**, "गय-हृदयादय" [ हैमोणादिसू० ३७० ] इत्यये निपात्यते, तस्याम् । ताल इव पर्णान्यस्या **तालपर्णी**, "पाक-कर्ण-पर्ण-" [सिद्ध० २.४ ५५] इति ङी । छत्राभपत्रत्वात् **छत्रा** । शीतं शिनोति **शीतशिवः**, "प्रह्वाह्व-" [ हैमोणादिसू० ५१४ ] इति वे निपात्यते । "मिश मश रोषे च" मिश्यते **मिसिः**, "नाम्युपान्त्य-" [ हैमोणादिसू० ६०९ ] इति किः, "पृषोदरादित्वाद् दन्त्य सकार । "मस्यति–परिणमते **मिसिः**" इति **क्षीरस्वामी** ॥२७८॥

शालाया भव **शालेयः**, गुरुत्वात् , "भवे"[सिद्ध० ६. ३. १२३] इत्येयण्, शालते इति वा, "गय-हृदयादय" [ हैमोणादिसू० ३७० ] इत्यये निपात्यते । मधु विद्यतेऽत्र मधुरा, "मध्वादिभ्यो रः" [ सिद्ध० ७.२. २६] इति रः, माद्यत्यनया वा, "श्वशुर-कुकुन्दुर-" [ हैमोणादिसू० ४२६ ] इत्युरे निपात्यते, स्वार्थिके के **मधुरिका** । शालाप्रवेशनमर्हति **शालीनः**, "शालीन-कौपीन-" [सिद्ध० ६ ४ १८५] इति निपात्यते । ताल इव कर्ण –पत्रमस्या **तालकर्णी**, 'पाक-कर्ण-पर्ण-" [सिद्ध० २.४.५५] इति ङीः । आह च––

मिश्रेया तालकर्णी च तालपर्णी मिमिस्तथा ।
शालेय स च शालीनो नाम्ना शीतशिवो मत ॥
[ धन्व० वर्ग २ श्लो० ४ ] इति ।

एतस्या लोके 'व्रीहाली' इति प्रसिद्धि ।

**पथिकायां तु तुलसी तालपत्री लवङ्गकम् ॥२७९॥**
**कन्दपत्री त्वचं पत्री तलपत्रकमुन्दुरा ।**

पथोऽस्त्यस्या **पथिका**, 'अतोऽनेकस्वरात्" [ सिद्ध० ७.२. ६ ] इतीकः, तस्याम् । "तुलण् उन्माने" तोल्यते **तुलसी**, "फनस-" [ हैमोणादिसू० ५७३ ] इति निपात्यते । ताल इव पत्राण्यस्यास्तालपत्री लवङ्गप्रतिकृति **लवङ्गकम्** , "तस्य तुल्ये क सञ्ज्ञा-प्रतिकृत्यो" [सिद्ध० ७.१. १०८] इति कः ॥२७९॥

कन्दाकाराणि पत्राण्यस्या **कन्दपत्री** । त्वचति–वृणोति **त्वचम्** , अच् । पतति **पत्री**, "नी-दाव्-" [ सिद्ध० ५.२. ८८ ] इति त्रट् । तल इव पत्रमस्य तलपत्रम्, के **तलपत्रकम्** । 'उन्दैप् क्लेदने" उनत्ति **उन्दुरा**, "वाश्यसि-वासि-" [ हैमोणादिसू० ४२३] इत्युर । आह च––

१ कन्दपत्रत्वच पत्राऽमलपत्रकमुत्तरा नि० ॥

तालीसकं तु तालीसं पत्रं तालीसपत्रकम्।
तद्वदामलकीपत्रं पत्राढ्यं च सुखादनम्॥
[ धन्व० वर्ग २ श्लो० ५३ ] इति।
पथिका तुलसी पत्री कालपत्री त्वचं तथा।
लवङ्गपत्री कन्दा स्यादुन्दुरा नलपत्रकम्॥ ,
[ ] इति।

एतस्य लोके 'तालीसपत्र' इति प्रसिद्धिः। अन्ये तु भेदं मन्यन्ते। आह च—

तालीसपत्रं तालीसं धात्रीपर्णं शुकोदरम्।
अपरं पथिकापत्रं पत्राढ्यं तुलसी छदम्॥
[ ] इति।

**मांस्यां पेशी कृष्णजटा नलदा जटिला जटा॥२८०॥**
**तपस्विन्यामिषी हिंस्रा क्रव्यादी पिशिता च सा।**

"समासत्वाद् **मांसी**" इति क्षीरस्वामी, तस्याम्। "पिशंत् अवयवे" पिंशति पेशि, "किलि-पिलि-" [हैमोणादिसू० ६०८ ] इति इः, ङ्यां **पेशी**। कृष्णा जटा अस्या. **कृष्णजटा**। नलं ददाति **नलदा**, "आतो डो-" [ सिद्ध० ५.१.७६ ] इति ड। जटा. सन्त्यस्या **जटिला**, "काला-जटा-घाटात् क्षेपे" [सिद्ध० ७.२.२३] इतील। अभ्रादित्वादप्रत्यये **जटा** ॥२८०॥

अत एव तपो विद्यते अस्या **तपस्विनी**, "अस्-तपो-माया-मेधा-" [सिद्ध० ७.२.४७] इति विन् प्रत्यय। मांसयुक्तत्वाद् **आमिषी**; अम्यते वा **आमिषी**, "अमि-मृभ्यां णित्" [हैमोणादिसू० ५४५ ] इतीष। **हिंस्रा**, हिंसकत्वात्। क्रव्यमत्ति **क्रव्यादी**। पिंशति **पिशिता**, "कुशि-पिशि-" [ हैमोणादिसू० २१२] इति किदितः। आह च—

मांसी कृष्णजटा हिंस्रा नलदा जटिलाऽऽमिषी।
जटा च पिशिता मेषी क्रव्यादी च तपस्विनी॥
[ धन्व० वर्ग ३ श्लो० ४५] इति।

एतस्या लोके 'छड' इति प्रसिद्धिः।

**गन्धमांस्यां पुनः केशी भूतकेशी पिशाचिका॥२८१॥**
**सुलोमशा भूतजटा पूतना केशिकेत्यपि।**

गन्धोपलक्षिता मांसी **गन्धमांसी**, तस्याम्। **केशी** केशाकारत्वात्। क्लिश्यति वा **केशी**, "क्लिशः के च" [ हैमोणादिसू० ५३० ] इति शः।

भूतोपलक्षिता केशी **भूतकेशी** । पिशाचाः सन्त्यस्यां **पिशाचिका,** "अतोऽनेकस्वरात्" [सिद्ध० ७.२.६] इतीक ॥२८१॥

सुतरां लोमानि श्यति **सुलोमशा** । भूत इव भूतानां वा जटा अस्या **भूतजटा** । "पूगूश् पवने" पूयते **पूतना,** "पृ-पूभ्यां कित्" [हैमोणादिसू० २९३] इति कित् तन । केशाः सन्त्यस्या **केशिका,** "अतोऽनेकस्वरात्" [सिद्ध० ७.२.६] इतीकः । आह च—

द्वितीया गन्धमासी च केशा भूतजटा स्मृता ।
पैशाची पूतना केशी भूतकेशी सुलोमशा ॥
[ धन्व० वर्ग ३ श्लो० ४७ ] इति ।

मासीभेदोऽयम् । कृष्णेयम् । आह च—

मांसी जटा भूतकेशी क्रव्यादा नलदा शिवा ।
कृष्णाऽन्या पूतना केशी गन्धमांसी पिशाचिका ॥
[ ] इति ।

**मुरायां सुरभिर्दैत्या गन्धाढ्या गन्धमादनी ॥२८२॥**
**भूरिगन्धा गन्धवती कुटी गन्धकुटी च सा ।**

"मुरत् वेष्टने" मुरति **मुरा,** दैत्याख्यत्वात्, "नाम्युपान्त्य-" [ सिद्ध० ५.१.५४ ] इति क., तस्याम् । सुतरां रभते **सुरभिः,** "पदि-पठि-" [ हैमोणादिसू० ६०७] इत्यादिना इ । दैत्ये साधु **दैत्या** । यद् **विश्वः**—

दैत्योऽसुरे मुराया तु दैत्या चण्डौषधावपि ।
[ ] इति ।

गन्धेन आढ्या **गन्धाढ्या** । गन्धेन मदयति **गन्धमादनी,** रम्यादित्वादनटि बाहुलकाद् ह्रस्वाभाव, टित्वाद् ङी ॥२८२॥

भूरि—प्रचुरो गन्धोऽस्या **भूरिगन्धा** । गन्धो विद्यतेऽस्या **गन्धवती** । "कुटत् कौटिल्ये" कुटनि **कुटी,** गौरादित्वाद् ङी । गन्धस्य कुटी—घटी **गन्धकुटी** । आह च—

मुरा गन्धवती दैत्या गन्धाढ्या गन्धमादनी ।
सुरभिर्भूरिगन्धा च कुटी गन्धकुटी स्मृता ॥
[ धन्व० वर्ग ३ श्लो० ६७ ] इति ।

एतस्या लोके 'एकांगी' इति प्रसिद्धिः ।

**प्रपुण्डरीके पौण्डर्यं सानुजं पौण्डरीयकम् ॥२८३॥**
**प्रपौण्डरीकं चक्षुष्यं सत्पुष्पं सानुमानकम् ।**

प्रकर्षेण पुणति पुण्ड्यते वा **प्रपुण्डरीकम्**, "सृणीका-ऽस्तीक-" [ हैमोणादिसू० ५० ] इतीके निपात्यते, तत्र । पुण्डरीकशब्दस्यैकदेशानुकाराद् लोपे पुण्डरीकस्येदं **पौण्डर्यम्**, दाहहरत्वात् । सानौ जातं **सानुजम्**, "क्वचित्" [ सिद्ध० ५ १.१७१ ] इति ड । पुण्डरीकस्येदं पौण्डरीयम्, के **पौण्डरीयकम्** ॥२८३॥

प्रकर्षेण पुण्डरीकस्येदं **प्रपौण्डरीकम्**, दाहहरत्वात, "तस्येदम्" [ सिद्ध० ६.३.१६० ] इत्यण् । चक्षुषे हितं **चक्षुष्यम्**, "प्राण्यङ्ग-" [सिद्ध० ७.१,३७] इति यः । सन्ति पुष्पाण्यस्य **सत्पुष्पम्** । सानौ मान्यते सानुमानम्, के **सानुमानकम्** । आह च—

प्रपौण्डरीकं चक्षुष्यं पौण्डर्यं पुण्डरीयकम् ।
पौण्डरीकं शतपुष्पं सुपुष्पं सानुमानकम् ॥
[ धन्व० वर्ग ३ श्लो० ९२ ] इति ।

एतस्य लोके 'पद्म' इति प्रसिद्धिः । "स्थलपद्मम्" इति **गौडः** ।

**जतूकायां तु जतुका जतुकृच्चक्रवर्तनी ॥२८४॥**
**जन्तुका जतुकारी च संस्पर्शा जननी जनी ।**

जतु करोति **जतूका**, "क्वचित्" [ सिद्ध० ५.१.१७१ ] इति डः, पृषोदरादित्वाद् दीर्घः, तस्याम् । जायतेऽस्या जतु, "मनि-जनिभ्यां ध-तौ च" [ हैमोणादिसू० ७२१] इत्युः तकारश्च, जत्वेव **जतुका** । जतु करोति **जतुकृत्** । चक्रेण वर्तते **चक्रवर्तनी** ॥२८४॥

जायते जन्तुः, "कृसि-कम्यमि-" [ हैमोणादिसू० ७७३ ] इति तुन्, स्वार्थिके के **जन्तुका** । जतु करोति **जतुकारी**, कर्मण्यण् । सङ्गतः स्पर्शोऽस्याः **संस्पर्शा** । जायतेऽस्यां **जननी**, "करणाऽऽधारे" [ सिद्ध० ५.३.१२९] इत्यनट् । जायतेऽस्यां **जनी**, गौरादित्वाद् ङीः । आह च—

जन्तुवारा जन्तुकृष्णा जतुका रजनी स्मृता ।
जननी चैव संस्पर्शा जतुका चक्रवर्तनी ॥
[ धन्व० वर्ग ४ श्लो० ८८] इति ।

एतस्या लोके 'जंतुवार' इति प्रसिद्धिः ।

**मांसरोहायां विकसा वृन्ता चर्मकशा रुहा ॥२८५॥**

मांसे रोहः—प्ररोहोऽस्याः **मांसरोहा**, तस्याम् । विकसति **विकसा** । वृणोति **वृन्ता**, "पुत-पित्त-" [ हैमोणादिसू० २०४ ] इति ते निपात्यते । चर्मकशेव **चर्मकशा** । रोहति—प्रादुर्भवति **रुहा**, "नाम्युपान्त्य-" [ सिद्ध० ५.१.५४ ] इति कः । आह च –

मांसरोहिण्यतिरुहा वृन्ता चर्मकशा कशा ।
विकसा मांसरोहा च रुहा रक्ता प्रकीर्तिता ॥
[ धन्व० वर्ग ४ श्लो० ९४ ] इति ।

एतस्या लोके 'रोहा' इति प्रसिद्धिः ॥२८५॥

**रक्तपाद्यां नमस्कारी समाङ्गाऽञ्जलिकारिका ।**
**गण्डकाली शमीपत्रा रास्ना खदिरिका च सा ॥२८६॥**

रक्तः पादोऽस्याः **रक्तपादी**, तस्याम् । नमस्करोति **नमस्कारी** । समान्यङ्गान्यस्याः **समाङ्गा** । अञ्जलिं कारयति **अञ्जलिकारिका**, अञ्जलितपत्रत्वात्, णके आप् । गण्डेषु—ग्रन्थिषु काली **गण्डकाली** । शम्याकाराणि पत्राण्यस्याः **शमीपत्रा** । रसत्यनया **रास्ना**, "रसेर्वा" [ हैमोणादिसू० २६० ] इति विकल्पेन णिद् नः । "खद हिंसायाम्" खदति खदिरी, "मदि-मन्दि-" [ हैमोणादिसू० ४१२ ] इति इरः, गौरादित्वाद् ङी, स्वार्थिके के **खदिरिका** । आह च—

रक्तपादी शमीपत्रा समाङ्गाऽञ्जलिकारिका ।
नमस्कारी गण्डकाली नाम्ना(? रास्ना) खदिरिका मता ॥
[ धन्व० वर्ग ४ श्लो० १०९ ] इति ।

एतस्या लोके 'खयरी' इति प्रसिद्धिः ॥२८६॥

**तद्विशेषस्त्रिपादी स्यात् सुपादी हंसपादिका ।**
**विषग्रन्थिर्हंसपदी घृतमण्डलकोऽपि च ॥२८७॥**

तस्याः—रक्तपाद्या विशेषस्तद्विशेषः 'स्याद्' भवेत् त्रयः पादा अस्या**स्त्रिपादी** । शोभनाः पादा अस्याः **सुपादी** । हंस इव पादा अस्या हंसपादी, के **हंसपादिका** । विषयुक्तो ग्रन्थिरस्या **विषग्रन्थिः** । हंस इव पदमस्या **हंसपदी** । घृतस्य मण्डलकः **घृतमण्डलकः** । आह च—

१ वृन्ता चर्मकषा रुहा नि० ॥ २ °मण्डलिकाऽपि नि० ॥

रक्तपादपरा प्रोक्ता विषग्रन्थिस्त्रिपाद्यपि ।
हंसपादी हंसपदी घृतमण्डलकश्च सा ॥
[ धन्व० वर्ग ४ श्लो० १११] इति ।

एतस्या लोके 'हंसपदी' इति प्रसिद्धिः ॥२८७॥

**अथ स्याज्जलपिप्पल्यां शारदी शकुलादनी ।**
**मत्स्यादनी मत्स्यगन्धा लाङ्गली तोयपिप्पली ॥२८८॥**

जलस्य पिप्पली **जलपिप्पली**, तस्याम् । शरदि—ऋतुविशेषे भवा **शारदी**, "भर्तु-सन्ध्यादेरण्" [सिद्ध० ६. ३ ८९] इत्यण् , "अणञेये-" [सिद्ध० २.४.२०] इति ङी । **शकुलादनी**, मत्स्यभक्षणात् । अत एव **मत्स्यादनी** । मत्स्यस्येव गन्धोऽस्या **मत्स्यगन्धा** । **लाङ्गली** हलाकारत्वात् । तोयस्य पिप्पली **तोयपिप्पली** । **अम्बुपिप्पल्यपि** । आह च—

जलपिप्पल्यभिहिता शारदी तोयपिप्पली ।
मत्स्यादनी मत्स्यगन्धा लाङ्गली शकुलादनी ।
[ धन्व० वर्ग ४ श्लो० ६४ ] इति ।

एतस्या लोके 'जलपिंपली' इति प्रसिद्धिः ॥२८८॥

**शिवमल्ल्यां पाशुपतः सुव्रतो वसुको बुकः ।**
**कुलपुष्पः किण्वमूलः पाण्डुराङ्गः[1] प्रियः कुलः ॥२८९॥**

शिवप्रिया मल्ली **शिवमल्ली** । उक्तं च—

बुकं बिल्वं सधुत्तूरं सुमना पाटला तथा ।
पद्ममुत्पल-गोसूर्यमष्टौ पुष्पाणि शङ्करे ॥
[ ] इति ।

तस्याम् । पशुपतेः प्रियोऽयं **पाशुपतः**, "तस्येदम्" [ सिद्ध० ६-३.१६०] इत्यण् । शोभनो व्रतोऽस्य **सुव्रतः** । वस्ते—छादयति वसुः, "भृ-मृ-तृ-त्सरि-" [हैमोणादिसू० ७१६ ] इत्युः, स्वार्थिके के **वसुकः** । "वसति **वसुकः**" इत्यपरे, "कञ्चुकांशुक-" [ हैमोणादिसू० ५७ ] इत्युके निपात्यते । "वांकृ गति-गन्धनयो " वाति **बुकः**, "कञ्चुकांशुक-" [ हैमोणादिसू० ५७ ] इत्युके निपातनात् साधुः । "**वेकः**" इति **प्राच्याः** प्रोचुः । कुले पुष्पति **कुलपुष्पः** । किण्वं मूलेऽस्य **किण्व-**

1 पाण्डुरोगप्रियः मि० ॥

**मूलः**। पाण्डुरमङ्गमस्य **पाण्डुराङ्गः**। प्रीणाति **प्रियः**, "नाम्युपान्त्य-" [ सिद्ध० ५.१.५४ ] इति कः। "कुल बन्धु-सन्तानयोः" कोलति "**कुलः**, "नाम्युपान्त्य-" [ सिद्ध० ५.१.५४ ] इति कः। आह च—

बुको वसुक इत्युक्त शिवाङ्क शिवशेखरः।
महापाशुपतश्चैव मुवन शिवमल्लिका ॥
[ धन्व० वर्ग ४ श्लो० १९ ] इति।

एतस्य लोके 'बूअ' इति प्रसिद्धिः ॥२८९॥

**अतिविषायां तु विश्वा भङ्गुरा श्वेतकन्दिका।**
**उपविषा श्यामकन्दा शृङ्गी प्रतिविषा विषा ॥२९०॥**

अतिक्रान्ता विषाद् **अतिविषा**, तस्याम्। "विशत् प्रवेशने" विशति अन्तः **विश्वा**, "निघृषि-" [ हैमोणादिसू० ५११ ] इति किद् वः। भज्यते इत्येवंशीला **भङ्गुरा**, "भञ्जि-भासि-मिदो घुर" [सिद्ध० ५. २.७४] इति घुर। श्वेतः कन्दोऽस्याः श्वेतकन्दा, स्वार्थिके के **श्वेतकन्दिका**। उप—समीपे विषमस्या **उपविषा**। श्यामः कन्दोऽस्या **श्यामकन्दा**। "शृङ्गयुक्तत्वात् **शृङ्गी**" इति **क्षीरस्वामी**। "शृणाति रोगान् **शृङ्गी**" इत्यपरे, "शृङ्ग-शार्ङ्गादय" [ हैमोणादिसू० ९६ ] इति गे निपात्यते, गौरादित्वाद् ङीः। प्रतीपा विषस्य **प्रतिविषा**, अगदत्वात्। वेवेष्टि **विषा**। आह च—

अतिविषा शुक्लकन्दा ज्ञेया विश्वा च भङ्गुरा।
श्यामकन्दा प्रतिविषा शृङ्गी चोपविषा विषा ॥
[ धन्व० वर्ग १ श्लो० १० ] इति।

एतस्या लोके 'अतिविसु' इति प्रसिद्धिः ॥२९०॥

**मेदायां स्यान्मणिच्छिद्रा मधुरा शालपर्ण्यपि।**

"मिदि मिदृ स्निहि" इति **कविकल्पद्रुम**धातुपाठोक्तेः मेदयति **मेदा**, तस्याम्। मणीनां छिद्रमस्या **मणिच्छिद्रा**। मधु विद्यते अस्या **मधुरा**, "मध्वादिभ्यो र." [ सिद्ध० ७.२.२६ ] इति रः, माद्यति अनया वा, "श्वशुर-कुकुन्दुर-" [ हैमोणादिसू० ४२६ ] इत्युरे निपात्यते। शाल इव पर्णान्यस्या **शालपर्णी**, "पाक-कर्ण-पर्ण-" [ सिद्ध० २.४.५५ ] इति ङीः।

**महामेदायां तु वसुच्छिद्रा देवमणिर्वसुः ॥२९१॥**

**॥ इत्याचार्यश्रीहेमचन्द्रविरचिते निघण्टुशेषे**
**द्वितीयो गुल्मकाण्डः ॥२॥**

---

१ °विषाऽरुणा नि० ॥

महती चासौ मेदा च महामेदा, तस्याम् । वसूनां छिद्रमस्या वसुच्छिद्रा । देवश्चासौ मणिश्च देवमणिः । वसति वसुः, "भृ-मृ-तृ-त्सरि-" [ हैमोणादिसू० ७१६ ] इत्युः । आह च—

मेदा ज्ञेया मणिच्छिद्रा माल्यवर्णाऽधराऽपि च ।
महामेदा देवमणिर्वसुच्छिद्रा प्रकीर्तिता ॥
[ धन्व० वर्ग० १ श्लो० १२७] इति ।

मेदाविशेषोऽयम् । अनयोर्लोके 'मेद' इति प्रसिद्धिः ॥२९१॥

॥ इति श्रीमद्बृहत्खरतरगच्छे श्रीजिनराजसूरिशिष्यश्रीजयसागर-
महोपाध्यायपट्टानुक्रमायातवाचनाचार्य-
श्रीभानुमेरुगणिशिष्यसमस्त-
प्रशस्तग्रन्थावलि-
विचक्षणश्रीज्ञानविमलोपाध्याय-
शिष्यवाचनाचार्यश्रीश्रीवल्लभगणिविरचितायां
श्रीहेमचन्द्राचार्यकृतनिघण्टुशेषटीकायां गुल्मकाण्डो द्वितीयः
समाप्तः ॥२॥



# ३

## [ तृतीयो लताकाण्डः ]

॥ अर्हम् ॥ अथ तृतीयं लताकाण्डं व्याख्यायते —

**गुञ्जायां कृष्णला काकचिञ्चिका काकनिन्दिका ।**
**काकादनी काकनखी रक्तिका काकनन्तिका ॥२९२॥**
**काकपीलुश्चक्रशल्या दुर्मेषा ताम्रिकोच्चटा ।**
**चूडामणिर्द्रुमोद्घा च शीतपाकी शिखण्डिनी ॥२९३॥**

"क्षीज कूज गुज गुजु अव्यक्ते शब्दे" गुञ्जति शिम्ब्या **गुञ्जा,** तस्याम्। कृष्णं प्रान्ते लाति **कृष्णला** । काकपर्णा चिञ्ची–प्रान्तोऽस्या काकचिञ्ची, स्वार्थिके के **काकचिञ्चिका** । काक इव निन्द्यते श्यामवर्णेन **काकनिन्दिका** । काकैरद्यते **काकादनी** । काकस्येव नखोऽस्या **काकनखी** । रक्तो वर्णोऽस्त्यस्या **रक्तिका,** "अतोऽनेकस्वरात्" [ सिद्ध० ७.२.६ ] इतीक । काकान् अन्तयति **काकनन्तिका,** पृषोदरादित्वात् ॥२९२॥

काकानां पीलुरिव **काकपीलुः** । चक्राकारं शल्यमस्या **चक्रशल्या** । दुष्टो मेषोऽस्या **दुर्मेषा** । ताम्रो वर्णोऽस्त्यस्या **ताम्रिका,** "अतोऽनेकस्वगत्" [सिद्ध० ७.२.६] इतीकः । "चट् च भेदे" उच्चटति **उच्चटा** । चूडाया मणिः **चूडामणिः** । द्रुमेषु उद्घा **द्रुमोद्घा** । शीतेन पाकोऽस्या **शीतपाकी,** "पाक-कर्ण-पर्ण-" [सिद्ध० २.४-५५] इति ङी । शिखण्डोऽस्त्यस्या **शिखण्डिनी** । आह च—

काकादनी काकपीलु काकशिम्बिश्च रक्तिका ।
चक्रशल्या ध्वाङ्क्षनखी द्रुमोद्घा काकनन्तिका ॥
चूडामणि शीतपाकी शिखण्डा कृष्णला मता ।
उच्चटा ताम्रिका गुञ्जा [चटकी काकसाह्वया] ॥
[ धन्व० वर्ग ४ श्लो० २७,२९ ] इति ।

एतस्या लोके 'चिणउठी' इति प्रसिद्धिः ॥२९३॥

---

१ °द्रुमौषा च शतपाकी सि० ॥

**पाठायां श्रेयसी पापचेलिका [1]विद्धकर्णिका ।**
**वृकतिक्ता [2]वनतिक्ता प्राचीना स्थापनी वृकी ॥२९४॥**
**एकाष्ठीला रसाऽम्बष्ठाऽम्बष्ठकी वृकदन्तिका ।**

पाठ्यते **पाठा,** तस्याम् । अतिशयेन प्रशस्या **श्रेयसी,** "गुणाङ्गाद्वेष्ठेयसू" [ सिद्ध० ७.३.९ ] इति ईयसौ प्रत्यये "प्रशस्यस्य श्रः" [ सिद्ध० ७.४.३४ ] इति श्रादेशः । पापा चासौ चेली च पापचेली, वृकीत्वात् , "निन्द्यं कुत्सनैरपापाद्यैः" [ सिद्ध० ३.१.१०० ] इति समासः, स्वार्थिके के **पापचेलिका** । विद्धौ कर्णौ यया सा विद्धकर्णी, शास्त्रे श्रूयमाणत्वात् , स्वार्थिके के **विद्धकर्णिका** । वृक इव तिक्तरसा **वृकतिक्ता** । वने तिक्तरसा **वनतिक्ता** । प्राचि भवा **प्राचीना** । स्थाप्यते **स्थापनी,** बस्तिकर्मोपयोग्या । "कुकि वृकि आदाने" वर्कते **वृकी,** 'नाम्युपान्त्य-" [ सिद्ध० ५.१.५४ ] इति कः । वृणातीति वा, "विचिपुषि-" [ हैमोणादिसू० २२ ] इति कित् क ॥२९४॥

एकः अष्ठील—मज्जा अस्या **एकाष्ठीला** । रस्यते **रसा** । अमति **अम्बष्ठा** । "पष्ठैधिठादय" [ हैमोणादिसू० १६६ ] इति ठे निपात्यते, "कीचक-पेचक-" [ हैमोणादिसू० ३३ ] इत्यके निपातनाद् **अम्बष्ठकी** । वृकस्य इव दन्ता अस्या वृकदन्ती के **वृकदन्तिका** । आह च—

पाठाऽम्बष्ठाऽम्बष्ठकी च प्राचीना पापचेलिका ।
वृकतिक्ता वनतिक्ता पापिका स्थापनी वृकी ॥

[ धन्व० वर्ग १ श्लो० ७० ] इति ।

एतस्या लोके 'पाठ' इति प्रसिद्धिः ।

**शतावर्यां बहुसुता पीवरीन्दीवरी वरी ॥२९५॥**
**[3]शतमूली शतपदी शतवीर्या मधुस्रवा ।**
**नारायणी [4]द्वीपिशत्रुर्द्वीपिकाऽभीरुपत्रिका ॥२९६॥**
**महापुरुषदन्तोर्ध्वकण्टका वरकण्टका ।**
**सहस्रवीर्या तुङ्गिन्यभीरुः संवरणीत्यपि ॥२९७॥**

शतेन आवृणोति **शतावरी,** तस्याम् । बहुधा सुवति **बहुसुता,** "सुसि-तनि-तुसेर्दीर्घश्च वा" [ हैमोणादिसू० २०३ ] इति कित् तः प्रत्ययः । पीयते **पीवरी,**

१ वृद्धकर्णिका मि० ॥ २ वरतिक्ता मि० ॥ ३ शतमूला मि० ॥ ४ द्विपिशत्रु॰ मि० ॥

"तीवर-धीवर-" [ हैमोणादिसू० ४४४ ] इति वरटि निपात्यते । "प्यैङ् वृद्धौ" प्यायते वा **पीवरी**, "ध्या-प्योर्धी पी च" [ हैमोणादिसू० ९०८ ] इति कनिप् प्रत्यय पी इत्यादेशश्च । **इन्दीवरी**, उत्पलपुष्पत्वात् । वृणोति **वरी** ॥२९५॥

शतं–बहूनि मूलान्यस्याः **शतमूली** । शतं–बहूनि पदान्यस्याः **शतपदी** । शतं–बहु वीर्यमस्याः **शतवीर्या** । मधु स्रवति **मधुस्रवा** । नारायणस्येयं **नारायणी** विष्णुजाता, "तस्येदम्" [ सिद्ध० ६.३.१६० ] इत्यण् । द्वीपिनः शत्रुरिव **द्वीपिशत्रुः** । द्वीपो विद्यतेऽस्या **द्वीपिका** । न भीरूणि पत्राण्यस्या अभीरुपत्री, स्वार्थिके के **अभीरुपत्रिका** ॥२९६॥

महापुरुषेण दत्ता **महापुरुषदत्ता** । ऊर्ध्वं कण्टकान्यस्या **ऊर्ध्वकण्टका** । वराः कण्टका अस्या **वरकण्टका** । सहस्रं–बहु वीर्यमस्या **सहस्रवीर्या** । तुङ्गो विद्यतेऽस्या **तुङ्गिनी** । न भीरुः **अभीरुः** स्थिरपत्रा । संव्रियते **संवरणी** । आह च—

शतावरी शतपदी पीवरीन्दीवरी वरी ।
ऋक्षप्रोक्ता द्वीपिशत्रुर्द्वीपिका वरकण्टका ॥
सह[स्र]वीर्याऽभीरुश्च तुङ्गिनी बहुपत्रिका ।
महापुरुषदत्ता च शतावर्यूर्ध्वकण्टका ॥
[ धन्व० वर्ग १ श्लो० २९१, २९३ ] इति ।

शतस्या लोके 'शतावरी' इति प्रसिद्धि ॥२९७॥

**कटुकायां मत्स्यपित्ता रोहिणी कटुरोहिणी ।**
**अशोकरोहिणी कृष्णभेदा तिलकरोहिणी ॥२९८॥**
**कटम्बरा काण्डरुहा रास्ना तिक्तकरोहिणी ।**
**तिक्ताऽरिष्टा कटुर्मत्स्या चक्राङ्गी शकुलादनी ॥२९९॥**

कटति **कटुः**, "भृ-मृ-तृ-त्सरि-" [ हैमोणादिसू० ७१६ ] इत्युः, स्वार्थिके के **कटुका**, तस्याम् । मत्स्यपित्तास्वादा मत्स्याना पित्त–जीवितं वा **मत्स्यपित्ता** । रोहयत्यङ्गं **रोहिणी** । कटुश्चासौ रोहिणी च **कटुरोहिणी** । नास्ति शोकोऽस्या अशोका, सा चासौ रोहिणी च **अशोकरोहिणी** । **शोकरोहिणी**त्यपि । कृष्णो भेदः–छेदोऽस्याः **कृष्णभेदा** । तिलक रोहयति **तिलकरोहिणी** ॥२९८॥

कटति–आवृणोति शलं **कटम्बरा**, "जठर-क्रकर-" [ हैमोणादिसू० ४०३ ] इत्यरे निपात्यते । काण्डे रोहति **काण्डरुहा**, "नाम्युपान्त्य-" [ सिद्ध० ५.१.५४ ]

१ कटम्भरा नि० ॥

इति कः। रसति **रास्ना,** "रसेर्वा" [ हैमोणादिसू० २६० ] इति नः। तिक्तकस्य रोहिणी **तिक्तकरोहिणी**। तेजयति **तिक्ता,** "पुत-पित्त-" [ हैमोणादिसू० २०४ ] इति ते निपात्यते। न रिष्यते– न ह्रियते **अरिष्टा,** "शी-री-" [ हैमोणादिसू० २०१ ] इति बहुवचनात् कित् तः। कटुशब्दसाधनाऽत्रैव प्रागुक्ता। **मत्स्या** मत्स्यपित्तत्वात्। चक्राकारमङ्गमस्याः **चक्राङ्गी**। शकुलैरद्यते **शकुलादनी**। आह च—

कटुका मत्स्यशकुला मत्स्यपित्ता च रोहिणी।
कृष्णभेदा चन्द्ररुहा नाम्ना(?रास्ना) कटुकरोहिणी॥
अशोका रोहिणी तिक्ता चक्राङ्गी शकुलादनी।
कटुरोहिण्यरिष्टा च प्रोक्ता तिक्तकरोहिणी॥
[ धन्व० वर्ग १ श्लो० ३७–३८ ] इति।

एतस्या लोके 'कडू' इति प्रसिद्धिः ॥२९९॥

**कपिकच्छूरात्मगुप्ता कण्डुरा दुरभिग्रहा।**
**अजहा मर्कटी व्यण्डा कच्छुरा कपिकच्छुरा ॥३००॥**
**ऋष्यप्रोक्ता[1] शूकशिम्बिर्लाङ्गली प्रावृषायणी।**
**[2]ऋषभी वह्निपर्याया कपिरोमा दुरालभा ॥३०१॥**

कपीन् कषति **कपिकच्छूः,** स्त्रीलिङ्गः, "कषेर्ण्डे-छौ च षः" [ हैमोणादिसू० ८३१ ] इति, "कष हिंसायाम्" इत्यस्माद् ऊः प्रत्ययः षकारस्य च छादेशः, तस्याम्। आत्मना गुप्ता स्पर्शाविषयत्वाद् **आत्मगुप्ता**। कण्डूं राति **कण्डुरा,** "क्वचित्" [सिद्ध० ५.१.१७१] इति डे पृषोदरादित्वाद् ह्रस्वे च साधुः। दुःखेन अभिगृह्यते **दुरभिग्रहा**। न जहाति शूकान् **अजहा**। मर्कटीव **मर्कटी,** कपिरोमफलत्वात्। विगतोऽण्डोऽस्या **व्यण्डा**। "न विगताण्डा **अव्यण्डा**" इति **क्षीरस्वामी**। कच्छूरस्त्यस्याः **कच्छुरा,** "कच्छ्वा डुरः" [ सिद्ध० ७.२.३९ ] इति डुर। कपीनां कच्छुरा **कपिकच्छुरा** ॥३००॥

ऋष्यैः–मृगैः प्रोक्ता–दर्शिता **ऋष्यप्रोक्ता**। "ऋषिभिरप्रोक्ता वा, हेयत्वात्" इत्येके। शूकप्रधाना–सकण्टका शिम्बिरस्याः **शूकशिम्बिः**। लाङ्गलीव **लाङ्गली,** हलाकारत्वात्। प्रावृषि भवा **प्रावृषायणी**। "ऋषत् गतौ" ऋषति **ऋषभी,** "ऋषि वृषि-" [ हैमोणादिसू० ३३१ ] इति किदभः। यदाह—

१ ०कच्छा आत्मगुप्ता मि० ॥ २ आर्षभी मि० ॥

ऋषभी तु शूकशिम्ब्याम् [ ] इति ।

वह्नेः पर्यायोऽस्या **वह्निपर्याया**। कपीनां रोमेव रोमास्याः **कपिरोमा** । अत एव **कपिरोमफला**। दुःखेन आलभ्यते **दुरालभा** । आह **चेन्दुः**—

ऋष्यप्रोक्ता स्वयगुप्ता कपिकच्छूश्च कण्डुरा ।
आत्मगुप्ता दुरालम्भा लाङ्गली दुरभिग्रहा ॥
अव्यण्डा वृषभी गुप्ता कण्डूरा शूकशिम्बिका ।
कपिरोमफला चैव समाना मुविषायणी ॥
ज्ञेया जाङ्गलिका सैव साऽजहा प्रावृषायणी ॥
[ ] इति ।

एतस्या लोके 'कउंछि' इति प्रसिद्धि ॥३०१॥

**मञ्जिष्ठायां रक्तयष्टिः समङ्गा विकसाऽरुणा ।**
**भण्डीरी मञ्जुका भण्डी मञ्जिर्योजनवल्लिका ॥३०२॥**
**कालमेषी कालगोष्ठी मण्डूकपर्णिकाऽपि च ।**

मञ्जौ—मनोज्ञे वर्णे तिष्ठति **मञ्जिष्ठा**, "गो-ऽम्बा-ऽम्ब-" [ सिद्ध० २.३.३० ] इति षत्वम्, पृषोदरादित्वादुकारस्य इत्वम्। "**मञ्जि**रिति इकारान्तोऽयम्" इत्य**परे** । रक्ता यष्टिरस्याः **रक्तयष्टिः** । समन्ताद् अङ्गति-गच्छति **समङ्गा** । विकसति दूरं **विकसा** । **अरुणा** रक्तत्वात्; इयर्ति अर्यते वा, "ऋ-कृ-वृ-धृ-दारिभ्य उणः" इत्युण । "भडुङ् परिभाषणे" भण्ड्यते **भण्डीरी**, "जम्बीरा-ऽभीर-" [ हैमोणादिसू० १९६ ] इतीर निपात्यते । मञ्जुवर्णत्वाद् **मञ्जुका** । भण्ड्यते **भण्डी** । "मजि ध्वनौ" सौत्रः, मञ्जति **मञ्जिः**, "पदि-पठि-पचि-" [ हैमोणादिसू० ६०७ ] इति आदिशब्दादिः । योजनस्य वल्लिका **योजनवल्लिका**, दूरप्रसरेऽर्थे ॥३०२॥

काले मिष्यते—झटचते **कालमेषी**, घञ् प्रत्यय । कालस्य गोष्ठी **कालगोष्ठी** । मण्डूक इव पर्णान्यस्या मण्डूकपर्णी, स्वार्थिके के **मण्डूकपर्णिका** । आह च—

मञ्जिष्ठा कालमेषी च समङ्गा विकसाऽरुणा ।
मञ्जुला रक्तयष्टिश्च भण्डी योजनवल्ल्यपि ॥
[ धन्व० वर्ग १ श्लो० १७ ] इति ।

**आहेन्दुः**—

विकसा कालमेषी च कालगोष्ठी च जिङ्गिका ।

१ जिङ्गी योजनवल्ल्यपि नि० ॥

रक्ता भण्डीरिका च [ ] इति ।

एतस्या लोके 'मजीठि' इति प्रसिद्धिः ।

**मरिचे मलिनं कृष्णं वेल्लजं धार्मपत्तनम् ॥३०३॥**
**यवनेष्टं शिरोवृत्तमूषणं कोलकं च तत् ।**

म्रियते जिह्वा अनेन **मरिचम्**, "मृ-त्रपिभ्यामिच" [हैमोणादिसू० ११७] इतीचः, तत्र । **मलिनं** वर्णेन । **कृष्णं** वर्णेन, कर्षति तैक्ष्ण्याद्वा "घृ-वी-ह्वा-" [हैमोणादिसू० १८३] इति किद् णः । वेल्ले—वेल्लातटे जायते **वेल्लजम्** । "**विल्लाख्य** शाखी" **इत्येके** । धर्मपत्तने भवं **धार्मपत्तनम्**, "भवे" [सिद्ध० ६.३.१२३] इत्यण् ॥३०३॥

यवनानामिष्टं—प्रियं **यवनेष्टम्** । **यवनप्रियमपि** । शिरसि वृत्तं—वृत्ताकारं **शिरोवृत्तम्** । ऊषति—रुजति **ऊषणम्** । कोलति—संस्त्यायति **कोलकम्** । आह च —

मरिचं मलिनं श्यामं वेल्लजं कृष्णमूषणम् ।
यवनेष्टं शिरोवृत्तं कोलकं धार्मपत्तनम् ॥
[ धन्व० वर्ग २ श्लो० ८८ ] इति ।

एतस्य लोके 'मिरी' इति प्रसिद्धिः ।

**पिप्पल्यां चपला कृष्णा वैदेही मागधी कणा ॥३०४॥**
**शौण्डी श्यामोषणा कोलोपकुल्या कृष्णतण्डुला ।**

पलति आतुरं **पिप्पली**, "पृ-पलिभ्यां टित् पिप् च पूर्वस्य" [ हैमोणादिसू० ११ ] इति अः प्रत्ययः, तस्याम् । "चप सान्त्वने" चपति **चपला**, "मृदि-कन्दि-" [हैमोणादिसू० ४६५] इत्यादिना अलः । कर्षति [ कफं ] **कृष्णा** तैक्ष्ण्यात्, "घृ-वी-ह्वा-" [ हैमोणादिसू० १८३ ] इति किद् णः; श्यामत्वाद्वा । **विदेहदेशे** भवा **वैदेही**, "भवे" [ सिद्ध० ६.३.१२३] इत्यण् । **मगधदेशे** भवा **मागधी**, "भवे" [सिद्ध०६.३.१२३] इत्यण् । कणाः सन्त्यस्याः **कणा**, अभ्रादित्वाद् ॥३०४॥

शौण्डीव **शौण्डी**, शक्तत्वात् । **श्यामा** वर्णेन, "श्यैङ् गतौ" श्यायते वा, "बिलि-भिलि-"[हैमोणादिसू० ३४०] इति किन्मः । उषति—रुजति **उषणा** पञ्चमस्वरादिः । **ओषणा**ऽपि, त्रयोदशस्वरादिरयम् । "कुल संस्त्याने" कोलति **कोला** । उपकोलति—संस्त्यायति **उपकुल्या**, "कुलेर्ड् च वा" [ हैमोणादिसू०३६२ ] इत्यनेन "कुल बन्धु-संस्त्यानयोः" इत्यस्मात् किद् यः प्रत्ययः । कृष्णाः तण्डुला अस्याः **कृष्णतण्डुला** ।

१ °वृत्तमूषण मि० ॥

आह च—

पिप्पली मागधी कृष्णा चपला तीक्ष्णतण्डुला ।
उपकुल्या कणा श्यामा कोला शौण्डी तथोषणा ॥
[ धन्व० वर्ग २ श्लो० ७३ ] इति ।

इन्दुश्च—

पिप्पली तण्डुलफला वैदेही कृष्णतण्डुला ।
[ ] इति ।

एतस्या लोके 'पींपलि' इति प्रसिद्धिः ।

**तन्मूलं ग्रन्थिकं सर्वग्रन्थिकं [1]चटकाशिरः ॥३०५॥**
**[2]सुमूलकं कोलमूलं कटुग्रन्थिक[3]मोषणम् ।**

'तन्मूलं' पिप्पलीमूलं ग्रन्थिप्रतिकृति **ग्रन्थिकम्**, "तस्य तुल्ये कः संज्ञा-प्रतिकृत्योः-" [सिद्ध० ७.१.१०८] इति कः । सर्वे ग्रन्थयोऽत्र **सर्वग्रन्थिकम्** । चटकाशिरोरूपत्वात् **चटकाशिरः** ॥३०५॥

शोभनो मूलोऽस्य सुमूलम्, स्वार्थिके के **सुमूलकम्** । कोलाया मूलं **कोलमूलम्**, पृषोदरादित्वाद् ह्रस्वः । कटु च तद् ग्रन्थिकं च **कटुग्रन्थिकम्** । "उष दाहे" सौत्रः, ओषति **ओषणम्**, नन्द्यादित्वादनः । आह च--

मूलं च पिप्पलीमूलं ग्रन्थिकं चटकाशिरः ।
कोलमूलं कटुग्रन्थि सर्वग्रन्थिकमूलकम् ॥
[ धन्व० वर्ग २ श्लो० ७५ ] इति ।

एतस्य लोके 'पींपलीमूल' इति प्रसिद्धिः ।

**चविकायां पुनश्चव्यं चवनं कोलवल्ल्यपि ॥३०६॥**

च्यव्यते **चविका**, तस्याम्, "शिक्या-ऽऽस्याढ्य-" [हैमोणादिसू० ३६४] इति ये निपातनात् **चव्यम्**, च्यवते वा **चव्यम्**, स्त्री-क्लीबलिङ्गोऽयम् । अनटि **चवनम्** । कोलस्य–संस्त्यानस्य वल्ली **कोलवल्ली** । आह च--

चविका कोलवल्ली च चव्यं चवनमेव च ।
[ धन्व० वर्ग २ श्लो० ७६ ] इति ।

एतस्या लोके 'चविक' इति प्रसिद्धिः ॥३०६॥

१ अभिधानचिन्तामणौ तत्स्वोपज्ञटीकायां च 'चटिकाशिर' इति दृश्यते ॥ २ समूलक नि० ॥ ३ °कमूषणम् नि० ॥ ४ °या तथा चव्य चवन काल° नि० ॥

**तत्फले वशिरो हस्तिपिप्पली श्रेयसीत्यपि ।**

तस्याः—चविकायाः फलं तत्फलम्, तत्र । "वशक् कान्तौ" उश्यते **वशिरः,** पुंलिङ्गः, 'क्लीबोऽयम्', इत्यपरे, "स्थविर-पिठिर-" [ हैमोणादिसू० ४१७] इतीरे निपात्यते । हस्तिनः पिप्पली **हस्तिपिप्पली** । अतिशयेन प्रशस्या **श्रेयसी,** [ सिद्ध० ७. ४. ३४ ] "गुणाङ्गाद्वेष्ठेयसू" [सिद्ध०७ ३.९] इति ईयसौ "प्रशस्यस्य श्रः" [ सिद्ध० ७. ४.३४ ] इति आदेशः; आह च—

तस्याः फलं विनिर्दिष्टं श्रेयसी हस्तिपिप्पली ।
[ धन्व० वर्ग २ श्लो० ७८ ] इति ।

एतस्या लोके 'गजपींपली' इति प्रसिद्धिः। **चन्द्रनन्दनस्तु** सामान्येनाऽऽह—

चव्या कोलाऽथ चविका श्रेयसी गजपिप्पली ।
च्यवनं कोलवल्ली तु चव्यं कुञ्जरपिप्पली ॥
[ ] इति ।

**स्याद् गिरिकर्ण्यास्फोता विष्णुक्रान्ताऽपराजिता ॥३०७॥**

गिरिः—अश्मेव कर्णोऽस्याः **गिरिकर्णी,** "पाक-कर्ण-पर्ण-" [ सिद्ध०२.४.५५.] इति ङीः, तस्याम् । आ-समन्तात् स्फुटति **आस्फोता,** पृषोदरादित्वात् तकारः । विष्णुना क्रम्यते **विष्णुक्रान्ता** । अत एव रक्षाहेतुत्वाद् **अपराजिता** अप्रतिहता ।

एतस्या लोके 'गिरणई' इति प्रसिद्धिः ॥३०७॥

**सा तु श्वेता श्वेतनामा कटभी श्वेतनामिका ।**
**श्वेतस्यन्दाऽश्वखुरश्च**

'तुः' अत्र पुनरर्थे । 'सा' गिरिकर्णिका 'श्वेता' निर्मला । श्वेत इति नाम अस्याः **श्वेतनामा** । "कटे वर्षा-ऽऽवरणयोः" कटति **कटभी,** 'कृ-गॄ-शलि-" [ हैमोणादिसू० ३२९ ] इत्यादिनाऽभः । श्वेतनामैव **श्वेतनामिका** । श्वेतः स्यन्दोऽस्याः **श्वेतस्यन्दा** । अश्वखुर इव **अश्वखुरः** ।

एतस्या लोके 'श्वेतगिरणई' इति प्रसिद्धिः ।

**कृष्णा त्वव्यक्तगन्धिका ॥३०८॥**

**नीलस्यन्दा नीलपुष्पी महाश्वेता[3] गवादनी ।**

'तुः' पुनरर्थे । कृष्णा गिरिकर्णी अव्यक्तो गन्धोऽस्याः **अव्यक्तगन्धिका** ॥३०८॥ नील. स्यन्दोऽस्या **नीलस्यन्दा** । नीलवर्णानि पुष्पाण्यस्याः **नीलपुष्पी** ।

१ गिरिपर्ण्यामरस्फोता नि० ॥ २ श्वेतपुष्पिका नि० ॥ ३ °ताऽश्वन्दना नि० ॥

महती चासौ श्वेता च **महाश्वेता**। गावोऽदन्त्यस्यां **गवादनी,** अनटि "स्वरे वाऽनक्षे" [सिद्ध० १.२.२९ ] इत्यवादेशः ।

एतस्या लोके 'काली गिरणई' इति प्रसिद्धिः । आह च—

अश्वखुरः श्वेतपुष्पी श्वेता च गिरिकर्णिका ।
कटभी श्वेतनामा च श्वेतस्यन्दाऽपराजिता ॥
नीलपुष्पी महाश्वेता गिरिकर्णी गवादनी ।
वेगी चाप्युग्रगन्धा च नीलस्यन्दा प्रकीर्तिता ॥
[ धन्व० वर्ग ४ श्लोक ८४–८५] इति ।

एतानि सर्वाणि "स्याद् गिरिकर्ण्यास्फोता" [ श्लो० ३०७ ] इत्याद्यारभ्य गिरिकर्णीनामानि ज्ञेयानि ।

**स्यादिन्द्रवारुण्यां चैन्द्री विषादनी गवादनी ॥३०९॥**
**इन्द्रैर्वारुः क्षुद्रफला गोडुम्बा च गवाक्ष्यपि ।**

इन्द्रवद् अक्षं वृणोति **इन्द्रवारुणी,** "ऋ-कृ-वृ-" [ हैमोणादिसू० १९६ ] इत्यादिना उण, पृषोदरादित्वाद् दीर्घः, तस्याम् । इन्द्रस्येयम् **ऐन्द्री ।** विषोऽद्यते ऽनया **विषादनी ।** गावोऽदन्त्यस्या **गवादनी,** "करणा-ऽऽधारे [सिद्ध० ५.३.१२९] इत्यनट्, "स्वरे वाऽनक्षे" [सिद्ध० १.२.२९] इत्यवादेश ॥३०९॥

इन्द्रस्य एर्वारुरिव **इन्द्रैर्वारुः ।** क्षुद्राणि फलान्यस्या **क्षुद्रफला ।** गावोऽदन्ति **गोडुम्बा,** "तुम्ब-स्तम्बादय" [ हैमोणादिसू० ३२० ] इति बान्तो निपात्यते । गोरक्षीव **गवाक्षः** "अक्ष्णोऽप्राण्यङ्गे" [सिद्ध० ७.३.८५] इत्यत् समासान्तः । "गोरिवाक्ष्यस्या." इत्यन्ये, "सक्थ्यक्ष्ण स्वाङ्गे" [ सिद्ध० ७.३.१२६ ] इति टः प्रत्ययः, [ "अणञेये-" सिद्ध० २.४.२० इति ङ्यां **गवाक्षी** ] । आह च—

ऐन्द्रीन्द्रवारुणीन्द्राह्वा इन्द्रैर्वारुर्विषादनी ।
गवादनी क्षुद्रफला विशालाक्षी गवाक्ष्यपि ॥
[ धन्व० वर्ग १ श्लो० २४८ ] इति ।

एतस्या लोके 'इन्द्रवारुणी' इति प्रसिद्धिः ।

**द्वितीयेन्द्रवारुण्यां तु चित्रफला महाफला ॥३१०॥**
**आत्मरक्षा विशाला च त्रपुसी तुम्बसीत्यपि ।**

'तु' पुनरर्थे । द्वितीयेन्द्रवारुण्या चित्राणि फलान्यस्याः **चित्रफला ।** महान्ति फलान्यस्या **महाफला** ॥३१०॥

---

१ °रुणी त्वैन्द्री नि० ॥ २ गोदुम्बा च नि० ॥

आत्मानं रक्षति **आत्मरक्षा**। **विशाला** महाफलत्वात्। "त्रपौषि लज्जायाम्" त्रपते इव **त्रपुसी**, "त्रपेरुसः" [हैमोणादिसू० ५७८] इत्युसः, विधानसामर्थ्यात् षत्वाभावः। 'तुबु अर्दने' तुम्ब्यतेऽनया **तुम्बसी**, "फनस-तामरसादयः" [हैमोणादिसू० ५७३] इत्यसे निपात्यते। आह च—

अन्येन्द्रवारुणी प्रोक्ता विशाला तु महाफला।
आत्मरक्षा चित्रफला तुम्बसी त्रपुसी च सा॥
श्वेतपुष्पा मृगाक्षी च मृगेर्वारुर्मृगादनी।
हस्तिदन्ती नागदन्ती वारुणी गजचिर्भिटी॥
[धन्व० वर्ग १ श्लो० २५०, २५२] इति।

**वचायामुग्रगन्धोग्रा जटिला शतपर्विका॥३११॥**
**इक्षुकर्णिका गोलोमी लोमशा भूतनाशनी।**

वक्त्यनया **वचा**, वाक्पाटवकृत्, भिदादित्वादङ्, तस्याम्। उग्रो गन्धोऽस्या **उग्रगन्धा**। उच्यतेऽनया ओषति—दहति जिह्वामिति वा **उग्रा**, "खुर-क्षुर-" [हैमोणादिसू० ३९६] इति रे निपात्यते। जटाः सन्त्यस्या **जटिला**, "काला-जटा-घाटात् क्षेपे" [सिद्ध० ७.२.२३] इतील। शतं—बहूनि पर्वाण्यस्याः **शतपर्विका**॥३११॥

इक्षुरिव कर्णं—पत्रमस्या इक्षुकर्णी, "पाक-कर्ण-पर्ण-" [सिद्ध० २.४.५५] इति ङी, के **इक्षुकर्णिका**। गोरिव लोमान्यस्याः **गोलोमी**, पृषोदरादित्वात्। लोमानि श्यति **लोमशा**। भूतानि नाशयति **भूतनाशनी**।

एतस्या लोके 'वज' इति प्रसिद्धिः।

**अन्या श्वेतवचा मेध्या षड्ग्रन्था हैमवत्यपि॥३१२॥**

'अन्या' अपरा श्वेता चासौ वचा च **श्वेतवचा**। मेधायां साध्वी **मेध्या**, "तत्र साधौ" [सिद्ध० ७.१.१५] इति यः। षड् ग्रन्थयः—पर्वाण्यस्याः **षड्ग्रन्था**। हिमवत इयं **हैमवती**, "तस्येदम्" [सिद्ध० ६.३.१६०] इत्यण्। श्वेतवचेयम्। आह च—

वचोग्रगन्धा गोलोमी षड्ग्रन्था जटिला तथा।
जटिला शतपर्वाऽन्या लोमशा हैमवत्यपि॥
[धन्व० वर्ग २ श्लो० ६] इति॥३१२॥

---

१ भूतनाशनी मि०॥

**शारिवायां गोपकन्या गोपवल्ली प्रतानिका ।**
**गोप्यास्फोता लता श्वेता शारदी काष्ठशारिवा ॥३१३॥**

**नागजिह्वा**

शीर्यन्त्तनया दोषा **शारिवा**, "कैरव-मैरव-" [ हैमोणादिसू० ५१९ ] इत्यवे निपात्यते, तस्याम् । गोपानां कन्येव **गोपकन्या** । गोपानां वल्ली **गोपवल्ली** । प्रतानो विद्यतेऽस्याः **प्रतानिका** । "गुपू रक्षणे" गोपायति **गोपी** । आस्फुटति **आस्फोता**, पृषोदरादित्वात् तकार । लाति लायते वा **लता**, "पुत-पित्त-" [ हैमोणादिसू०२०४ ] इति ते निपात्यते । श्वेतते **श्वेता** शुक्ला । शरदि भवा **शारदी** । काष्ठस्य शारिवा **काष्ठशारिवा** ॥३१३॥

नागस्य जिह्वा **नागजिह्वा** । आह च—

शारिवा शारदी गोपी गोपवल्ली प्रतानिका ।
गोपकन्या लता सीता श्वेतोक्ता काष्ठशारिवा ॥
[ धन्व० वर्ग १ श्लो० १६१ ] इति ।

तथा च—

शारिवा फणिजिह्वा च गोप्यास्फोताऽथ चन्दना ।
[ ] इति ।

उत्पलशारिवानाम ।

**अथ सा कृष्णा भद्रा चन्दनशारिवा ।**
**भद्रवल्ली कृष्णवल्ली चन्दनोत्पलशारिवा ॥३१४॥**

'सा' उत्पलशारिवा 'कृष्णा' श्यामवर्णत्वाद् भन्दते **भद्रा**, "भन्देर्वा" [हैमोणादिसू० ३९१] इति रो नलोपश्च । चन्दनस्य शारिवा **[चन्दनशारिवा]** । भद्रा चासौ वल्ली च **भद्रवल्ली** । कृष्णा चासौ वल्ली च **कृष्णवल्ली** । "चदु दीप्त्याह्लादनयोः" चन्दति **चन्दना**, "श्वसि-रसि-" [ हैमोणादिसू० २६९ ] इत्यनः । उत्पलाभपत्रा **उत्पलशारिवा** । आह च--

शारिवाऽन्या कृष्णमूला कृष्णा चन्दनशारिवा ।
भद्रा चन्दनगोपी च चन्दना कृष्णवल्ल्यपि ॥
[ धन्व० वर्ग१ श्लो० १६२ ] इति ।

एतस्या लोके 'चन्दनशारिवा' इति प्रसिद्धिः ॥३१४॥

**मूर्वायां मोरटा देवी मधुश्रेणी मधूलिका ।**
**देवश्रेणी मधुरसा गोकर्णी तेजनी स्रवा ॥३१५॥**
**धनुःश्रेणी चापगुणा पीलुनी तिक्तवल्कला ।**
**पीलुपर्णी स्निग्धपर्णी पृथक्त्वग् मधुमत्यपि ॥३१६॥**

मूर्वति—बध्नाति **मूर्वा** । अत एव अस्या विकारो **मौर्वी**, तस्याम् । मुरति—संवेष्टयति **मोरटा**, "कपट-कीकटादय" [ हैमोणादिसू० १४४ ] इत्यटे निपात्यते । दीव्यति **देवी**, गौरादित्वाद् ङी । मधूनां श्रेणी—पङ्क्तिर्**मधुश्रेणी** । **मधूलिका** माधुर्यात् । देवानां श्रेणी **देवश्रेणी** । मधुः—मधुरो रसोऽस्या **मधुरसा** । गोकर्णाभपत्रत्वाद **गोकर्णी**, "पाक-कर्ण-पर्ण-" [ सिद्ध० २.४.५५ ] इति ङीः । "**तेजयत्यग्निं तेजनी**" इति **क्षीरस्वामी** । स्रवति रसं **स्रवा**, अच् । "**स्रुवा**" इत्येके ॥३१५॥

धनुष श्रेणी अस्या **धनुःश्रेणी** । चापस्य गुण—मौर्व्याख्योऽस्या **चापगुणा** । "पील प्रतिष्टम्भे" पील्यतेऽनया **पीलुनी**, "पिशि-मिथि-क्षुधिभ्य कित्" [ हैमोणादिसू० २९० ] इति बहुवचनात् किदुनः । तिक्तं वल्कलमस्या **तिक्तवल्कला** । पीलोरिव पर्णान्यस्याः **पीलुपर्णी**, स्निग्धानि पर्णान्यस्या **स्निग्धपर्णी**, उभयत्र "पाक-कर्ण-पर्ण-" [ सिद्ध० २.४.५५ ] इति ङीः । पृथक् त्वग् विद्यतेऽस्या **पृथक्त्वग्** । मधु विद्यतेऽस्या **मधुमती** । आह च—

मूर्वा मधुरसा देवी पृथक्त्वग् पीलुपर्ण्यपि ।
देवश्रेणी स्वादुरसा स्निग्धपर्णी च मोरटा ॥
[ धन्व० वर्ग १ श्लो० १३ ] इति ।

तथा **चेन्दुः**—

स्निग्धच्छदा मधुश्रेणी पृथक्त्वग् रसवाहिनी ।
देवश्रेणी मधुमती सुभङ्गी द्विजमेखला ॥
आतोलनी योगवहा मोरटा च मधुस्रवा ।
सुखोषिता स्निग्धपर्णी गोकर्णी सा मधूलिका ।
पीलुपर्णी कर्मकरी तथा मधुमतीति च ।
[　　　　] इति ।

एतस्या लोके 'पीलउनी' इति प्रसिद्धिः ॥३१६॥

**लाङ्गल्यां हलिनी नन्दा विशल्या गर्भपातनी ।**
**अनन्ताऽग्निमुखी सैरी कुष्पुम्पी कलिकारिका ॥३१७॥**

---

१ °ग्निशिखा शक्रपुष्पिका कलि° नि० ॥

लङ्गति **लाङ्गली**, "नहि-लङ्गेर्दीर्घश्च" [हैमोणादिसू० ४६६] इत्यलः; लाङ्गल इव भेदनाद् वा, तस्याम्। हलो विद्यतेऽस्या. **हलिनी**। नन्दति **नन्दा**। विगतं शल्यमस्या द्रावकत्वाद् **विशल्या**, "शल गतौ" विगलति वा, "स्था-छा-मा-" [हैमोणादिसू० ३५६] इति यः। गर्भं पातयति **गर्भपातनी**। नास्ति अन्तोऽस्या **अनन्ता**। अग्नेरिव मुखमस्या **अग्निमुखी** सोढुमशक्यत्वात्। **अग्निशिखेत्येके**। यदाह—

स्याल्लाङ्गलिक्यग्निशिखा [अमर० का० २ वर्ग ४ श्लो० ११८] इति।

सीरस्य-हलस्य इयं **सैरी**, भेदनात्, "तस्येदम्" [सिद्ध० ६.३.१६०] इत्यण्। दुष्टानि पुष्पाण्यस्या. **दुष्पुष्पी**। कलिं-कलहं करोति कलिकारी, स्वार्थिके के **कलिकारिका**। आह च --

कलिकारी तु हलिनी विशल्या गर्भपातनी।
लाङ्गल्यग्निमुखी सैरी दीप्ताऽनन्तेन्द्रपुष्पिका॥
[धन्व० वर्ग ४ श्लो० ९] इति।

एतस्या लोके 'राडागारी' इति प्रसिद्धिः॥३१७॥

**गुडूच्याममृता सोमवल्ली वत्सादनी धरा।**
**छिन्नोद्भवा छिन्नरुहा विषघ्नी देवनिर्मिता॥३१८॥**
**विशल्या कुण्डली लम्बा तन्त्रिका चक्रलक्षणा।**
**देव्यनन्ता मधुपर्णी जीवन्त्यमृतवल्ल्यपि॥३१९॥**

गुडति-रक्षति [कफं] **गुडूची**, "गुडेरूचट्" [हैमोणादिसू० १२०] इत्यूचट्, तस्याम्। नास्ति मृतमस्या **अमृता**। सोमस्य वल्ली **सोमवल्ली**। वत्सानामदनं **वत्सादनी**। धरति रसं **धरा**, अच्। छिन्ना सती उद्भवति-प्रकटीभवति **छिन्नोद्भवा**। छिन्ना सती रोहति **छिन्नरुहा**, "नाम्युपान्त्य-" [सिद्ध० ५.१.५४] इति कः। विषं हन्ति **विषघ्नी**, "अचित्ते टक्" [सिद्ध० ५.१.८३] इति टक्। देवैर्निर्मिता **देवनिर्मिता**॥३१८॥

विगतं शल्यमस्या **विशल्या**। "कुड्डुङ् दाहे" कुण्डते **कुण्डली**, "मृदि-कन्दि-" [हैमोणादिसू० ४६५] इत्यलः, गौरादित्वाद् ङी। "लबुङ् अवस्रंसने च" चकाराच्छब्दे, लम्बते **लम्बा**। तन्त्र्यते-धारयत्यायुस्तन्त्रिका, णके आप्। चक्रैर्लक्ष्यते **चक्रलक्षणा**। दीव्यति **देवी**। नास्ति अन्तोऽस्या **अनन्ता**। मधूनि पर्णा-

१ °ळी छमा त° नि०॥

न्यस्याः **मधुपर्णी** । जीवनाद् **जीवन्ती**, "रुहि-नन्दि-जीवि-प्राणिभ्यष्टिदाशिषि" [हैमोणादिसू० २२० ] इति आशिषि टिदन्तः । अमृतस्य वल्ली **अमृतवल्ली** । आह च—

गुडूच्यमृतवल्ली च छिन्ना छिन्नरुहाऽमृता ।
छिन्नोद्भवाऽमृतलता धरा वत्सादनी स्मृता ॥
सैवोक्ता सोमवल्ली च कुण्डली चक्रलक्षणा ।
जीवन्ती मधुपर्णी च तन्त्रिका देवनिर्मिता ॥
वयस्था कुण्डली सौम्या विशल्याऽमृतसम्भवा ।
पिण्डाऽमृता बहुच्छिन्ना सा चोक्ता कन्दरोहिणी ॥
रसायनी कृत्तरुहा स्वरदा ज्वरनाशनी ।
[ धन्व० वर्गे १ श्लो० १–४ ]
मधुपर्णी दाहहरा भिषजां च निवेदिता ।
द्वितीया स्वर्णजीवन्ती तैलपर्णी च कथ्यते ॥
घुणप्रियाऽतिसारघ्नी [ ] इति ।

एतस्या लोके 'गुडूची' इत्येव प्रसिद्धिः ॥३१९॥

**देवताडे देवताली[1] वृत्तकोशो गरागरी ।**
**जीमूतकस्तालकश्च वेण्याखुविषघातिनी ॥३२०॥**

देवानां ताडो **देवताडः**, तत्र । देवानां ताली **देवताली** । वृत्त कोशोऽस्य **वृत्तकोशः** । गरं–विषम् आगिरति **गरागरी**, मूषकविषघ्नत्वात्, स्त्रीलिङ्गः । जीवति जीमूतः "जीवेर्मश्च" [ हैमोणादिसू० २१६ ] इत्यूतः मश्चान्तादेशः, स्वार्थिके के **जीमूतकः** । ताड्यते ताडः, ऋफिडादित्वाल्लत्वे तालः, स्वार्थिके के **तालकः** । वेणीव **वेणी** । आखुविषं घातयति **आखुविषघातिनी** । आह च—

जीमूतको देवताडो वृत्तकोशो गरागरी ।
प्रोक्ताऽऽखुविषहा वेणी देवताडी च ताडकः ॥
[धन्व० वर्गे १ श्लो० १७३ ] इति ।

एतस्य लोके 'देवदाली' इति प्रसिद्धिः ॥३२०॥

**कोशातक्यां [2]कृष्णच्छत्रा जाली घोषा सुतिक्तिका ।**
**मृदङ्गफलिका क्ष्वेडा घण्टाली कृतवेधना[3] ॥३२१॥**

---

१ देवदाली वृत्तकोशा नि० ॥ २ कृतच्छत्रा नि० ॥ ३ रक्तवेधना नि० ॥

**धामार्गवः पीतपुष्पो महाजाली[1] महाफली ।**
**कर्कोटकी कोशफलो[2] राजकोशातकीति च ॥३२२॥**

"अत सातत्यगमने" कोशमतति–गच्छति **कोशातकी,** गौरादित्वाद् ङीः, तस्याम् । कृष्णं छत्रमस्याः **कृष्णच्छत्रा** । जालोऽस्यास्ति **जाली** । "घुषृ शब्दे" घोषति **घोषा** । सुतरां तिक्ता सुतिक्ता, के **सुतिक्तिका** । मृदङ्गाकाराणि फलान्यस्या मृदङ्गफली, के **मृदङ्गफलिका** । क्ष्वेडते **क्ष्वेडा** । घण्टामलति **घण्टाली** । कृतं वेधनमनया **कृतवेधना** ॥३२१॥

धाम इयर्ति **धामार्गवः,** "कैरव-मैरव-" [ हैमोणादिसू० ५१९ ] इत्यवे निपात्यते । पीतानि पुष्पाण्यस्य **पीतपुष्पः** । महांश्चासौ जाली च **महाजाली** जलवितानः । महान्ति फलान्यस्या **महाफली,** "असम्-भखा-ऽजिनैक-शण-पिण्डात् फलात्" [ सिद्ध० २ ४.५७ ] इति ङी । करोति कर्कोटः, "कपोट-बकोट-" [ हैमोणादिसू० १६१ ] इत्योटे निपात्यते, के **कर्कोटकी** । कोशे–मध्ये फलान्यस्य **कोशफलः** । राज्ञी चासौ कोशातकी च **राजकोशातकी** । आह च--

कोशातकी कृतच्छिद्रा जालिनी कृतवेधना ।
क्ष्वेडा सुतिक्ता घण्टाली मृदङ्गफलिका मता ॥
[ धन्व० वर्ग १ श्लो० १९२ ] इति ।

तथा च—

धामार्गवः कोशफलो राजकोशातकी तथा ।
कर्कोटकी पीतपुष्पी महाजाली तथोच्यते ॥
[ धन्व० वर्ग १ श्लो० १८९ ] इति ।

एतस्या लोके 'कडुई' 'विसाली' 'घींसोडी' इति प्रसिद्धिः ॥३२२॥

**हस्तिकोशातकी त्वैभी विशाला कर्कटच्छदा ।**

हस्तिनः कोशातकी **हस्तिकोशातकी** । 'तु' इति पुनरर्थेऽत्र । इभस्येयं **ऐभी,** "तस्येदम्" [ सिद्ध० ६.३.१६० ] इत्यण् । **विशाला** विस्तीर्णा । कर्कटस्येव च्छदोऽस्याः **कर्कटच्छदा** ।

**क्षीरिण्यां स्यात् पटुपर्णी घर्षणी पीतदुग्धिका ॥३२३॥**
**फेनक्षीरा हेमक्षीरा पीतक्षीरा करीषिणी ।**
**हेमाह्वया हेमशिखा हैमवती हिमावती ॥३२४॥**

---

१ महाजला महाफला नि० ॥ २ °फला राज° नि० ॥

क्षीरमस्त्यस्याः **क्षीरिणी**, तस्याम् । पट्टूनि पर्णान्यस्या· **पटुपर्णी** । धृष्यते अनया **धर्षणी**, "करणाऽऽधारे" [ सिद्ध०५.३.१२९ ] इत्यनट् । पीतं दुग्धमस्याः पीतदुग्धा, स्वार्थिके के **पीतदुग्धिका** ॥३२३॥

फेनयुक्तं क्षीरमस्या· **फेनक्षीरा** । हेमवर्णं क्षीरमस्या. **हेमक्षीरा** । पीतं क्षीरमस्या· **पीतक्षीरा** । करीषा· सन्त्यस्या· **करीषिणी** । हेम्नः आह्वयोऽस्या **हेमाह्वया** । हेम्न शिखाऽस्याः **हेमशिखा** । हिमवत इयं **हैमवती**, "तस्येदम्" [ सिद्ध०६.३.१६०] इत्यण् । हिमो विद्यतेऽस्या. **हिमावती**, "अनजिरादिबहुस्वर-शरादीनां मतौ" [ सिद्ध०३.२ ७८] इति मतौ प्रत्यये दीर्घ· । आह च—

क्षीरिणी काञ्चनी क्षीरी पटुपर्णी च धर्षणी ।
तिक्तदुग्धा हैमवती हेमदुग्धा हिमावती ॥
स्वर्णक्षीरी स्वर्णदुग्धा सुवर्णक्षीरिकाऽपि च ।
हिमाह्वा कनकक्षीरी हेमक्षीरा च काञ्चनी ॥
[ धन्व० वर्ग १ श्लो० २४०,२४२ ] इति

एतस्या लोके 'क्षीरिणी' 'स्वर्णक्षीरिणी' च प्रसिद्धिः ॥३२४॥

**शङ्खिन्यां स्याद् धनहरी तस्करी चोरपुष्पिका ।**
**केशिनी ग्रन्थिका चण्डा श्वेतबुघ्ना निशाचरी ॥३२५॥**

शङ्खोऽस्त्यस्याः **शङ्खिनी**, शौक्ल्यात, तस्याम् । धनं हरति **धनहरी** । अत एव **तस्करी** । चोरस्य पुष्पं चोरपुष्पी, धनहरीत्वात्, रात्रौ विकासाद् वा, के **चोरपुष्पिका** । केशा· सन्त्यस्या **केशिनी** । ग्रन्थिरत्रास्ति **ग्रन्थिका**, व्रीह्यादित्वादिकः । चमति अतीव धनं **चण्डा**, "पञ्चमाद् ड·"[हैमोणादिसू० १६८] इति डः; चण्डते वा । श्वेतो बुघ्नोऽस्या. **श्वेतबुघ्ना** । निशायां चरति **निशाचरी**, रात्रौ विकासात् । आह च **चन्द्रनन्दनो**ऽत्र—

चण्डा धनहरी चौरी चोरपुष्पी च तस्करी ।
तथा निशाचरी च स्यात् केशिनी ग्रन्थिकेत्यपि ॥
[ ] इति ।

शङ्खिनीनामानि ॥३२५॥

**आखुपर्ण्यां पुष्पश्रेणी [1]न्यग्रोधी शम्बरी वृषा ।**
**चित्रोपचित्रा रण्डा च प्रत्यक्श्रेणी द्रवन्त्यपि ॥३२६॥**

---

१ न्यग्रोधा मि० ॥ २ रण्डाखु प्र० मि० ॥

आखुकर्णाभपत्रत्वाद् **आखुपर्णी**, "पाक-कर्ण-पर्ण-" [ सिद्ध० २.४.५५ ] इति ङी । आखो: कर्ण इव कर्णः– पत्रं यस्याः सा **आखुकर्णी**त्यपि, "पाक-कर्ण-" [ सिद्ध० २.४.५५ ] इति ङी., तस्याम् । पुष्पाणां श्रेणी अस्या **पुष्पश्रेणी** । न्यग् रोहति रुणद्धि वा बहुमूलत्वात् **न्यग्रोधी**, लिहादित्वादचि "वीरुन्न्यग्रोधौ" [ सिद्ध० ४.१.१२१ ] इति साधु । शं वृणोति **शम्बरी**, अच्, गौरादित्वाद् ङीः । वर्षति **वृषा**, "नाम्युपान्त्य-" [ सिद्ध० ५.१.५४ ] इति क. । "वृणोति वा" इति **क्षीरस्वामी**, पृषोदरादित्वात् साधु । **वृषपर्णी**त्यपि । **चित्रा** अनेकवर्णपत्रा । उप–समीपे चित्राण्यस्या **उपचित्रा** । रम्यते रमते वा **रण्डा**, "पञ्चमाद् ड" [ हैमोणादिसू० १६८ ] इति ड. । "**चण्डा**" इत्य**मरः** । प्रतीची श्रेणी अस्या. **प्रत्यक्श्रेणी** । द्रवति **द्रवन्ती**, शतृप्रत्ययः । आह च—

द्रवन्ती शम्बरी चित्रा न्यग्रोधी मूषकाह्वया ।
प्रत्यक्श्रेणी वृषा रण्डा पुत्रश्रेण्याखुपर्णिका ॥
[ धन्व० वर्ग १ श्लो० २२९ ] इति ।

**तथा च**—

चित्रोपचित्रा न्यग्रोधी द्रवन्ती शम्बरी वृषा ॥
प्रत्यक्श्रेणी सुतश्रेणी चण्डा मूषकपर्ण्यपि ।
[ अमर० का० २ वर्ग ४ श्लो० ८७–८८ ] इति ।

एतस्या लोके 'उंदिरकनी' इति प्रसिद्धि. ॥३२६॥

**पद्मिन्यां तु महावल्ली बिशिनी बिशवत्यपि ।**
**पलाशिनी नालीकिनी नलिनी पुटकिन्यपि ॥३२७॥**

पद्ममस्त्यस्या **पद्मिनी**, "मन्-मा-ऽब्जादेर्नाम्नि" [ सिद्ध० ७.२.६७ ] इति इन् प्रत्ययः. तस्याम् । महती चासौ वल्ली च **महावल्ली** । बिशमस्त्यस्याः **बिशिनी** । बिशं विद्यतेऽस्या **बिशवती** । पलाशा सन्त्यस्या **पलाशिनी** । नालीकमस्त्यस्या **नालीकिनी** । नलिनमस्त्यस्या **नलिनी** । पुटकमस्त्यस्याः **पुटकिनी** । सर्वेऽप्येते "मन्-मा-ऽब्जादेर्नाम्नि" [ सिद्ध० ७.२.६७ ] इति इन्प्रत्यये साधव. । **आह च**—

पद्मिनी स्यात् पुटकिनी नलिनी च कुमुद्वती ।
पलाशिनी पद्मवती वनखण्डं स चाऽऽकर ॥
[ धन्व० वर्ग ४ श्लो० १५७ ] इति ।

एतस्या लोके 'पोयणि' इति प्रसिद्धिः ॥३२७॥

**कमले नलिनं पद्ममरविन्दं कुशेशयम् ।**
**परं शत-सहस्राभ्यां पत्रं राजीव-पुष्करे ॥३२८॥**
**बिसप्रसूनं नालीकं तामरसं महोत्पलम् ।**
**तज्जलात् सरसः पङ्कात् परे रुड्-रुह-जन्म-जैः ॥३२९॥**

काम्यते श्रिया **कमलम्**, "मृदि-कन्दि-" [ हैमोणादिसू० ४६५ ] इत्यलः; कम्– अम्भ अलति भूषयति वा; केन शिरसा मल्यते–धार्यते इति वा, तत्र । "णल गन्धे" नलति **नलिनम्**, "श्या-कठि-खलि-नलि-" [ हैमोणादिसू० २८२ ] इत्यादिना इनः । पद्यते भृङ्गैः **पद्मम्**, "अर्तीरि-" [ हैमोणादिसू० ३३८ ] इति मः । एते पुं-क्लीबलिङ्गा । अरान् विन्दति **अरविन्दम्**, "नि-गवादेर्नाम्नि" [सिद्ध० ५.१.६१ ] इति शः । कुशे–जले शेते **कुशेशयम्**, "शय-वासि-वासेष्वकालात्" [सिद्ध० ३.२.२५ ] इति सप्तम्यलुप् । शत-सहस्रशब्दाभ्यां परं पत्रम्, शत-सहस्रे बहूपलक्षणम्, शतं सहस्रं च पत्राण्यस्य **शतपत्रम् सहस्रपत्रम्** । राज्यः–रेखाः सन्त्यस्य **राजीवम्**, मण्यादित्वाद् वः । "पुषंच् पुष्टौ" पुष्यति जले **पुष्करम्**, "सृ-पुषिभ्यां कित्" [ हैमोणादिसू० ४३६ ] इति कित् करः ॥ ३२८॥

बिसात् प्रसूतं **बिसप्रसूनम्** । **बिसप्रसूनमपि** । "णल गन्धे" नलति **नालीकम्**, पुं-क्लीबलिङ्गः, "सृणीका-ऽस्तीक-" [ हैमोणादिसू० ५० ] इतीके निपात्यते । "तमूच् काङ्क्षायाम्" तम्यते **तामरसम्**, "फनस-तामरसादयः" [ हैमोणादिसू० ५७३ ] इत्यसे निपात्यते, ताम–सप्रकर्षो रसोऽस्येति वा, तामः प्रकर्षार्थः, तारतम्यवत्, ताम्यद्भिः–भृङ्गैरस्यते वा। महच्च तदुत्पलं च **महोत्पलम्** । 'तत्' इति कमलम् जलशब्दात् सरःशब्दात् पङ्कशब्दाच्च परै रुडादिभिरुच्यते इत्यर्थः । **जलरुट् जलरुहं जलजन्म जलजम्, सरोरुट् सरोरुहं सरोजन्म सरोजम्, पङ्करुट् पङ्करुहं पङ्कजन्म पङ्कजम्** । यौगिकत्वाद् **वारिरुड्-वारिज-सरसीरुहा-**दयोऽवसेयाः । आह च—

कमलं श्वेतमम्भोजं सारसं सरसीरुहम् ।
सहस्रपत्रं श्रीगेहं शतपत्रं कुशेशयम् ॥
पङ्केरुहं तामरसं राजीवं पुष्करं कुहम् ।
अब्जमम्भोरुहं पद्मं पुण्डरीकं च पङ्कजम् ॥

नलं सरोजं नलिनमरविन्दं महोत्पलम् ।

[ ] इति ।

एतस्य लोके 'श्वेतकमल' इति प्रसिद्धि. ॥३२९॥

**पुण्डरीकं सिताम्भोजं**

"पुणत् शुभे" पुणति **पुण्डरीकम्**, पुण्डते वा, "**सृणीका-ऽस्तीक-**" [ हैमोणादिसू० ५० ] इतीके निपात्यते । सितं-श्वेतमम्भोजं **सिताम्भोजम्** ।

**अथ रक्तसरोरुहे ।**

**रक्तोत्पलं कोकनदं**

रक्तं च तत् सरोरुहं च **रक्तसरोरुहम्**, तत्र । रक्तं-शोणमुत्पलं **रक्तोत्पलम्** । कोकैः-चक्रवाकैर्नदति **कोकनदम्** । "कोकाः- चक्राह्वा नदन्त्यस्मिन्" इति **क्षीरस्वामी** । आहुश्च—

रक्ताब्जे रक्तकुमुदे बुधैः कोकनदं स्मृतम् ।

[ शाश्वत० श्लो० ५४० ] इति ।

**कैरविण्यां कुमुद्वती ॥३३०॥**

कैरवाणि सन्त्यस्याः **कैरविणी**, तत्र । कुमुदानि सन्त्यस्याः **कुमुद्वती**, "नड-कुमुद-" [ सिद्ध० ६.२.७४ ] इति ड्वित् मतु प्रत्ययः, व्यञ्जनान्तात् कुमुच्छब्दाद्वा "तदस्यास्त्यस्मिन्निति मतु" [ सिद्ध० ७.२.१ ] इति मतुः । **कुमुदिनी**त्यपि ॥३३०॥

**उत्पले स्यात् कुवलयं कुवेलं कुवलं कुवम् ।**

उत्पिबति **उत्पलम्**, पुं-क्लीबलिङ्ग. "मुरलोरल" [ हैमोणादिसू० ४७४ ] इत्यले निपात्यते उत्पलतीति वा. तत्र । कौ वलति- प्राणिति **कुवलयम्**, "कु-गु-वलि-" [ हैमोणादिसू० ३६५ ] इत्यय., कुत्सितं बहिर्वलयं-पत्रवेष्टनमस्य वा । "वेलृ चलने" कौ वेलति **कुवेलम्** । "कुङ् शब्दे" कवते भ्रङ्कारावैः **कुवलम्**, पु-क्लीबलिङ्ग., "कोर्वा" [ हैमोणादिसू० ४६९ ] इति किदल, कौ वलतीति वा । "वाक् गति-गन्धनयोः" कुत्सितं वातीति **कुवम्**, "क्वचित्" [सिद्ध० ५ १ १७१] इति डः । अस्य विशेषानाह—

**श्वेते तु तत्र कुमुदं कैरवं गर्दभाह्वयम् ॥३३१॥**

'तत्र' उत्पलं श्वेते काम्यते **कुमुदम्**, पुं-क्लीबलिङ्ग, "कुमुद-" [ हैमोणादिसू० २४४ ] इत्युदे निपात्यते, कौ मोदते इति वा । **कुमुद्** इत्यपि । करोति

सुखं **कैरवम्** "कैरव-भैरव-" [ हैमोणादिसू० ५१९ ] इत्यवे निपात्यते; के रौति-शब्दायते केरवः—हंसः, तस्येदं प्रियमिति वा। गर्दभस्याऽऽह्वयोऽस्य **गर्दभाह्वयम्** ॥३३१॥

**नीले तु स्यादिन्दीवरं**

'तु' अत्र पुनरर्थे। नीले उत्पले इन्दति श्रिया **इन्दीवरम्**, "तीवर-धीवर-" [ हैमोणादिसू० ४४४ ] इति वरटि निपात्यते।

**हल्लक रक्तसन्ध्यके।**

हलति—घूर्णते **हल्लकम्**. "कीचक-पेचक-" [ हैमोणादिसू० ३३ ] इत्यकान्तो निपात्यते। रक्तान् सन्धीन् अकति—याति प्राप्नोति **रक्तसन्ध्यकम्**, रक्तं सन्ध्येव वा, तत्र। रक्तोत्पलं चैतत्।

**सौगन्धिके तु कह्लारं**

सुगन्ध प्रयोजनमस्य **सौगन्धिकः**, "प्रयोजनम्" [ सिद्ध० ६.४.११७ ] इतीकण्। कल्यते **कह्लारम्**. "द्वार-शृङ्गार-" [ हैमोणादिसू० ४११ ] इत्यारे निपात्यते, के ह्लादते वा, पृषोदरादित्वात् साधु। शारदं शुक्लं चैतत्।

**बीजकोशो वराटकः ॥३३२॥**

**कर्णिका**

बीजानां—पद्माक्षनाम्नां कोशो **बीजकोशः**, तत्र। वरमटति **वराटकः**। यत् **शाश्वतः**—

बीजकोशे सरोजस्य कपर्दे च वराटकः।
[ श्लो० १८० ] इति ॥३३२॥

असत्यपि कर्णभवत्वे रूढत्वात् कर्णे भवा **कर्णिका**, "कर्ण ललाटात्-" [ सिद्ध० ६.३.१४१ ] इति कल्।

**पद्मनाले तु मृणालं तन्तुलं बिसम्।**

पद्मस्य नालं **पद्मनालम्**, तत्र। "मृणत् हिंसायाम्" मृण्यते—अर्घते **मृणालम्**, त्रिलिङ्गः, "कुलि-पिलि-" [ हैमोणादिसू० ४७६ ] इति किदालः; मृदमालीयते वा. "क्वचित्" [ सिद्ध० ५ १.१७१ ] इति डे पृषोदरादित्वात् साधुः। तन्तून् लाति **तन्तुलम्**, "क्वचित्" [सिद्ध० ५.१.१७१] इति डः। "वींक् प्रजनादिषु" वेति **बिसम्**, "पटि-वीभ्याम्-" [ हैमोणादिसू० ५७९ ] इति डिसः; विस्यते—प्रेर्यते वा।

आह च—

बिसं मृणाले बिसिनी मृणाला स्यान्मृणालिका ।
मृणालं पद्मनालं तु तन्तुलं नलिनीरुहम् ॥
[ धन्व० वर्ग ४ श्लो० १६१ ] इति ।

एतस्य लोके 'बिसु' इति प्रसिद्धि ।

**किञ्जल्के केसरं**

किञ्चिद् जलति **किञ्जल्कम्**; किं–कुत्सितं जीर्यते वा, "निष्क-तुरुष्क-" [ हैमोणादिसू० २६ ] इति के निपात्यते, तत्र । के सरति, **केसरम्** । पुं-क्लीबलिङ्गावेतौ । आह च—

पद्मकेसरमापीतं किञ्जल्कं किञ्जमेव च ।
मकरन्दं तथा तुङ्गं गौरं काञ्चनमेव च ॥
[ धन्व० वर्ग ४ श्लो० १६५ ] इति ।

एतस्य लोके 'केसर' इति प्रसिद्धिः ।

**नव्यदले संवर्तिका भवेत् ॥३३३॥**

**नव्यदलं**–पद्मादीना नवोद्भिन्नं दलं संरयन्त्रकाख्यम्[1], तत्र । संवर्त्तयति–वेष्टयति **संवर्तिका**, णके आप्, 'भवेद्' इति स्यात् ॥३३३॥

**कन्दे पाद्मे करहाट-शिफे**

कनति–दीप्यते कन्दः, "शा-शपि-" [हैमोणादिसू० २३७] इति दः, कन्यते–अन्विष्यते वा, पुं-क्लीबलिङ्ग, तत्र । पद्मस्यायं पाद्मः, "तस्येदम्" [सिद्ध० ६.३.१६०] इत्यण्, तत्र 'पाद्मे' पद्मसम्बन्धिनि । कं रहयन्ति कराहा–पद्मादयो जलोत्थाः, तान् अटति–प्राप्नोति **करहाटः**; कीर्यते वा, "कपाट-विराट-" [ हैमोणादिसू० १४८ ] इत्याटे निपात्यते । शिनोति–दारयति क्ष्मां **शिफा**, तालव्यादिः, "शफ-कफ-शिफा-गोफादयः" [ हैमोणादिसू० ३१६ ] इति फप्रत्यये निपात्यते ।

**शालूकमौत्पले ।**

"शल गतौ" शलति **शालूकम्**, "शल्यणेर्णित्" [ हैमोणादिसू० ५९ ] इत्यूकः । उत्पलानामिदम्**औत्पलम्**–उत्पलसम्बन्धि, तत्र । आह च—

पद्ममूलं तु शालूकं शकलं करहाटकम् ।
शालीनं पद्मकन्दं तु जलालूकं निगद्यते ॥
[ धन्व० वर्ग ४ श्लो० १६३ ] इति ।

अनयोर्लोके 'पद्ममूल' इति प्रसिद्धिः ।

[1] 'शरयन्त्रिकाख्यम्' इति अभिधानचिन्तामणिस्वोपज्ञटीकायाम् ॥

**पद्मबीजे तु पद्माख्यं पद्मकर्कटिकेत्यपि ॥३३४॥**

पद्मानां बीजं **पद्मबीजम्**, तत्र । पद्ममित्याख्याऽस्य **पद्माख्यम्** । पद्मानां कर्कटी पद्मकर्कटी, स्वार्थिके के **पद्मकर्कटिका** । आह च—

पद्मबीजं तु गालोड्यं पद्माह्वं पद्मकर्कटी ।
[ धन्व० वर्ग ४ श्लो० १५९ ] इति ।

एतस्य लोके 'गंठ' इति प्रसिद्धिः ॥३३४॥

**वारिपर्ण्यां तु पानीया पृष्ठगा कुम्भिका हठः ।**

वारि पिपर्त्ति **वारिपर्णी**, "चिक्कण-कुक्कण-" [ हैमोणादिसू०१९० ] इत्यणे निपात्यते, तस्याम् । पीयते **पानीया** । पृष्ठं गच्छति **पृष्ठगा** । कुम्भोऽस्त्यस्याः **कुम्भिका**, "अतोऽनेकस्वरात्" [सिद्ध० ७.२.६] इतीक ।

"कुम्भीको वारिपर्णः स्यात्" । [ ] इत्येके ।

"हठ बलात्कारे" हठति **हठः**, अच् । यदाह—

"हठोऽम्बुपर्ण्यां प्रसभे" [ हैमानेका० श्लो० १२४ ] इति ।

'फंगा' नाम शाकम् । 'शूषा' इत्येके ।

**जलशूके जलनीली नीली शैवाल-शैवले ॥३३५॥**

**॥ इत्याचार्यश्रीहेमचन्द्रविरचिते निघण्टुशेषे**
**तृतीयो लताकाण्डः ॥**

जलस्य शूकमिव **जलशूकम्**, पुं-क्लीबलिङ्गः, तत्र । जलं नीलयति **जलनीली**, अण् प्रत्ययः, "णील वर्णे" नीलति **नीली**, अच्, गौरादित्वाद् ङी., नीलवर्णा वा । शेते अम्भसि **शैवालम् शैवलम्**, "शीङस्तलक्-पाल-वालण्-वलण्-वलाः" [हैमोणादिसू० ५०१] इत्यनेन वालण्-वलण्प्रत्ययौ । शेवालमिति तु शेपालेत्यस्य जपादित्वाद् वत्वे साधु । शेवलं शेपालं शैवलं च नीलिकाख्येयम् ॥३३५॥

**॥ इति श्रीमद्बृहत्खरतरगच्छे श्रीजिनराजसूरिशिष्यश्रीजयसागरमहोपाध्यायपट्टानुक्रमवाचनाचार्यधुर्यश्रीभानुमेरुगणिशिष्यसमस्तप्रशस्तग्रन्थावलीविचक्षणश्रीज्ञानविमलोपाध्यायशिष्यवाचनाचार्यश्रीश्रीवल्लभगणिविरचितायां श्रीहेमचन्द्राचार्यकृतनिघण्टुशेषटीकायां लताकाण्डः तृतीयः समाप्तः ॥३॥**

# ४

## [ चतुर्थः शाककाण्डः ]

॥ अर्हम् ॥ अथ चतुर्थं प्रस्तावप्राप्तं शाककाण्डं व्याक्रियते—

**शतपुष्पायां तु घोषा शताह्वा माधवी मिसिः[1] ।**
**अतिच्छत्रा छत्रपुंष्प्यवाक्पुष्पा[2] कारवी सहा ॥३३६॥**

शतं—बहूनि पुष्पाण्यस्याः **शतपुष्पा**, "असत्काण्ड-प्रान्त-शतैकाऽञ्चः पुष्पात्" [सिद्ध० २.४.५६] इति अञ्चो वर्जनाद् ङीर्न भवति, तस्याम् । घोषति **घोषा** । शतमित्याह्वाऽस्याः **शताह्वा** । मधुन इयं **माधवी**, "तस्येदम्" [सिद्ध० ६.३. १६०] इत्यण् । "मिश मश रोषे च" तालव्यान्ताविमौ, मिश्यते **मिसिः**, "नाम्युपान्त्य-"[हैमोणादिसू० ६०९] इति किदिः, पृषोदरादित्वाद् दन्त्य सकार, स्त्रीलिङ्गः । छत्रमतिक्रान्ता **अतिच्छत्रा** । **शतच्छत्रा**ऽपि । छत्राकाराणि पुष्पाण्यस्याः **छत्रपुष्पी**, "असत्काण्ड-प्रान्त-" [ सिद्ध० २.४.५६ ] इति ङीः । अवाञ्चि—अधोमुखानि पुष्पाण्यस्याः **अवाक्पुष्पा**, "असत्काण्ड-प्रान्त-शतैकाऽञ्चः पुष्पात्" [ सिद्ध० २.४.५६ ] इति सूत्रेण अञ्चो वर्जनाद् ङयभावः । आबन्त एवायम् । कारोरिय **कारवी** कर्मण्या, "तस्येदम्" [सिद्ध० ६.३. १६०] इत्यण् । सहते **सहा** । आह च—

शतपुष्पा मिसिर्घोषा शिफका माधवी शिफा ।
अतिच्छत्रा त्ववाक्पुष्पा शताह्वा कारवी स्मृता ॥

[ धन्व० वर्ग २ श्लो० १ ] इति ।

तथा च—

शतपुष्पा शतच्छत्रा[ऽतिच्छत्रा] मधुरा मिसिः ।
अवाक्पुष्पा कारवी च [अमर० का० २ वर्ग ४ श्लो० १५२ ] इति ।

एतस्या लोके 'सोआ' इति प्रसिद्धिः ॥३३६॥

**जीरके तु कणाऽजाजी जरणः कणजीरकः ।**

---

१ मिषि· मि० ॥ २ °पुष्पाऽवाक्पु° मि० ॥

जयति मन्दाग्नित्वं जीरः "चि-जि-शुसि-" [हैमोणादिसू० ३९२] इति रो दीर्घत्वं च, स्वार्थिके के **जीरकः**, पुं-क्लीबलिङ्गः, तत्र । कणाः सन्त्यस्यां **कणा**, स्त्रीलिङ्गोऽयम् । अजं–स्वाभाविकं मन्दाग्नित्वमजति–क्षिपति **अजाजी**, लिह्रादित्वादचि अजेर्वी न भवति, स्त्रीलिङ्ग । जीर्यते अनेन **जरणः**, पुंल्लिङ्गः । कणोपलक्षितो जीरकः **कणजीरकः** । आह च—

शुक्लाऽजाजी कणाऽऽख्याता दीर्घक. कणजीरक. ।
[ ] इति ।

एतस्य लोके 'श्वेतजीरा' इति प्रसिद्धि ।

**कृष्णेऽस्मिन् कारवी पृथ्वी सुगन्धा सुषवी**[1] **पृथुः ॥३३७॥**
**कुञ्ची कालोपकालोपकुञ्चिकोत्कुञ्चिकाऽपि च**[2] **।**

'कृष्णे' श्यामे 'अस्मिन्' जीरके कारोरियं **कारवी**, "तस्येदम्" [ सिद्ध० ६.३.१६० ] इत्यण् । **पृथ्वी** बृहत्कणा । शोभनो गन्धोऽस्या **सुगन्धा** । सुष्ठु सुवति **सुषवी**,अचि गौरादित्वाद् ङी । **पृथुः** बृहत्कणत्वात् ॥३३७॥

"कुञ्च च कौटिल्या-ऽल्पीभावयो" कुञ्चति **कुञ्ची** । **काला** वर्णेन । उपकालयति **उपकाला** । उपकुञ्चति–अल्पीकरोति **उपकुञ्चिका** । उत्कुञ्चति **उत्कुञ्चिका** । आह च —

कुञ्चिका चोपकुञ्ची च कालिका चोपकालिका ।
सुषवी कुञ्चिका कुञ्ची पृथ्वी कृष्णे च जीरके ॥
[ धन्व० वर्ग २ श्लो०५९ ] इति ।

एतस्य लोके 'कालउ जीरउ' इति प्रसिद्धि ।

**रसोने लशुनो म्लेच्छकन्दोऽरिष्टो महौषधम् ॥३३८॥**
**महाकन्दः** ।

अम्लेन रसेन ऊनो **रसोनः**, पञ्चरसत्वात् । यद् **व्याडिः**—

ऊनोऽम्लेन रसेनेति रसोनस्तेन कीर्तितः ।
[ ] इति ।

तत्र । लश्यते–अभिलष्यते **लशुनः**, "लशेः श च" [ हैमोणादिसू० २८९ ] इत्युनः प्रत्यय तालव्यः शकारश्चान्तादेशः । [पुं-क्लीबलिङ्गावेतौ । ] म्लेच्छानां प्रियः कन्दो **म्लेच्छकन्दः** । न रिष्यते **अरिष्टः** । **महौषधं** रोगजित्वात् ॥३३८॥

१ तुषवी नि० ॥ २ उपकुञ्ची कुञ्चिका च कालोपकुञ्चिकाऽपि च नि०

महांश्चासौ कन्दश्च **महाकन्दः** । आह च —

अथ महौषधम् ।

लशुनं गृञ्जनारिष्ट-महाकन्द-रसोनकाः ॥

[ अमर० का० २ वर्ग ४ श्लो० १४८ ] इति ।

एतस्य लोके 'ल्हसणु' इति प्रसिद्धि ।

**अपरोऽप्येष गृञ्जनो दीर्घपत्रकः ।**

'अपर.' अन्य 'एष' रसोन गृञ्ज्यते-कुत्सित' शब्द्यते **गृञ्जनः**, पुं-क्लीब-लिङ्ग । दीर्घं पत्रमस्य दीर्घपत्र, के **दीर्घपत्रकः** ।

**पलाण्डौ यवनेष्टः स्यात् सुकन्दो [1]वक्त्रदूषणः ॥३३९॥**
**[2]हरणः**

पिपर्त्ति धातून् **पलाण्डुः**, "केवयु-भुरण्यु-" [हैमोणादिसू०७४६] इति उप्रत्यये निपात्यते, "पल गतौ" पलति वा **पलाण्डुः**, "पलि-मृ-यामाण्डु-कण्डुकौ" [हैमोणादि-सू०७६७] इत्याण्डु. प्रत्यय', तत्र । यवनानाम् इष्टो **यवनेष्टः** । शोभन कन्दोऽस्य **सुकन्दः** । वक्त्रं दूषयति **वक्त्रदूषणः** ॥३३९॥

हरति **हरणः** । आहुश्च—

पलाण्डुर्यवनेष्टश्च सुकन्दो मुखदूषण ।

हरण [ धन्व० वर्ग ४ श्लो० ७१ ] इति ।

एतस्य लोके 'डुंगली' इति प्रसिद्धि ।

**स तु हरितो लतार्को दुर्द्रुमोऽपि च ।**

'तु.' पुनरर्थे । 'स' पलाण्डु 'हरित' नील' **लतार्कः** लतार्काख्य । दुष्टो द्रुमो **दुर्द्रुमः**, अपवित्रत्वात् । आह च-

अन्य' पलाण्डुस्तु लतार्को दुर्द्रुमश्च स ।

[ धन्व० वर्ग ४ श्लो० ७१ ] इति ।

**सुश्रुतस्त्वाह—**

लशुनो दीर्घपत्रश्च पिच्छागन्धो महौषधम् ।
फरण्यश्च पलाण्डुश्च लवतर्का परारिका ।
गृञ्जनं यवनेष्टश्च पलाण्डोर्दश जातय ॥

[ ] इति ।

---

१ वक्त्रभूषण नि० ॥ २ करण नि० ॥

**सप्तलायां बहुफेना सातला विमला मता ॥३४०॥**
**सारी मरालिका दीप्ता फेना चर्मकसा यवा ।**

सपति–समवैति **सप्तला**, "मुरलोरल-" [हैमोणादिसू० ४७४ ] इत्यले निपात्यते, तस्याम् । बहव फेनाभा बिन्दवोऽस्या **बहुफेना** । सातं–सुखं लाति **सातला**, "कचित्" [सिद्ध० ५.१.१७१] इति ड । विगतो मलोऽस्या **विमला** ॥३४०॥

सारयति **सारी** । मरालिका(ली)–हंसी, सैव **मरालिका** । अत एव **दीप्ता** । फेनाभा बिन्दव सन्त्यस्यां **फेना** । चर्मणि कसा अस्याः **चर्मकसा** । यूयते **यवा** । आह च–

सातला सप्तला सारी विपुला विमलाऽमला ।
बहुफेना चर्मकसा फेना दीप्ता रसालिका ॥
[ धन्व० वर्ग १ श्लो० २३८ ] इति ।

एतस्या लोके 'सार्थरि' इति प्रसिद्धि ।

**प्रसारण्यां चारुपर्णी भद्रपर्णी प्रतानिका ॥३४१॥**
**भद्रबला भद्रलता भद्रकाली महाबला ।**
**सारणा सरणा सुप्रसरा राजबला च सा ॥३४२॥**

प्रसार्यतेऽनया **प्रसारणी**, "करणा-ऽऽधारे" [ सिद्ध० ५.३.१२९ ] इत्यनट्, तस्याम् । चारूणि पर्णान्यस्या **चारुपर्णी** । भद्राणि पर्णान्यस्या **भद्रपर्णी** । प्रतानोऽस्त्यस्याः **प्रतानिका**, "अनोऽनेकस्वरात्" [ सिद्ध० ७.२.६ ] इतीकः ॥३४१॥

भद्रं बलमस्या **भद्रबला** । [ भद्रा चासौ लता च ] **भद्रलता** । भद्रा चासौ काली च **भद्रकाली** । महद्बलमस्या **महाबला** । सारयति **सारणा** । सरतीव अम्भः सङ्कोचाद् निवर्तते गमनया **सरणा** । "**सरणी**' इति युक्त पाठः" इति **क्षीरस्वामी** । शोभन प्रसरोऽस्या **सुप्रसरा** । राजरूपा–मुख्या बला–बलकृद् **राजबला** । आह च–

प्रसारणी सुप्रसरा सरणी सारणी च सा ।
चारुपर्णी राजबला भद्रपर्णी प्रतानिका ॥
[ धन्व० वर्ग १ श्लो० २८९ ] इति ।

एतस्या लोके 'प्रसारणी' इति प्रसिद्धिः ॥३४२॥

---

१ बिन्दुलामली नि० ॥ २ चर्मकसा नि० ॥ ३ सारणी सुप्रसारा च राजबला च साऽपि च नि० ॥

**ब्राह्म्यां वयःस्था मत्स्याक्षी ब्राह्मणी सोमवल्लरी ।**
**सरस्वती सत्यवती सुस्वरा ब्रह्मचारिणी ॥३४३॥**

ब्राह्मीव **ब्राह्मी**, पावनत्वात्, तस्याम् । वयसि तिष्ठति **वयःस्था**, "स्था-पा-स्ना-त्र:-" [सिद्ध० ५ १ १४२] इति कः, वयसः स्थैर्यकृत् । **मत्स्याक्षी** मत्स्याक्षिपुष्पी । ब्रह्मण इयं **ब्राह्मणी**, "तस्येदम्" [सिद्ध० ६.३.१६०] इत्यण् । सोमस्य वल्लरी **सोमवल्लरी** । सर –प्रसरणमस्त्यस्या **सरस्वती** । सत्यमस्त्यस्याः **सत्यवती** । शोभनः स्वरोऽस्या **सुस्वरा**, "ओस्वृ शब्दोपतापयोः" सुष्ठु सुतरां वा स्वरति **सुस्वरा** इति वा । ब्रह्म चरतीत्येवंशीला **ब्रह्मचारिणी** । आह च—

ब्राह्मी सरस्वती सोमा सत्याह्वा ब्रह्मचारिणी ।
[ ] इति ।

एतस्या लोके 'ब्राह्मी' इति प्रसिद्धिः ॥३४३॥

**सूरणे कण्डुरः कन्दोऽर्शोघाती चित्रदण्डकः ।**

सूयते–प्रेर्यते **सूरणः**, "चिक्कण-कुक्कण" [हैमोणादिसू० १५०] इत्यणे निपात्यते, तत्र । कण्डूं राति **कण्डुरः**, पृषोदरादित्वात् साधु । कन्द्यते -दृश्यते **कन्दः**, [पुं-क्लीबलिङ्ग] । अर्शो घातयति **अर्शोघाती** । चित्रो दण्डोऽस्य चित्रदण्ड, स्वार्थिके के **चित्रदण्डकः** । एतस्य लोके 'सूरणकन्द' इति प्रसिद्धिः ।

**वृद्धदारके त्वावेगी जीर्णवालक[1]जुङ्गकौ ॥३४४॥**
**[2]अजाण्डी च ऋक्षगन्धा स्यादन्तःकोटपुष्प्यपि ।**

वृद्धं -वृद्धत्वं दारयति **वृद्धदारकः** वृद्धं दारकीकुरुते इति वा, पृषोदरादित्वात्, तत्र । आ समन्ताद् वेगोऽस्त्यस्या **आवेगी**, वृद्धत्वात्, उद्वेजको वा । जीर्णा वाला अस्य जीर्णवाल, स्वार्थिके के **जीर्णवालकः** । "युगु जुगु वुगु वर्जने" चवर्गीयादिरयम्, जुङ्गति जुङ्ग अच्, स्वार्थिके क **जुङ्गकः** ॥३४४॥

अजस्येव अण्डानि–अस्थीन्यस्या **अजाण्डी** । **छगलाण्डी**त्यपि । ऋक्षवद् गन्धयति **ऋक्षगन्धा** । "वृक्षगन्धा" इति च **पाठभेदः**" इति **क्षीरस्वामी** । अन्तःकोटे पुष्पाण्यस्या **अन्तःकोटपुष्पी** । आह च—

१ °वालुक° नि० ॥ २ अजाण्टी ऋक्षगन्धा स्यादन्तःकोटकपुष्प्यपि नि० ॥

वृद्धदारक आवेगी जुङ्गको जीर्णवालकः ।
अन्तःकोटरपुष्पी स्यादजाण्डी छागलाण्डयपि ॥
[ धन्व० वर्ग ४ श्लो० १०७ ] इति ।

एतस्य लोके 'वृद्धारा' इति प्रसिद्धिः ।

**सुवर्चलायां मण्डूकी बदराऽऽदित्यवल्लभा ॥३४५॥**
**मण्डूकपर्ण्यर्कभक्ताऽऽदित्यवल्ली सुखोद्भवा ।**

सुष्ठु वर्चते **सुवर्चला**, "मुरलोरल-" [ हैमोणादिसू० ४७४ ] इत्यले निपात्यते, सुष्ठु वर्चेते सुवर्च –अग्निर्दीपनम् , तल्लातीति वा, तस्याम् । मण्डति मण्ड्यते वा **मण्डूकी**, "मृ-मन्यञ्जि-" [हैमोणादिसू० ५८ ] इत्यूकः, गौरादित्वाद् ङीः । "बद स्थैर्ये" बदति **बदरा**, "ऋच्छि-चटि-वटि-" [हैमोणादिसू० ३९७ ] इत्यरः । आदित्यस्य वल्लभा **आदित्यवल्लभा** ॥३४५॥

मण्डूक इव पर्णान्यस्या **मण्डूकपर्णी**, "पाक-कर्ण-पर्ण-" [ सिद्ध०२.४.५५] इति ङी । अर्कस्य भक्ता **अर्कभक्ता** । आदित्यप्रिया वल्ली **आदित्यवल्ली** । सुखमुद्भवति अस्या **सुखोद्भवा** । आह च –

सुवर्चलाऽऽदित्यकान्ता सूर्यभक्ता सुखोद्भवा ।
मण्डूकपर्णी मण्डूकी बदराऽऽदित्यवल्ल्यपि ॥
[ धन्व० वर्ग ४ श्लो० ९८ ] इति ।

एतस्या लोके 'सूंचलि' इति प्रसिद्धिः ।

**भृङ्गराजे भृङ्गरजो भृङ्गारः केशरञ्जनः ॥३४६॥**
**[1]अङ्गारको [2]भेकरजो भृङ्गो मार्कव इत्यपि ।**

भृङ्गवद् राजते **भृङ्गराजः**, तत्र । भृङ्गवद् रञ्जयति–कृष्णीकरोति **भृङ्गरजः**, अचि प्रत्यये पृषोदरादित्वान्नलोपः । भृङ्गान् इयर्ति **भृङ्गारः** । केशान् रञ्जयति **केशरञ्जनः** ॥३४६॥

अङ्गति **अङ्गारकः** "अग्यङ्गि-" [हैमोणादिसू० ४०५ ] इति आरे स्वार्थिके के च साधुः । भेकवद् रञ्जयति **भेकरजः**, अचि प्रत्यये पृषोदरादित्वात् साधुः । भृङ्गराजैकदेशे **भृङ्गः**, यथा सत्या सत्यभामेत्यादिवत् ; बिभर्ति वा **भृङ्गः**, "भृ-वृभ्यां नोऽन्तश्च" [ हैमोणादिसू०९४ ] इति गः । मर्कति - सम्पृच्यते **मार्कवः** "कैरव-भैरव-" [ हैमोणादिसू०५१९ ] इत्यवे निपात्यते । आह च—

१ सुखोद्भिदा मि० ॥ २ अमारको मि० ॥

भृङ्गराजो भृङ्गरजो मार्कवो भृङ्ग एव च ।
अङ्गारको भेकरजो भृङ्गारः केशरञ्जनः ॥
[ धन्व० वर्ग ४ श्लो० ११ ] इति ।

एतस्य लोके 'भांगरउ' इति प्रसिद्धिः ।

**कासमर्दे त्वरिमर्दः कालं [1]कनक-कर्कशौ ॥३४७॥**

कासं मर्दयति **कासमर्दः**, तत्र । अरीन् मर्दयति **अरिमर्दः** । **कालं** वर्णेन । कनति–दीप्यते **कनकः** । कर्कं श्यति **कर्कशः** । आह च—

कासमर्दोऽरिमर्दश्च कासारिः कर्कशस्तथा ।
कालं कनक इत्युक्तः स च स्यात् कासमर्दकः ॥
[ धन्व० वर्ग ४ श्लो० ११८ ] इति ।

एतस्य लोके कासदउ' इति प्रसिद्धिः ॥३४७॥

**वास्तुके तु [2]शाकज्येष्ठः प्रवालः क्षारपत्रकः ।**
**शाकवीरो वीरशाकस्ताम्रपुष्पः प्रसादकः ॥३४८॥**

वसन्त्यस्मिन् गुणा इति **वास्तुकम्**, "कञ्चुकाशुक-" [ हैमोणादिसू० ५७ ] इत्युके निपातनात् साधु, तत्र । शाकेषु ज्येष्ठः **शाकज्येष्ठः** । प्रवलति **प्रवालः**, "वा ज्वलादि-" [ सिद्ध० ५.१ ६२] इति ण । क्षारं पत्रमस्य **क्षारपत्रः**, के **क्षारपत्रकः** । शाकानां मध्ये वीर इव प्रधानत्वात् **शाकवीरः** । वीरश्चासौ शाकश्च **वीरशाकः** । ताम्राणि पुष्पाण्यस्य **ताम्रपुष्पः** । प्रसादयति **प्रसादकः** । आह च—

वास्तुकं क्षारपत्रं स्याच्छाकवीरः प्रसादकः ।
[ ] इति ।

एतस्य लोके 'वथुआ' इति प्रसिद्धिः ॥३४८॥

**पालङ्क्यायां तु पालक्या क्षुरिका मधुसूदनी ।**

पालयति **पालङ्क्या**, "शिक्या-ऽऽस्या-ऽऽढ्य-" [ हैमोणादिसू० ३६४ ] **इति** ये निपात्यते, तस्याम् । पालके साधु **पालक्या** "तत्र साधौ" [सिद्ध० ७.१.१५] इति य, पाल्यते इति वा, "शिक्या ऽऽस्या-ऽऽढ्य-" [ हैमोणादिसू० ३६४ ] **इति** ये निपातनात् साधु । क्षुरति क्षुरी, के **क्षुरिका**, क्षुरिकेव वा **क्षुरिका** । **मधु** माधुर्यं सूदते **मधुसूदनी** । आह च—

१ कतककर्कश नि० ॥ २ शाकश्रेष्ठ नि० ॥

पालङ्क्या वास्तुकाकारा क्षुरिका चीरितच्छदा ।
[ ] इति ।

एतस्या लोके 'पलांक' इति प्रसिद्धिः ।

**जीवन्त्यां स्याज्जीवनीया जीवनी जीववर्धनी ॥३४९॥**
**मङ्गल्यनामधेया च शाकश्रेष्ठा यशस्करी ।**

जीवतादिति **जीवन्ती,** "रुहि-नन्दि-" [ हैमोणादिसू०२२०] इति टिदन्तः, तस्याम् । जीव्यतेऽनया **जीवनीया,** बाहुलकात् करणेऽनीयः । जीव्यतेऽनया **जीवनी,** "करणाऽऽधारे" [ सिद्ध०५.३.१२९ ] इत्यनट् । जीवस्य वर्धनी **जीववर्धनी** ॥३४९॥

मङ्गल्यमिति नामधेयमस्या **मङ्गल्यनामधेया** । शाकमध्ये श्रेष्ठा **शाकश्रेष्ठा** । यशः करोति **यशस्करी** । आह च—

जीवन्ती जीवनीया च जीवनी जीववर्धनी ।
मङ्गल्यनामधेया च शाकश्रेष्ठा यशस्करी ॥
[ धन्व० वर्ग १ श्लो० १४० ] इति ।

एतस्या लोके 'दोडी' इति प्रसिद्धि ।

**स्यादम्ललोणिकायां तु चाङ्गेरी चुक्रिका रसा ॥३५०॥**
**अम्बष्ठाऽम्बोटिका दन्तशठा लोलाऽम्ललोलिका ।**
**नरेन्द्रमाला क्षुद्राम्ली चतुष्पर्णी च लोणिका ॥३५१॥**

अम्लेन लुनाति **अम्ललोणिका,** पृषोदरादित्वात् साधुः, तस्याम् । चाङ्गं—दन्तपटुत्वमीरयति **चाङ्गेरी** । चुक्रन्ते—व्यथन्तेऽस्याः **चुक्रिका,** णके आप् । रस्यते—आस्वाद्यते **रसा** ॥३५०॥

अम्बे तिष्ठति **अम्बष्ठा,** "गो-ऽम्बा-ऽम्ब-सव्या-ऽप-द्वि-त्रि" [ सिद्ध०२.३.३० ] इत्यादिना स्थशब्दसम्बन्धिनः सकारस्य षो भवति, "स्था-पा-स्ना-त्रः कः" [ सिद्ध० ४.१.१४२ ] इति कः प्रत्ययः । अम्बमटति **अम्बोटिका,** पृषोदरादित्वात् साधुः । दन्ताः शठाः अस्याः **दन्तशठा** । "लोडृ उन्मादे" लोडति **लोला,** ड-लयोरैक्यात् । अम्लेन लोला अम्ललोला, के **अम्ललोलिका** । [. . . .] **नरेन्द्रमाला** । क्षुद्रा चासौ अम्ली च **क्षुद्राम्ली** । चत्वारि पर्णान्यस्याः **चतुष्पर्णी** । लुनाति **लोणिका,** पृषोदरादित्वात् । आह च—

१ अम्बष्ठाऽम्लोलिका दन्तशठाटोलाम्लटोलकः । नरेन्द्रमाता नि० ॥

क्षुद्राम्लिका तु चाङ्गेरी लोणिका चाऽम्ललोणिका ।
लोला लोडा चतुष्पर्णी सैव दन्तशठा मता ॥

[ धन्व० वर्ग ५ श्लो० ३६ ] इति ।

तथा च--

चाङ्गेरी चुक्रिका दन्तशठाऽम्बष्ठाऽम्ललोणिका ।

[अमर०का०२ वर्ग४ श्लो०१४० ] इति ।

एतस्या लोके 'आंबउत्री' इति प्रसिद्धि ॥३५१॥

**तण्डुलीये मेघनादस्तण्डुली तण्डुलेरकः ।**
**गण्डीरको रक्तकाण्डो विषहार्य[1]ल्पमारिषः ॥३५२॥**

तण्डुलेभ्यो हितस्तण्डुलीयः, "हविरन्नभेदापूपादेर्यो वा" [ सिद्ध०७.१.२९] इतीय, ताडयति दोषान् इति वा, "गय-हृदयादय" [ हैमोणादिसू०३७०] इत्यये निपात्यते, तत्र । मेघस्येव नादोऽस्मात मेघनादः । तण्डुला सन्त्यस्य तण्डुली । तण्डुलान् ईरयति द्रावकत्वात तण्डुलेर, स्वार्थिके के तण्डुलेरकः । गण्डीं–ग्रन्थिम् ईरयति गण्डीर, स्वार्थिके के गण्डीरकः । रक्त काण्डोऽस्य रक्तकाण्डः । विषं हरति विषहारी । अल्पं मृणाति-हिनस्ति अल्पमारिषः, "अमि-मृभ्या णित्" [ हैमोणादिसू० ५४९ ] इति इष । आह च—

तण्डुलीयक उद्दिष्टश्चण्डाला तण्डुलेरक ।
गण्डीरस्तण्डुली बीजो मेघनादो घनस्वन ॥

[ धन्व० वर्ग ४ श्लो० ११६ ] इति ।

एतस्य लोके 'तण्डुलेजा' इति प्रसिद्धि । ॥३५२॥

**शमठे तु तोयवृत्तिर्गण्डीरस्तोयमञ्जरी ।**
**समष्ठिला शोषहरी जलापामार्ग ओलकः ॥३५३॥**

शाम्यति शमठः, "मृ-जॄ-शॄ-कम्यमि-रमि-रपिभ्योऽठ" [ हैमोणादिसू०१६७] इति बहुवचनाद् अठ प्रत्ययः, तत्र । तोये पानीये वृत्ति—वर्तनमस्य तोयवृत्तिः । गण्डीन्—ग्रन्थीन् ईरयति गण्डीरः । तोयस्य मञ्जरी तोयमञ्जरी । सम्यगस्थीनि लाति समष्ठिला साण्डत्वात्, पृषोदरादित्वात् साधु । समष्ठिलानाम शाकम् । यन्माला—

"गण्डीरो नाम समष्ठिला" [ ] इति ।

---

१ °मार्गस्तुल्यक मि० ॥

शोषं हरति **शोषहरी**। जले जलस्य वा अपामार्ग इव **जलापामार्गः**। "उल दाहे" सौत्र', ओलति ओल, के **ओलकः**, त्रयोदशस्वरादिरयम् ॥३५३॥

**अन्यस्तु स्थलगण्डीरः कर्बुरष्टक्कदेशजः।**

'तु:' पुनरर्थे। 'अन्य:' अपर स्थलस्य गण्डीर: **स्थलगण्डीरः**। **कर्बुरो** वर्णेन। **टक्कदेशे** जात' **टक्कदेशजः**।

**काकमाच्यां तु कामाची काकमाह्वा[1] च वायसी ॥३५४॥**

काकवद् मचते-वर्णेन सम्पृच्यते **काकमाची**, तस्याम्। पृषोदरादित्वान्मध्यककारलोपे **कामाची**। काकस इत्याह्वाऽस्या' **काकसाह्वा**। वायसवर्णत्वाद् **वायसी**। आह च—

काकमाची ध्वाङ्क्षमाची काकसाह्वा च वायसी।
कट्वी कटुफला चैव रसायनवरा स्मृता ॥
[ धन्व० वर्ग ४ श्लो० २१ ] इति।

एतस्या लोके 'कमाइ' इति प्रसिद्धिः ॥३५४॥

**श्रीहस्तिन्यां तु [2]भूरण्डी कुरण्डी कास्मरीरिपुः।**

हस्तिनी हस्तिकर्णपत्रा, श्रीयुक्ता हस्तिनी **श्रीहस्तिनी**, तस्याम्। भुवि रोहति **भूरण्डी** "पिचण्डैरण्ड-" [ हैमोणादिसू० १७६ ] इत्यण्डे निपात्यते। कौ रोहति **कुरण्डी**, "पिचण्डैरण्ड-" [ हैमोणादिसू० १७६ ] इत्यण्डे निपात्यते। कास्मर्या रिपु, **कास्मरीरिपुः**। श्रीहस्तिनीनामानि।

**सुनिषण्णे सूचिपत्रः स्वस्तिकः शितिवा[3]रकः ॥३५५॥**
**[4]श्रीवराकः(? श्रीवारकः)शितिवरो वितुन्नः कुक्कुटः शितिः॥**

सुष्टु सुतरा वा निषीदति स्म **सुनिषण्णः**, तत्र। सूच्याकाराणि पत्राण्यस्य **सूचिपत्रः**। स्वस्ति कायति **स्वस्तिकः**। शितिं वारयति **शितिवारकः** ॥३५५॥

श्रियं वृणीते **श्रीवराकः** ( ? श्रीवारकः )। शितिं वृणोति **शितिवरः**। वितुद्यते स्म **वितुन्नः**। "कुकि वृकि आदाने" कुक्यते **कुक्कुटः**, "नर्कुट-कुक्कुट-" [ हैमोणादिसू० १५५ ] इत्युटे निपात्यते। श्यायते श्यति वा **शितिः**। आह च—

शितिवार' सूचिपत्र, शैल्याख्य( ? सूच्याह्व.) सुनिषण्णकः।
श्रीवासक, शितिवरः स्वस्तिक कटुक'( ? कुक्कुटः ) शिखी ॥
[ धन्व० वर्ग १ श्लो० १५५ ] इति।

१ °ह्वा वृषायणी नि० ॥ २ भूरुण्डी कुरुण्डी नि० ॥ ३ शिरिवारकः नि० ॥ ४ श्रीवारक, शिति° नि ॥

एतस्य लोके 'षडकुलिग' इति प्रसिद्धि ।

**मूलके तु महाकन्दो रुचिष्यो हस्तिदन्तकः ॥३५६॥**
**[1]बस्तिका नीलकण्ठश्च [2]सेकिमो हरिपर्णकः ।**

"मूल प्रतिष्ठायाम्" मूलति मूलम्, मूयते वा "शुक्रगी मूभ्यः कित्" [हैमोणादिसू० ४६३] इति किल्ल, तदेव **मूलकम्**, पुं-क्लीबलिङ्ग', तत्र । महांश्चासौ कन्दश्च **महाकन्दः** । रोचते **रुचिष्यः**, "रुचि-भुजिभ्यां किष्य" [हैमोणादिसू० ३८४] इति किदिष्य । हस्तिदन्तप्रतिकृति **हस्तिदन्तकम्**, पुं-क्लीबलिङ्ग' ॥३५६॥

बस्तप्रतिकृति **बस्तिका** । नीलः कण्ठोऽस्य **नीलकण्ठः** । सेकेन निर्वृत्त. **सेकिमः**, "भावादिम" [सिद्ध० ६.४.२१] इतीम । हरि—नीलं पर्णमस्य हरिपर्ण, स्वार्थिके के **हरिपर्णकः** । आह च

मूलकं हरिपर्णं च वस्तिका क्षारमेव च ।
नीलकन्दं महाकन्दं रुचिष्यं हस्तिदन्तकम् ॥
[धन्व० वर्ग ४ श्लो० ३३] इति ।

एतस्य लोके 'मूला' इति प्रसिद्धि. ।

**चाणक्यमूलके शालामर्कटो मरुसम्भवः ॥३५७॥**
**विष्णुगुप्त-मतो [3]मिश्रो वालेयो मर्कटोऽपि च ।**

चाणक्यस्य मूलकं **चाणक्यमूलकम्**, तत्र । शालाया मर्कट इव **शालामर्कटः** । मरौ सम्भवति **मरुसम्भवः** ॥३५७॥

'विष्णुगुप्तमत' इति विष्णुशब्दाद् गुप्त-मतशब्दौ योज्येते, तेन **विष्णुगुप्तः विष्णुमतः** । "मिश्रण् सम्पचने" मिश्र्यते **मिश्रः** । वलते **वालेयः**, "गय-हृदयादय" [हैमोणादिसू० ३७०] इति साधु । मर्क सौत्रो गत्यर्थ', मर्कति **मर्कटः**, "दिव्यवि-" [हैमोणादिसू० १४२] इत्यट । आह च -

चाणक्यमूलकं चान्यं वालेयं मरुसम्भवम् ।
शालामर्कटमिश्रं च विष्णुगुप्तमनन्तकम् ॥
[धन्व० वर्ग ४ श्लो० ३५] इति ।

बृहन्मूलकोऽयम् ।

**हिलमोच्यां शङ्खधरा जलब्राह्मी च मोचिका ॥३५८॥**

---

१ बुस्तिका नि० ॥ २ 'सेकिमम्' इत्यभिधानचिन्तामणौ स्वोपज्ञटीकायां च ॥ ३ ०मिश्र स्थालयो नि० ॥

हिलाद्-वीर्याद् मोचयति **हिलमोची**, तस्याम् । शङ्खं धरति **शङ्खधरा** । जलस्य ब्राह्मी **जलब्राह्मी** । मोचयति **मोचिका** ॥३५८॥

**कलम्ब्यां तु शतपर्वा [1]कडम्बी वायसी च सा ।**

कलम्बतेऽस्याः **कलम्बी**, तस्याम् । शतं–बहूनि पर्वाण्यस्याः **शतपर्वा** । "कड मदे" कडति **कडम्बी**, "कृ-कडि-कटि-वटेरम्बः" [ हैमोणादिसू० ३२१ ] इत्यम्बः । **वायसी** वर्णेन ।

**[2]कारवेल्ले तु सुषवी कटिल्लो मृदुपर्णकः ॥३५९॥**

"वेल्ल गतौ" कारेण वेल्लति **कारवेल्लः**, तत्र । सुष्ठु सूयते **सुषवी**, अच् । कटिं लाति **कटिल्लः**, [ पृषोदरादित्वात् द्वित्वम् ], कटति–आवृणोति वा, "भिल्ला-ऽच्छभल्ल-" [ हैमोणादिसू० ४६४ ] इति ले निपात्यते । मृदूनि पर्णान्यस्य मृदुपर्णं, के **मृदुपर्णकः** । यदाह—

अथ कारवेल्लः कटिल्लकः ॥

सुषवी च

[ अमर० का० २ वर्ग ४ श्लो० १५४-५५ ] इति ।

तथा च—

कारवेल्लं कटिल्लं स्यादुग्रकाण्डं सुकाण्डकम् ।
कारवल्ली वारिवल्ली बृहद्वल्ल्यपरा स्मृता ॥

[ ] इति ।

एतस्य लोके 'कारेली' इति प्रसिद्धिः ॥३५९॥

**पटोले तु पाण्डुफलः कुलकः कर्कशच्छदः ।**
**राजीफलः कफहरो [3]राजमान्योऽमृताफलः ॥३६०॥**

"पट गतौ" पटति इति **पटोलः**, "पटयति सरलत्वात्" इति **क्षीरस्वामी**, "कटि-पटि-" [ हैमोणादिसू० ४९३ ] इत्योलः, पुं-स्त्रीलिङ्गः, तत्र । पाण्डूनि फलान्यस्य **पाण्डुफलः** । कोलति–संस्त्यायति **कुलकः**, "घु-धून्दि-रुचि-तिलि-पुलि-कुलि-" [ हैमोणादिसू० २९ ] इत्यादिना किदकः । कर्कशानि छदान्यस्य **कर्कशच्छदः** । राज्याकारं फलमस्य **राजीफलः** । कफं हरति **कफहरः** । राज्ञां मान्यो **राजमान्यः** । अमृतानि फलान्यस्य **अमृताफलः**, पृषोदरादित्वाद् दीर्घः । आह च—

---

१ कलम्बूर्वायसी नि० ॥ २ कारवेल्ल्यां तु नि० ॥ ३ राजिमानमृता° नि० ॥

पटोलः कुलकः प्रोक्तः पाण्डुरः कर्कशच्छदः ।
राजीफलः पाण्डुफलो राजमान्योऽमृताफलः ॥
[ धन्व० वर्गो १ श्लो० ४९ ] इति ।

एतस्य लोके 'पटोल' इति प्रसिद्धिः ॥३६०॥

**कर्कोटे तु किलासघ्नस्तिक्तपत्रः सुगन्धकः ।**

करोति किलासहिंसा **कर्कोटः**, "कपोट-बकोट-" [ हैमोणादिसू० १६१ ] इत्योटे निपात्यते, तत्र । किलासं हन्ति **किलासघ्नः** । तिक्तं पत्रमस्य **तिक्तपत्रः** । सुष्ठु गन्धयति **सुगन्धकः**, णकप्रत्ययः ।

एतस्य लोके 'कंकोडा' इति प्रसिद्धिः ।

**कूष्माण्डके तु कर्कारुः**

"कुषश् निष्कर्षे" कुष्यते कूष्माण्डः, "पिचण्डैरण्ड-" [ हैमोणादिसू० १७६ ] इत्यण्डे निपात्यते, के **कूष्माण्डकः**, को उष्मणा अनितीति वा, कुत्सित उष्मा अण्डेषु-बीजेष्वस्य वा, पित्तकारित्वात्, तत्र । कर्कि. सौत्रः, कर्कति **कर्कारुः**, पुल्लिङ्गः, "कर्कैरारुः" [ हैमोणादिसू० ८१३ ] इत्यारुः, उकारान्तः, "करोति तृप्तिं **कर्कः**, इयर्त्ति **अरुः** "स्वर्त्ति-" [ हैमोणादिसू० ९९७ ] इत्युस् प्रत्ययः, बस्तिशोधनः सरत्वात्, कर्कश्चासावरुश्चेति वा, उसन्तोयम्" इत्यपरे ।

**कालिङ्ग्यां बहुपुत्रिका ॥३६१॥**

**कलिङ्गे** भवा **कालिङ्गी**, "भवे" [ सिद्ध० ६.३.१२३ ] इत्यण्, केन आलिङ्ग्यते वा, तस्याम् । बहवः पुत्रा अस्याः बहुपुत्री, के **बहुपुत्रिका** ॥३६१॥

**तुम्ब्यां पिण्डफलेक्ष्वाकुस्तिक्तबीजा महाफला ।**
**अलाबूः क्षत्रियवरा कटुकालाबुनी च सा ॥३६२॥**

ताम्यति **तुम्बी**, "तुम्ब-स्तम्बादयः" [ हैमोणादिसू० ३२० ] इति बान्तो निपात्यते, तस्याम् । पिण्डाकाराणि फलान्यस्याः **पिण्डफला** । इष्यते **इक्ष्वाकुः**, "इषेः स्वाकुक्" [ हैमोणादिसू० ७५७ ] इत्यनेन "इषत् इच्छायाम्" इत्यस्मात् कित् स्वाकुः प्रत्ययः । तिक्तानि बीजान्यस्याः **तिक्तबीजा** । महान्ति फलान्यस्याः **महाफला** । "लबुङ् अवस्रंसने" न लम्बते **अलाबूः**, काक्वाऽत्र नञ्, "नञो लम्बेर्नलुक् च" [ हैमोणादिसू० ८३८ ] इति णिदूः, स्त्री-क्लीबलिङ्गः । क्षत्रियैर्व्रियते **क्षत्रियवरा** । कटुका चासौ अलाबुनी च **कटुकालाबुनी** । आह च—

कटुकालाबुनी तुम्बी लम्बा पिण्डफला तथा ।
इक्ष्वाकुः क्षत्रियवरा तिक्तबीजा महाफला ॥
[ धन्व० वर्ग १ श्लो० १७० ] इति ।

एतस्या लोके 'त्रूंबिणि' इति प्रसिद्धिः ॥३६२॥

**चिर्भिटर्यां त्रपुसी वालुङ्क्येर्वारुर्व्याडपत्रिका ।**
**ऊर्वारुः कर्कटी मूत्रफला राजादनी लता ॥३६३॥**
**छर्दनी च विपाण्डुश्च**

चिरि· सौत्र. स्वादौ । चिरिणोति **चिर्भिटी**, "चिरेरिटो भ च" [ हैमोणादिसू० १४९ ] इति इट प्रत्ययो भकारश्चान्तादेशः, तस्याम् । "त्रपौषि लज्जायाम्" त्रपते इव **त्रपुसी**, "त्रपेरुस" [ हैमोणादिसू० ५७८ ] इत्युसः । वलति **वालुङ्की**, "कञ्चुकाशुक-" [ हैमोणादिसू० ५७ ] इत्युके निपात्यते । ऊर्वति–हिनस्त्यर्त्तिम् **एर्वारुः**,पुं-स्त्रीलिङ्ग., 'उर्वेरादेरूदेतौ च" [ हैमोणादिसू० ८१४] इति "उर्वै हिंसायाम्" इत्यस्मादारुः प्रत्यय आदेश्च एकारादेश । व्याडाकाराणि पत्राण्यस्याः **व्याडपत्रिका** । ऊर्वति **ऊर्वारुः**, "उर्वेरादेरूदेतौ च" [ हैमोणादिसू० ८१४ ] इति आरु· आदेरूकारादेशश्च । कर्कति **कर्कटी**, "दिव्यवि-" [ हैमोणादिसू० १४२ ] इत्यट·, ह्रस्व· कर्क· **कर्कटी** इति वा, ग्रामटीवत् । मूत्रयुतं फलमस्याः **मूत्रफला** । राज्ञामदनं **राजादनी** । लाति लायते वा **लता**, "पृषि-रञ्जि-" [ हैमोणादिसू० २०८ ] इति किदत· ॥३६३॥

छर्यते **छर्दनी** । विशिष्टः पाण्डुवर्णोऽस्याः **विपाण्डुः** । आह च—

कटुकं त्रपुसं प्रोक्तं विपाण्डुर्हस्तिपर्णनी ।
छर्दापनी मूत्रफला लता कर्कटिकाऽपि च ॥
[ ] इति ।

एतस्या लोके 'चीभडी' इति प्रसिद्धिः ।

**तस्याः पक्वफलं स्फुटी ।**

'तस्याः' चिर्भिट्याः पक्वं फलं पक्वफलं "स्फुटत् विकसने" स्फुटति **स्फुटी** ।

**कूर्चके शृङ्गकः सर्जो दीर्घायुः कूर्चशीर्षकः ॥३६४॥**
**मङ्गल्यनामधेयश्च जीवकः प्रियजीवकः ।**
**ह्रस्वाङ्गको मधुरकः प्राणकश्चिरजीव्यपि ॥३६५॥**

कीर्यते कूर्चः, "कूर्च-चूर्चादयः" [ हैमोणादिसू० ११३ ] इति चट्प्रत्यये निपात्यते, स्वार्थिके के **कूर्चकः**, नत्र । शृङ्गप्रतिकृतिः **भृङ्गकः**, "तस्य तुल्ये कः संज्ञा-प्रतिकृत्योः" [ सिद्ध० ७.१ १०८ ] इति कः । सृजति रसं **सर्जः** । दीर्घमायुरस्माद **दीर्घायुः** । कूर्चः शीर्षेऽस्य कूर्चशीर्षे, स्वार्थिके के **कूर्चशीर्षकः** ॥३६४॥

मङ्गल्यं नामधेयमस्य **मङ्गल्यनामधेयः** । जीवयति **जीवकः**, णकः, प्रियश्चासौ जीवकश्च **प्रियजीवकः** । ह्रस्वमङ्गमस्य ह्रस्वाङ्गः, स्वार्थिके के **ह्रस्वाङ्गकः** । मधु विद्यतेऽस्य मधुर, "मध्वादिभ्यो रः" [ सिद्ध० ७.२ २६ ] इति रः, स्वार्थिके के **मधुरकः** । प्राणिति **प्राणकः** । चिरं जीवतीति **चिरजीवी** । आह च—

जीवकः शृङ्गकः सर्जो दीर्घायुः कूर्चशीर्षकः ।
ह्रस्वाङ्गो मधुरः स्वादुः प्राणकश्चिरजीव्यपि ॥
[ धन्व० वर्ग १ श्लो० १२३ ] इति ।

एतस्य लोके 'जीवक' इति प्रसिद्धिः ॥३६५॥

**पुष्करमूले स्यान्मूलं वीरं पुष्करनामकम् ।**
**पौष्करं पुष्करजटा काश्मीरं पद्मवर्णकम् ॥३६६॥**

पुष्करस्य मूल **पुष्करमूलम्**, तत्र । "मूल प्रतिष्ठायाम्" मूलति **मूलम्**; मूयते वा, "शुक-शी-मूभ्यः कित्" [ हैमोणादिसू० ४६३ ] इति किद् लः । विशेषेण ईरयति–प्रेरयति **वीरम्** । पुष्कर इति नामाऽस्य **पुष्करनामकम्** । पुष्करस्येदं **पौष्करम्**, "तस्येदम्" [ सिद्ध० ६ ३ १६० ] इत्यण् । पुष्करस्य जटा **पुष्करजटा** । कश्मीरदेशे भवं **काश्मीरम्**, "भवे" [ सिद्ध० ६.३.१२३ ] इत्यण् । पद्मवद् वर्णोऽस्य पद्मवर्णम्, के **पद्मवर्णकम्** । आह च –

मूलं पुष्करमूलं च पौष्करं पुष्कराह्वयम् ।
काश्मीरं पुष्करजटा वीरं तत् पद्मवर्णकम् ॥
[ धन्व० वर्ग १ श्लो० ६६ ] इति ।

एतस्य लोके 'पुष्करमूल' इति प्रसिद्धिः ॥३६६॥

**[1]बस्तगन्धायां सुगन्धा खरपुष्पी शाकम्भरा ।**
**[2]कबरी बर्बरी तुङ्गी पूतिमयूर इत्यपि ॥३६७॥**

बस्तस्येव गन्धोऽस्या **बस्तगन्धा**, तस्याम । शोभनो गन्धोऽस्याः **सुगन्धा**, अभ्रादित्वाद ; [सुष्टु] गन्धयति वा । खराणि पुष्पाण्यस्याः **खरपुष्पी** । शाकं

१ मस्तुगन्धाया तु गन्धा नि० ॥ २ कर्बरी बर्बरी चुञ्चो नि० ।

भरति शकम्भरा, बाहुलकान्मोऽन्तः । कूयते कबरी, "ऋच्छि-चटि-वटि-" [ हैमोणादिसू० ३९७] इत्यरः; कबरीव वा । अत एव बर्बरी—कुटिल-ह्रस्वकेशाभा । "तमुच् काङ्क्षायाम्" ताम्यति तुङ्गी, "कमि-तमि-शमिभ्यो डित्" [ हैमोणादिसू० १०७ ] इति डिदुङ्गः । पूतिश्चासौ मयूरश्च पूतिमयूरः । आह च—

अजगन्धा खरपुष्पी बस्तगन्धा सुगन्धिका ।
कबरी बर्बरी गन्धा तुङ्गी पूतिमयूरकः ॥
[ धन्व० वर्ग १ श्लो० १०० ] इति ।

एतस्या लोके 'जहारि' इति प्रसिद्धिः ॥३६७॥

**बिम्ब्यां रक्तफला गोल्हा प्रवालफलघोषिका ।**
**ओष्ठोपमफला तुण्डी तुण्डिका पीलुपर्ण्यपि ॥३६८॥**

**॥ इत्याचार्यश्रीहेमचन्द्रविरचिते निघण्टुशेषे**
**चतुर्थः शाककाण्डः ॥**

बध्नाति बिम्बी, "डी-नी-बन्धि-" [ हैमोणादिसू० ३२५ ] इति डिदिम्बः, तस्याम् । रक्तं फलमस्याः रक्तफला । गोलं जहाति गोल्हा, पृषोदरादित्वात् साधुः । प्रवालफलं घोषति प्रवालफलघोषिका । ओष्ठोपमानि फलान्यस्या ओष्ठोपमफला । "तुणत् कौटिल्ये" तुण्यते तुण्डी, "कु-गु-हु-नी-कुणि-तुणि-" [हैमोणादिसू० १७०] इत्यादिना किद् ड प्रत्ययः । तुण्डमस्त्यस्यास्तुण्डिका, "अतोऽनेकस्वराद्" [सिद्ध० ७.२.६] इति इकः; तुण्ड्येव वा । पीलोरिव पर्णान्यस्याः पीलुपर्णी । आह च—

बिम्बी रक्तफला तुण्डी तुण्डकेरफला च सा ।
ओष्ठोपमफला गोल्हा पीलुपर्णी च तुण्डिका ॥
[ धन्व० वर्ग १ श्लो० २०२ ] इति ।

एतस्या लोके 'गोल्ह' इति प्रसिद्धिः । 'टिङ्कुरी' इति देशान्तरे प्रसिद्धिः ॥३६८॥

**॥ इति श्रीमद्बृहत्खरतरगच्छे श्रीजिनराजसूरिशिष्यश्रीजयसागरमहोपाध्यायपट्टानुक्रमायातवाचनाचार्यधुर्यश्रीभानुमेरुगणिशिष्यसमस्तप्रशस्तग्रन्थावलीविचक्षणश्रीज्ञानविमलोपाध्यायशिष्यवाचनाचार्यश्रीश्रीवल्लभगणिविरचितायां श्रीहेमचन्द्राचार्यकृतनिघण्टुशेषटीकायां शाककाण्डश्चतुर्थः समाप्तः ॥४॥**

## [ पञ्चमस्तृणकाण्डः ]

अथ प्रक्रमागतं तृणकाण्डं प्रतन्यते—

**[1]रौहिषे श्यामकं पौरं पूतीकं भूरि कत्तृणम् ।**
**सौगन्धिकं देवजग्धं शकलं ध्याम-पुद्गले ॥३६९॥**

यत्र तत्र रोहति **रौहिषम्**, "रुहेर्वृद्धिश्च" [ हैमोणादिसू० ५४८ ] इति इषः वृद्धिश्च, पुं-क्लीबलिङ्गः, तत्र । **श्यामकं** श्यामवर्णत्वात् । पुरे भवं **पौरम्**, "भवे" [ सिद्ध० ६.३.१२३ ] इत्यण् । पुनातीति **पूतीकम्**, "सृणीका-ऽस्तीक-" [ हैमोणादिसू० ५० ] इतीके निपात्यते । भवति **भूरि**, "भू-सू-कुशि-" [ हैमोणादिसू० ६९३ ] इति किद् रि. । कुत्सितं तृणं **कत्तृणम्**, असारत्वात्, "तृणे जातौ" [ सिद्ध० ३.२.१३२ ] इति को कदादेश । सुगन्धः प्रयोजनमस्य **सौगन्धिकम्**, "प्रयोजनम्" [ सिद्ध० ६.४.११७ ] इतीकण् । देवैर्जग्धमिव अन्तः-शुषिरत्वाद् **देवजग्धम्** । "शकॢंट् शक्तौ" शक्नोति **शकलम्**, "मृदि-कन्दि-" [ हैमोणादिसू० ४६५ ] इत्यादिना अल प्रत्यय । ध्यायते पशुभिर्ध्या**मम्**, "विलि-भिलि-" [ हैमोणादिसू० ३४० ] इति किन्म, धूसरवर्णे वा । पूयते पुनाति वा **पुद्गलम्**, "मुरलोरल-" [ हैमोणादिसू० ४७४] इति अले निपात्यते । आह च—

कत्तृणं शकलं भूरि पूतीकं रौहिषं मतम् ।
ध्यामकं श्यामकं पौरं पुद्गलं देवजग्धकम् ॥
[ धन्व० वर्ग १ श्लो० ८० ] इति ।

एतस्य लोके 'रोहीस' इति प्रसिद्धि. ॥३६९॥

**[2]भूस्तृणे रौहिषं छत्रोऽतिच्छत्रश्च कुटुम्बकः ।**
**पूतीकं भूरि पालघ्नं मालातृण-सुगन्धिके ॥३७०॥**

भुवस्तृणः **भूस्तृणः**, पारस्करादित्वात् सुट्; भूरव्ययं वा, तत्र । रोहति **रौहिषम्** । छत्राकारस्तृणविशेषश्छत्रः । अतिक्रान्तश्छत्र**मतिच्छत्रः** । **छत्रातिच्छत्रमि-**

---

१ रौहिषं कामकं पौर भूतिक भूतिकतृणम् । स्तोगन्धिक धिकं देवजाघ शकलिपुद्गके ॥ नि० ॥ २ भूस्तृणं रोहित छत्रातिच्छत्रक-कटुम्बके । भूतीक भूतिकतृण माला॰ नि० ॥

त्येके। "कुटत् कौटिल्ये" कुटति कुटुम्ब., "कुटचुन्दि-चुरि-" [ हैमोणादिसू० ३२६] इत्यादिना किदुम्बः प्रत्यय', स्वार्थिके के कुटुम्बकः । पुनाति पूयते वा पूतीकम् , "सृणीका-ऽस्तीक-" [ हैमोणादिसू० ५० ] इतीके निपात्यते । भवति भूरि, "भू-सू-कुशि-"[ हैमोणादिसू० ६९३ ] इति किद् रिः । "पारुष्यात् पालं हन्ति पालघ्नम् " इति क्षीरस्वामी । मालारूपाणि तृणान्यस्य मालातृणम् । शोभनो गन्धोऽस्त्यस्य सुगन्धि, के सुगन्धिकम् । आह च—

भूस्तृणो गैहिषो भूरि' पूतीकोऽथ कुटुम्बकः ।
मालातृणश्च पालघ्नं छत्रकश्छत्रसंज्ञकः ॥
[ धन्व० वर्ग ४ श्लो० ४७ ] इति ।

एतस्य लोके 'गन्धतृण' इति प्रसिद्धि' ॥३७०॥

**दर्भे दभ्रः खरो बर्हिर्वीरः सूची कुथः कुशः ।**
**सीरी वानीरजो गुन्द्रः पवित्र-कुतुकावपि ॥३७१॥**

दृणाति पारुष्याद् दर्भः, "गृ-दृ-रमि-" [ हैमोणादिसू० ३२७ ] इति भ', दम्यतेऽसाविति वा, तत्र । पृषोदरादित्वाद् दभ्रः, "खुर-क्षुर-" [ हैमोणादिसू० ३९६ ] इति रे निपातनाद्वा । खरः परुषत्वात् । "बृहु शब्दे च" बृंहति बर्हिः, पुं-क्लीब-लिङ्ग', "बंहि-बृहेर्नलुक् च" [ हैमोणादिसू० ९९० ] इति इस् । विशेषेण ईरयति वीरः । सूचीव सूची, अग्रे तैक्ष्ण्यात् । "कुन्थश् संक्लेशे" कुथ्नाति कुथः, "नाम्युपान्त्य-" [ सिद्ध० ५ १.५४ ] इति क' । कौ शेते कुशः, "क्वचित्" [ सिद्ध० ५.१.१७१ ] इति ड', पुं-क्लीबलिङ्ग' । सीरोऽस्त्यस्य सीरी, हलाकाराग्रत्वात् । वानीरे जातो वानीरजः, "क्वचित्" [ सिद्ध० ५.१.१७१ ] इति डः । गुणैर्दोषा द्रान्ति अस्मिन् गुन्द्रः, पृषोदरादित्वात् । पूयतेऽनेन पवित्रम् , "ऋषि-नाम्नोः करणे" [ सिद्ध० ५ २ ८६ ] इतीत्र' । कु'—भूमिस्तुद्यतेऽनेन कुतुकः , कुत्सितं तन्यते वा, 'निष्क-तुरुष्क-" [ हैमोणादिसू० २६] इति के निपात्यते । आह च—

मृदुदर्भः कुशो बर्हि' सूची वीरस्तु पत्रक ।
खरोऽन्यः पृथुल. सीरी गुन्द्राह्वो नीरजो निशि' ॥
[ धन्व० वर्ग ४ श्लो० १३३ ] इति ।

एतस्य लोके 'डाभ' इति प्रसिद्धि' ॥३७१॥

**काशो स्यादिक्षुगन्धेक्षुकाण्डे-ह्यामलपुष्पकाः[2] ।**
**वायसेक्षुः पोटगलः कासेक्षुः कोकिलाक्षकः[3] ॥३७२॥**

---

१ बर्हिर्वीरास्तथीकुथः कुशः । सारीवानी रजो गुन्द्रा पवित्रा कुतसावपि ॥ मि० ॥
२ ०ण्डश्चामरपुष्पकः मि० ॥ ३ ०किला क्षकः मि० ॥

"काशृङ् दीप्तौ" काशते **काशः**, पुं-क्लीबलिङ्गः [ तत्र ] । इक्षोरिव गन्धोऽस्य **इक्षुगन्धः** । इक्षोरिव काण्डोऽस्य **इक्षुकाण्डः** । श्यामलं पुष्पमस्य श्यामलपुष्पः, के **श्यामलपुष्पकः** । वायस इव इक्षुः **वायसेक्षुः** । पोटेन—संश्लेषेण गलति **पोटगलः** । काशश्चासौ इक्षुश्च **कासेक्षुः** । कोकिलस्येव अक्षि अस्य कोकिलाक्षः, के **कोकिलाक्षकः** । आह च—

काशः काण्डेक्षुरुद्दिष्ट काकेक्षुर्वायसेक्षुकः ।
इक्ष्वारक इक्षुकाण्ड स चैवेक्षुरक स्मृतः ॥
[ धन्व० वर्ग ४ श्लो० १३० ] इति ।

एतस्य लोके 'कासु' इति प्रसिद्धि ॥३७२॥

[1]**उलपे बल्वजा वालः केशी दृढलताऽपि च ।**

वलति **उलपः**, "विशिष्टपोलप-" [ हैमोणादिसू० ३०७ ] इत्यपे निपात्यते, तत्र । वलन्ति **बल्वजाः**, पुंसि बहुवचनान्त, "बलेर्वोऽन्तश्च वा" [ हैमोणादिसू० १३३ ] इत्यजः । वलति **वालः**, "वा ज्वलादि-" [ सिद्ध० ५ १ ६२ ] इति णः । केशाः सन्त्यस्य **केशी** । दृढा लता **दृढलता** ।

[2]**इक्षौ रसालो गण्डीरी गण्डकी [3]खड्गपत्रकः ॥३७३॥**

"इषत् इच्छायाम्" इष्यते **इक्षुः**, पुंलिङ्गः, "मस्जीष्यशिभ्यः सुक्" [ हैमोणादिसू० ८२६ ] इति कित् सुप्रत्यय, तत्र । रसमलति आलाति वा **रसालः** । गण्डीन् ईरयति **गण्डीरी** । गण्डका सन्त्यस्य **गण्डकी** । खड्गाकाराणि पत्राण्यस्य खड्गपत्रः, के [4]**खड्गपत्रकः** ।

एतस्य लोके 'गांडउ' 'सेलडी' इति वा प्रसिद्धि ॥३७३॥

**तस्यैकादश भेदाः स्युः पुण्ड्र-कान्तारकादयः ।**

'तस्य' इक्षोः 'भेदाः' जातय एकादश । पुणति पुण्ड्यते वा **पुण्ड्रः**, "खुर-क्षुर-" [ हैमोणादिसू० ३९६ ] इति रे निपात्यते । काम्यते कान्तारः, "द्वार-शृङ्गार-" [ हैमोणादिसू० ४११ ] इत्यारे निपात्यते, [ के [5]**कान्तारकः** ] । आदिशब्दात् कोषकाराद्याः । यदुवाच **वाचस्पतिः**—

१ उलपबल्वजो बालकेशी नि० ॥ २ ईक्षू रसालो नि० ॥ ३ क्षुद्रपत्रक नि ॥ ४ "अथेक्षुः स्याद् रसालोऽसिपत्रक' [ अभि० का ४ श्लो० २६० ] इत्यत्र 'असिपत्रक' इति नामापि दृश्यते ॥ ५ "काम्यते कान्तारः, कान्त ऊषमियर्तीति वा, कान्ता आरा—भागा अस्येति वा ।" इत्यभिधानचिन्तामणिस्वोपज्ञटीकायाम् ॥

पुण्ड्रेक्षौ पुण्ड्रकः सेव्यः पौण्ड्रकोऽतिरसो मधुः ।
[1]श्वेतकाण्डो भीरुकस्तु हरितो मधुरो महान् ॥

शून्येश्वरस्तु कान्तारः कोषकारस्तु वंशकः ।
शतपोरस्त्वीषत्क्षारः पीतच्छायोऽथ तापसः ॥

सितनीलोऽथ नेपालो वंशप्रायो महाजल' ।
अन्वर्थस्तु दीर्घपत्रो दीर्घपर्वा कषायवान् ॥

काष्ठेक्षुस्तु स्वल्पकाण्डो घनग्रन्थिर्वनोद्भवः ।
नीलघोरस्तु सुरसो नील-पीतलराजिवान् ॥

अनूपसम्भव प्राय' [2]खर्वटी त्विक्षुवालिका ।
करङ्कशालि' शाकेक्षु. सूचिपत्रो [3]गुडेक्षुक. ॥

[　　　　　　] इति ।

**नले नडः शून्यमध्यो [4]धमनो नर्तको नटः ॥३७४॥**
**[5]आरण्यनलको रन्ध्री पोटगलो बिभीषणः ।**

नलति - अर्दयति **नलः**, तत्र, ड-लयोरैक्ये **नडः**, पुं-क्लीबलिङ्गौ । शून्यो मध्ये **शून्यमध्यः** । धमि' सौत्र., धमत्यन्त'शुषिरत्वाद् **धमनः** । नृत्यतीव **नर्तकः**, णक. । नटति **नटः** ॥३७४॥

आरण्यश्चासौ नलकश्च **आरण्यनलकः** । रन्ध्रमस्त्यस्य **रन्ध्री** । पोटेन—संश्लेषेण गलति **पोटगलः** । भीषि, बिभीषयते **बिभीषणः**, "नन्द्यादिभ्योऽन" [ सिद्ध० ५.१.५२ ] इत्यनः । आह च—

नलो नडो नटश्चैव स च पोटगल. स्मृतः ।
धमनो नर्तको रन्ध्री शून्यमध्यो बिभीषणः ॥

[धन्व० वर्ग ४ श्लो० १४१ ] इति ।

एतस्य लोके 'नलु' इति प्रसिद्धिः ।

१ 'हस्वकाण्डो' इति अभिधानचिन्तामणिस्वोपज्ञटीकायां वाचस्पत्युद्धरणे पत्र ४८२ ॥ २ "खर्वटी" इति अभि॰स्वोपज्ञटीकायां वाचस्पत्युद्धरणे पत्र ४८२ ॥ ३ "गुडेक्षव" इति अभिधान॰स्वोपज्ञटीकायां वाचस्पत्युद्धरणे पत्र ४८२ ॥ ४ ध्मनो मि० ॥ ५ अरण्य° मि० ॥

**[1]नली तु ग्रामनलिका नाकुली लेख[2]काविता ॥३७५॥**

गौरादित्वाद् ङ्यां **नली**। 'तु' पुनरर्थे। ग्रामस्य नलिका **ग्रामनलिका**। नकुलानामियं **नाकुली**, "तस्येदम्" [ सिद्ध० ६.३.१६० ] इत्यण्; न आकुलयति वा, नखादित्वान्नञोऽदभाव। लेखकैरविता—रक्षिता **लेखकाविता** ॥३७५॥

**शरे तु मुञ्जो बाणाख्यः स्थूलदर्भः पितामहः।**
**[3]गुन्द्रस्तेजनको भद्रमुञ्जो याजन[4]कः क्षुरः ॥३७६॥**

शृणाति पारुष्यात् **शरः**, अच्, तत्र। मुञ्जति—शब्दायते वायुना **मुञ्जः**। बाणस्य आख्या अस्य **बाणाख्यः**। स्थूलश्चासौ दर्भश्च **स्थूलदर्भः**। **पितामहः**। गुणैर्दोषा द्रान्त्यस्मिन् **गुन्द्रः**, पृषोदरादित्वात्। "गुन्द्रो दर्भविशेषे रूढः" इति **क्षीरस्वामी**। यदाहु--

दर्भाणां स्थाने शरैः प्रस्तरितव्यम्।

**यदमरश्च**—

गुन्द्रस्तेजनकः शरः [ का० २ वर्ग ४ श्लो० १६२ ] इति।

तेजयति—शिनोति तेजनं, स्वार्थिके के **तेजनकः**। भद्रश्चासौ मुञ्जश्च **भद्रमुञ्जः**। **याजनको** यज्ञियत्वात्। क्षुरति **क्षुरः**। आह च—

शरो बाणः इक्षुकाण्डः इक्ष्वटः सायकः क्षुरः।
स्थूलोऽन्यः इक्षुरः प्रोक्तः इक्ष्वारश्च पितामहः॥
[ धन्व० वर्ग ४ श्लो० १३५ ] इति।

एतस्य लोके 'शरकड' इति प्रसिद्धिः ॥३७६॥

**मुञ्जस्तु यज्ञियो मेध्यो दृढत्वग् ब्रह्ममेखलः।**

'तुः' पुनरर्थे। यज्ञाय हितो यज्ञियो मुञ्जो **मेध्यः**, पवित्रत्वात्। दृढा त्वगस्य **दृढत्वक्**। ब्रह्मणो मेखलेव **ब्रह्ममेखलः**।

**अथ बालतृणे शष्पं शुकं शालिकमङ्कुलम् ॥३७७॥**

बालं—नवं तृणं **बालतृणम्**, तत्र। "शष हिंसायाम्" शष्यते **शष्पम्**, "शद्लृ शातने" शीयते वा **शष्पम्**, "शदि-बाधि-षनि-हन. ष् च" [ हैमोणा-

[1] °नलिनुर्ग्राम नि० ॥ [2] लेखकाञ्चिता नि० ॥ [3] गुञ्जस्तजनको नि० ॥ [4] °नकः क्षुरः नि० ॥

दिसू० २९९ ] इति पः प्रत्ययः षश्चान्तादेशः, पुं-क्लीबलिङ्गः । "शुक गतौ" शोकति **शुक्रम्**, "नाम्युपान्त्य-" [ सिद्ध० ५.१.५४ ] इति कः; शवति वा, "विचि-पुषि-" [ हैमोणादिसू० २२ ] इति कित् कः । **शालिकम्** । "अगु गतौ" अङ्गति **अङ्गुलम्** , "ऋषि-वृषि-" [ हैमोणादिसू० ३३१ ] इति बहुवचनादुल. ॥३७७॥

**तृणे स्यादर्जुनं**

तरत्यम्भसि **तृणम्**, तृ॑द्यते—अद्यते पशुभिरिति वा, पुं-क्लीबलिङ्गः, "भ्रूण-तृण-" [ हैमोणादिसू० १८६ ] इति णे निपात्यते, तत्र । अर्ज्यते **अर्जुनम्**, "यम्यजि-शक्यर्जि-" [ हैमोणादिसू० १८६ ] इत्युनः । 'सर्वं च तृणमर्जुनम्" इति **भागुरिः** ।

**घासे यवसं चारिरित्यपि ।** 1

घस्यते—अद्यते पशुभिर्**घासः**, घञ् प्रत्ययः, तत्र । यूयते **यवसम्**, "वहि-युभ्यां वा" [ हैमोणादिसू० ५७१ ] इति असः. क्लीबलिङ्गोऽयम् । **वाचस्पतिस्तु** —"अथाऽस्त्री यवसो घासः" इति पुंस्यप्याह । "चर भक्षणे च" चर्यते पशुभिरिति **चारिः**, "कृ-शॄ-कुटि-ग्रहि-खन्यणि-" [ हैमोणादिसू० ६१९ ] इत्यादिना णिदिः । 1

**दूर्वायां तु शतपर्वा भार्गवी विजया जया ॥३७८॥**
**मङ्गल्या शाद्वलाऽनन्ताऽमरी प्रतानिका रुहा ।**

दूर्व्यते—हिंस्यते पशुभिरिति **दूर्वा**; दूरे वाति वा, पृषोदरादित्वात् साधुः, तस्याम् । शतं बहूनि—पर्वाण्यस्या **शतपर्वा** । भृगोरियं **भार्गवी**, "तस्येदम्" [ सिद्ध० ६.३.१६० ] इत्यण् । विजयते **विजया** । जयति **जया** ॥३७८॥ 2

मङ्गले साधुः **मङ्गल्या**, "तत्र साधौ" [ सिद्ध० ७.१.१५ ] इति यः । शादा. सन्त्यस्याः **शाद्वला**, "नड-शादाद् वलः" [ सिद्ध० ६. २. ७५ ] इति वलः । नास्ति अन्तोऽस्या **अनन्ता**, दूरप्रसरणात् । न म्रियते **अमरी** । प्रतानोऽस्त्यस्याः **प्रतानिका** । रोहति मूले **रुहा**, "नाम्युपान्त्य-" [ सिद्ध० ५.१.५४ ] इति कः । आह च— 2

नीली दूर्वा स्मृता शस्या शाद्वलं हरितं तथा ।

---

१ तृण्यते—अद्यते पशुभिरिति वा" इति अभिधानचिन्तामणिस्वोपज्ञटीकायाम् ॥

शतपर्वा शीतवीर्या शीतवल्ल्यसिता लता ॥
[ धन्व० वर्ग ४ श्लो० १४३ ] इति ।

एतस्या लोके 'द्रोअ' इति प्रसिद्धिः । नीलीयम् ।

**[सहस्रवीर्या श्यामाङ्गी हरिता हरितात्यपि] ॥३७९॥**
**श्वेतदूर्वा तु गोलोमी शीतवीर्या सिता लता ।**

[ सहस्रं वीर्याणि अस्याः **सहस्रवीर्या** । श्याममङ्गं अस्याः **श्यामाङ्गी** । **हरिता** नीलवर्णत्वात् । हरितां नीलत्वमलति **हरिताली** ॥३७९॥ ]

श्वेता दूर्वा **श्वेतदूर्वा** । 'तु' पुनरर्थे । गोरिव लोमान्यस्या **गोलोमी** । शीतं वीर्यमस्याः **शीतवीर्या** । **सिता** शुक्ला । लाति लायते वा **लता**. "पृषि-रञ्जि-" [ हैमोणादिसू० २०८ ] इति किदत । आह च—

श्वेतदूर्वा तु गोलोमी श्वेतदण्डी सिता लता ।
सहस्रवीर्याऽनन्ता च दुर्मरा भार्गवी रुहा ॥
[ धन्व० वर्ग ४ श्लो० १४४ ] इति ।

एतस्या लोके 'श्वेतदूर्वा' इति प्रसिद्धि ।

**गण्डदूर्वायां गण्डाली वारुणी शकुलाक्षकः ॥३८०॥**

श्वेतदूर्वाविशेषोऽयम् । गण्डै –ग्रन्थिभिरल्यते **गण्डाली** । [ . . . . . . . . . . . . . . **वारुणी** । ] शकुलस्येव अक्षि अस्य शकुलाक्ष, मत्स्याक्षितुल्य-ग्रन्थिः, स्वार्थिके के **शकुलाक्षकः** । आह च-

गण्डदूर्वा तु गण्डाली तीव्रा मत्स्याक्षिकाऽपि च ।
वल्ली नाडी कलायश्च धारणी शकुलाक्षिका ॥
[ धन्व० वर्ग ४ श्लो० १४५ ] इति ॥३८०॥

**मुस्तायां मुस्तको भद्रमुस्ता राजकशेरुकः ।**
**मुस्तो वराहो गाङ्गेयः कुरुविन्दोऽम्बुदाह्वया ॥३८१॥**

मुस्यति–खण्डयति रोगान् **मुस्ता**, त्रिलिङ्गः, "शी-री-" [हैमोणादिसू० २०१ ] इति कित् त', तत्र । मुस्त एव **मुस्तकः** । भद्रा चासौ मुस्ता च **भद्रमुस्ता** ।

१ श्लो० ३७९ श्लोकस्योत्तरार्धं तद्व्याख्या चापि टीकादर्शे नास्ति ॥ २ शतवीर्या नि० ॥ ३ °या भद्रको भद्र° नि० ॥ ४ °रुक । गुन्द्री वरोह्रो नि० ॥

राजा चासौ कशेरुश्च राजकशेरुः, स्वार्थिके के **राजकशेरुकः** । **मुस्तः** पुंसि । म्रियते वृणोति वा **वराहः**, "वृ-कटि-शमिभ्य आहः" [ हैमोणादिसू० ५९१ ] इत्याहः । गङ्गाया अपत्यमिव **गाङ्गेयः**, शुभ्रादित्वादेयण् । क्लीबेऽप्यन्ये । **कुरून्** देशं विन्दति **कुरुविन्दः** । अम्बुदस्याऽऽह्वयोऽस्या **अम्बुदाह्वया** । आह च—

मुस्तमम्बुधरो मेघो घनो राजकशेरुकः ।
भद्रमुस्तो वराहोऽब्दो(ऽब्दो) गाङ्गेयः कुरुविन्दकः ॥

[ धन्व० वर्ग १ श्लो० ४० ] इति ।

एतस्या लोके 'मोथ' इति प्रसिद्धिः ॥३८१॥

**कुटन्नटे तु कैवर्तीमुस्तकं जीविताह्वयम् ।**
**काण्डीरकं जीर्णबुध्नं गोनर्दं गोपुरं[1] प्लवम् ॥३८२॥**

**शतपुष्पं दाशपुरं[2] वानेयं परिपेलवम् ।**
**जलमुस्ता मुस्तकाभं शेवालदलसम्भवम् ॥३८३॥**

कुटन्—वक्रीभवन् नटति—स्पन्दते **कुटन्नटः**, तत्र । 'तुः' अत्र विशेषार्थेऽव्ययम् । कैवर्त्या मुस्तकं **कैवर्तीमुस्तकम्** । जीवितस्य आह्वयोऽस्य **जीविताह्वयम्** । काण्डीमीरयति **काण्डीरकम्** । जीर्णं बुध्नमस्य **जीर्णबुध्नम्** । गवि नर्दतीव **गोनर्दम्** । अत एव गा पिपर्ति **गोपुरम्**, गुप्यते वा, "श्वशुर-" [ हैमोणादिसू० ४२६ ] इत्युरे निपात्यते । प्लवते लघुत्वात् **प्लवम्**, अच् ॥३८२॥

शतं—बहूनि पुष्पाण्यस्य **शतपुष्पम्** । दशपुरे भवं **दाशपुरम्**; दाशान् पिपर्ति वा, "श्वशुर-" [ हैमोणादिसू० ४२६ ] इत्युरे साधुः । वने भवं **वानेयम्**, "भवे" [ सिद्ध०६.३.१२३ ] इत्येयण् । "पेलृ गतौ" परि—सामस्त्येन पेलति **परिपेलवम्**, "वडि-वटि-पेल-चणि-पणि-पल्लि-वल्लेरवः" [ हैमोणादिसू० ५१५] इत्यवः । जलस्य मुस्ता **जलमुस्ता** । मुस्तकस्य आभाऽस्य **मुस्तकाभम्** । शेवालदले सम्भवति **शेवालदलसम्भवम्** । आह च —

परिपेलं प्लवं वन्यं गोपुरं स्यात् कुटन्नटम् ।
शतपुष्पं दाशपुरं गोनर्दं जीर्णबुध्नकम् ॥

[ धन्व० वर्ग ३ श्लो० ५५ ] इति ।

---

१ गोपुरप्लवम् मि० ॥ २ दारपुरं मि० ॥

एतस्य लोके 'काकरहूले' इति प्रसिद्धिः ॥३८३॥

**वीरणे तु वीरतरं वीरभद्रं सुमूलकम् ।**

वीरयते **वीरणम्** , अनट्, तत्र । अतिशयेन वीरं **वीरतरम्** । वीरं च तद् भद्रं च **वीरभद्रम्** । शोभनं मूलमस्य सुमूलम् , के **सुमूलकम्** ।

**मूलेऽस्योशीरमभयं समगन्धि रणप्रियम् ॥३८४॥**

'अस्य' वीरणस्य मूले । उश्यते--काम्यते इति **उशीरम्** , "घसि-वशि-" [ हैमोणादिसू० ४१९] इति किदीरः, [पुं-क्लीबलिङ्ग] । नास्ति भयमस्मादभयम्, रोगहृत्त्वात् । समो गन्धोऽस्त्यस्य **समगन्धि** । रणस्य प्रियं **रणप्रियम्** ; रणः प्रियोऽस्येति वा । आह च सामान्येन **धन्वन्तरिः**—

उशीरं च मृणालं स्यादभयं समगन्धिकम् ।
रणप्रियं वीरतरं वीरं वीरणमूलकम् ॥
[ धन्व० वर्ग ३ श्लो० १४ ] इति ।

**अमरस्तु** पृथगाह —

स्याद् वीरणं वीरतरं मूलेऽस्योशीरमस्त्रियाम् ।
अभयम् [का० २ वर्ग ४ श्लो० १६४] इति ।

एतस्य लोके 'उसीर' इति प्रसिद्धिः ॥३८४॥

**लामज्जके तु नलदममृणालं लयं लघु ।**
**इष्टकापथकं शीघ्रं दीर्घमूलं जलाशयम् ॥३८५॥**

॥ इत्याचार्यश्रीहेमचन्द्रविरचिते निघण्टुशेषे
पञ्चमस्तृणकाण्डः ॥५॥

लाति दोषान् ला, मज्जा--सारोऽस्य **लामज्जकम्** , तत्र । नलं द्यति **नलदम्** , अपारुष्यात्; नलति वा । अत एव **अमृणालम्**--अहिंस्रम् । लीयते **लयम्** । "**लघु** गुणेन" इति **क्षीरस्वामी**; "लङ्घते लघु" इत्यपरे, "रङ्घि-लङ्घि-" [ हैमोणादिसू० ७४० ] इत्यादिना उः प्रत्ययः नकारस्य च लोपः । इष्टं कापथमस्य, अधोवातकृत्त्वादिति इष्टकापथम्, स्वार्थिके के **इष्टकापथकम्** । **शीघ्रं** लघुत्वात् । दीर्घं मूलमस्य **दीर्घमूलम्** । जले आशेते **जलाशयम्** ; शीतवीर्यत्वाद्वा । आह च—

१ लवं नि० ॥

लामज्जकं सुनालं स्यादमृणालं लयं लघु ।
इष्टकापथकं शीतवीर्यं मूलं जलाशयम् ॥
[ धन्व० वर्ग ३ श्लो० ८६ ] इति ।

अमरोऽप्याह—

नलदं सेव्यममृणालं जलाशयम् ॥
लामज्जकं लघु लयमवदाहेष्टकापथे ।
[ का० २ वर्ग ४ श्लो० १६४–६५ ] इति ।

एतस्य लोके 'लावंजउ' इति प्रसिद्धिः ॥३८५॥

इति श्रीमद्बृहत्खरतरगच्छे श्रीजिनराजसूरिशिष्यश्रीजयसागर-
महोपाध्यायपट्टानुक्रमायातवाचनाचार्यधुर्यश्रीभानुमेरुगणि-
शिष्यसमस्तमस्तग्रन्थावलीविचक्षणश्रीज्ञानविम-
लोपाध्यायशिष्यवाचनाचार्यश्रीश्रीवल्लभ-
गणिविरचितायां श्रीहेमचन्द्राचार्य-
कृतनिघण्टुशेषटीकायां तृण-
काण्डः पञ्चमः
समाप्तः॥५॥

*

# ६

## [ षष्ठो धान्यकाण्डः ]

अथावसरागतं धान्यकाण्डं षष्ठं विव्रियते—

**अथ धान्ये सस्यं सीत्यं व्रीहि-स्तम्बकरी अपि ।**

धन्यते **धान्यम्**, ध्यण्, "डुधाग्क् धारणे" धीयते वा धान्यम्, "धाग्-राजि-शृ-रमि-" [ हैमोणादिसू० ३७९ ] इत्यादिना अन्य. व्रीह्यादि । यदाहुः—

व्रीहिर्यवो मसूरो गोधूमो मुद्ग-माष-तिल-चणका· ।
अणव· प्रियङ्गु-कोद्रव-मयुष्टका शालिराढक्य· ॥
[1]द्वौ च कुलाय-कुलथौ शणसप्तदशानि धान्यानि ।
[ ] इति ।

"षसक् स्वप्ने" सस्यते सुखमनेन **सस्यम्**, "स्था-छा मा-" [ हैमोणादिसू० ३५७ ] इति य· । सीतया सङ्गत **सीत्यम्**, "सीतया सङ्गते" [ सिद्ध० ७ १.२७ ] इति यः । व्रीयते—याच्यते **व्रीहिः** । "व्रीणाति **व्रीहिः**" इति **क्षीरस्वामी**, "व्रियो हिक्" [ हैमोणादिसू० ७१० ] इति किद् हि । स्तम्बं करोति **स्तम्बकरिः**, पुंल्लिङ्गाविमौ, "शकृत्स्तम्बाद् वत्स-व्रीहौ कृग" [ सिद्ध० ५.१ १०० ] इति इ· ।

**आशौ स्यात् पाटलो व्रीहिः**

अश्नुते अश्यते वा **आशुः**, [ पुंल्लिङ्ग· ], "कृ-वा-पा-जि-" [ हैमोणादिसू० १ ] इत्युण्, शीघ्रपाकत्वाद्वा । यद् **दुर्गः**—

आश्वाख्या शालि-शीघ्रयो [ ] इति ।

पाटलच्छाय **पाटलः**, पाटयति वा **पाटलः**, 'मृदि कन्दि-" [ हैमोणादिसू० ४६५ ] इत्यल· । "व्री भरणे" व्रीणाति **व्रीहिः**—षष्टिकादिधान्यविशेष· । यदाह—

आशुर्व्रीहिः पाटल स्यात् [ ] इति ।

**गर्भपाकिनि षष्टिकः ॥ ३८६॥**

---

१ किंच कुलाय॰ अभिधानचिन्तामणिस्वोपज्ञटीकायां उद्धरणे ॥

गर्भे पच्यते स्वयमेवेत्येवंशीलो **गर्भपाकी**, णिनि प्रत्यये न्यङ्क्वादित्वात् साधुः, तत्र । षष्टिरात्रेण पच्यते **षष्टिकः**, "यव-यवक-षष्टिकाद् यः" [सिद्ध० ७.१.८१] इत्यत्र षष्टिकेति निर्देशात् साधुः । आह च—

षष्टिकः कङ्गुकः पीत-प्रमोदक-मुकुन्दकाः ।
[ ] इति ॥३८६॥

**शालौ तु कलमाद्याः स्युः**

शलति **शालिः**, पुंल्लिङ्गः, "कमि-वमि-" [हैमोणादिसू० ६१८] इति णिदिः । कलमः आद्यो येषां ते **कलमाद्याः** ।

**कलमे तु कलामकः ।**

कडति—माद्यति अनेन **कडमः**, लत्वे **कलमः**, "सृ-पृ-प्रथि-" [हैमोणादिसू० ३४७] इत्यमः, तत्र । कलां—कलनाममति **कलामकः** ।

**लोहिते रक्तशालिः स्यात्**

**लोहितो** वर्णेन । रक्तश्चासौ शालिश्च **रक्तशालिः** ।

**महाशालौ सुगन्धिकः ॥ ३८७॥**

महांश्चासौ शालिश्च **महाशालिः**, तत्र । शोभनो गन्धोऽस्य सुगन्धिः, "सु-पूत्युत्सुरभेः-" [सिद्ध ७.३.१४४] इति इत् समासान्तः, स्वार्थिके के **सुगन्धिकः** । एते सर्वेऽपि शालिविशेषाः । आह च—

रक्तशालिर्लोहितः स्याद् गरुडः शकुनाहृतः ।
पुण्डरीको महाशालिः कलमस्तु कलामकः ॥

रक्तशालिर्दीर्घशूकः पुण्ड्रो महिषमस्तकः ।
पूर्णचन्द्रो महाशालिः पुण्डरीको प्रमोदनः ॥

पुष्पाण्डकः शीतभीरुः काञ्चनः शकुनाहृतः ।
पाण्डुगौरः शारिवाख्यो रोध्रपुष्पः सुगन्धिकः ॥

हायनो दीर्घनालश्च
[ ] इति ॥३८७॥

**यवे हयप्रियस्तीक्ष्णशूकः**

"युक् मिश्रणे" यूयते **यवः**, "युवर्ण-" [सिद्ध० ५.३.२८] इत्यल्, तत्र । हयानां प्रियो **हयप्रियः** । तीक्ष्णं शूकः-किशारुरस्य **तीक्ष्णशूकः** । आह च—

यवे च तीक्ष्णशूको निःशूकोऽतियवोऽपरः ।
[ ] इति ।

एतस्य लोके 'यव' इति प्रसिद्धिः ।

**तोक्मस्त्वसौ हरित् ।**

'असौ' यवः 'हरिद्' नील उच्यते **तोक्मः**, "रुक्म-ग्रीष्म-" [हैमोणादिसू० ३४६] इति मे निपात्यते ।

**मङ्गल्यके मसूरः स्यात्**

मङ्गले साधुर्मङ्गल्यः, "तत्र साधौ" [सिद्ध० ७.१.१५] इति यः, स्वार्थिके के **मङ्गल्यकः**, तत्र । मस्यति- परिणमते **मसूरः**, पुं-स्त्रीलिङ्गः, "मी-मसि-" [हैमोणादिसू० ४२७] इत्यूरः । आह च—

मसूरिका मसूरी स्यान्मङ्गल्या पाण्डुराऽपरा ।
[ ] इति ।

एतस्य लोके 'मसूर' इति प्रसिद्धिः ।

**कलाये तु सतीनकः ॥३८८॥**

**हरेणुः खण्डिकश्च**

"कलि शब्द-सङ्ख्यानयोः" कल्यते **कलायः**, "कुलि-लुलि-कलि-कषिभ्यः कायः" [हैमोणादिसू० ३७२] इति किदायः, कलम्-अतीसारमयते वा, कं लातीति वा, तत्र । सीदन्त्यनेन सतीनः, "दिन-नग्न-" [हैमोणादिसू० २६८] इति ने निपात्यते, स्वार्थिके के **सतीनकः** । **सतीनो**ऽपि ॥३८८॥

ह्रियते **हरेणुः**, पुंल्लिङ्गः, "कृ-हृ-भृ-" [हैमोणादिसू० ७७२] इत्येणुः । खण्ड्यते **खण्डिकः**, "कुशिक-" [हैमोणादिसू० ४५] इतीके निपात्यते । आह च—

कलायः खण्डिकः प्रोक्तस्त्रिपुटः क्षुद्रखण्डिकः ।
[ ] इति ।

---

१ यस्ताक्ष्यंशुकस्तोक्मयस्तुसो हरित् नि० ॥ २ °के स्यान्मसूर नि० ॥

एतस्य लोके 'कलायरा' इति प्रसिद्धिः ।

**अथ चणके हरिमन्थकः ।**

"चण शब्दे" चणति दल्यमानः चणकः, 'दृ-कृ-नृ-" [ हैमोणादिसू० २७ ] इत्यकः, तत्र । हरिभिर्मथ्यते **हरिमन्थकः** । आह च—

चणको हरिमन्थः स्याद् वाजिमन्थोऽश्वजीवकः ।
[ ] इति ।

एतस्य लोके 'चिणा' इति प्रसिद्धिः ।

**माषे तु मदनो नन्दी वृष्यो बीजवरो बली ॥३८९॥**

मीयते **माषः**, पुंक्लीबलिङ्गः, "वृ-कृ-तृ-मीङ्-माभ्यः षः" [ हैमोणादिसू० ५४० ] इति षः, तत्र । मदयति वृष्यत्वाद् **मदनः** । नन्दयत्यवश्यं **नन्दी** । वृषाय— मैथुनाय हितो **वृष्यः**, "प्राण्यङ्ग-रथ-" [ सिद्ध० ७ १.३७ ] इति यः, वृष्यते तैलादिनेति "कृ-वृषि-" [ सिद्ध० ५.१.४२ ] इति क्यप् वा । बीजेषु वरो **बीजवरः**; बीजं—शुक्रं वृणोति वा । बल–रेतोऽस्त्यत्र **बली** । एतस्य लोके "उडद' इति प्रसिद्धिः ॥३८९॥

**मुद्गे तु प्रथनो लोभ्यो बलाटो हरितो हरिः ।**

मोदते अनेन **मुद्गः**, "पू-मुदिभ्यां कित्" [ हैमोणादिसू० ९३ ] इति किद् गः, तत्र । प्रथते **प्रथनः** । "लुभच् गार्ध्ये" गार्ध्यम्—अभिकाङ्क्षा, लुभ्यते **लोभ्यः** । बलमटति **बलाटः** । **हरितः**—नील । **हरिः** हरिद्वर्णत्वात्, पुंल्लिङ्गः । एतस्य लोके 'मुंग' इति प्रसिद्धिः ।

**पीतेऽस्मिन् वसु-खण्डीर-प्रवेल-जय-शारदाः ॥३९०॥**

'अस्मिन्' मुद्गे पीतवर्णे वसति चिन्ने **वसुः**, पुंल्लिङ्गः, "भृ-मृ-तृ-त्सरि-" [ हैमोणादिसू० ७१६ ] इत्युः । खण्ड्यते **खण्डीरः**, "जम्बीरा-ऽऽभीर-" [ हैमोणादिसू० ४२२ ] इतीरे निपात्यते । प्रवेलत्यनेन **प्रवेलः** । जयत्यनेन **जयः** । शरदि भवः **शारदः**, "भर्तु-सन्ध्यादेरण्" [ सिद्ध० ६.३. ८९ ] इत्यण् ॥३९०॥

**कृष्णे प्रवर-वार्सन्तौ हरिमन्थज-शिम्बिकौ ।**

---

१ °न्दी खरी बीज° मि० ॥ २ प्रथनो लोभ्यो बलाटो मि० ॥ ३ "खन्यते खण्डीरः" इति अभिधान०स्वोपज्ञटीकायाम् ॥ ४ °सन्त-हरिमन्थज-शिम्बिका. मि० ॥

कृष्णे मुद्गे प्रवियते **प्रवरः**। वसन्ते भवो **वासन्तः**, "भवे" [ सिद्ध० ६.३.१२३ ] इत्यण्। हरिमन्थाज्जायते **हरिमन्थजः**। [ शिम्बाऽस्त्यस्य **शिम्बिकः**, व्रीह्यादित्वादिकः; शिम्बिभिः कायति वा। ]

**वनमुद्गे तुवरक-निगूढक-कुलीमकाः ॥३९१॥ खण्डी च**

वनस्य मुद्गो **वनमुद्गः**, तत्र। तुवरः–कषाय, स एव **तुवरकः**। निगूहति स्म **निगूढकः**। कौ लीयते **कुलीमकः**[1], 'कीचक-पेचक-" [ हैमोणादिसू० ३३ ] इत्यकान्तो निपात्यते ॥३९१॥

खण्डमस्त्यस्य **खण्डी**। आह च—

मुद्गो वलाटो मङ्गल्यो हरितः शारदोऽपर.।
पीतः प्रचेतो वसुको माधवः प्रवरोऽसितः॥

वनमुद्गस्तुवरको राजमुद्गस्तु मण्डकः।
[ ] इति।

एते मुद्गविशेषाः।

**राजमुद्गे तु मकुष्ठक-मयुष्ठकौ।**

मुद्गानां राजा प्रधानत्वाद् **राजमुद्गः**, राजदन्तादित्वात् पूर्वनिपातः, तत्र। "मकुङ् मण्डने" मङ्क्यते अनेन मकुष्ठ., मीयतेऽसौ मयुष्ठः, "पष्टैधिठादयः" [ हैमोणादिसू० १६६ ] इति ठे निपात्येते उभौ [ स्वार्थिके के **मकुष्ठकः**, **मयुष्ठकः**]। आह च—

मकुष्ठको मयुष्ठः स्यान्निष(?ष्पा)वो वल्लकः स्मृतः।
[ ] इति।

एतस्य लोके 'मोठ' इति प्रसिद्धि.।

**गोधूमे सुमनः**

गुध्यति–परिवेष्टयति **गोधूमः**, "कुथि-गुधेरूमः" [ हैमोणादिसू० ३५३ ] इति ऊम.; गां धुनाति वा, "विलि-भिलि-" [ हैमोणादिसू० ३४० ] इत्यादिना

१ 'कुलीनकः' अभिधानचिन्तामणौ तत्स्वोपज्ञटीकायां च ॥ २ खण्डिको नि० ॥

"धूग्श् कम्पने" इत्यस्मात् किन्मः प्रत्ययः, तत्र । सुष्ठु मन्यते **सुमनः**, अच् । आह च—

गोधूमः सुमन· क्षुद्रो मधूली तु पिंगीतिका ।
नन्दीमुखोऽल्पगोधूमो लोके सा पीसिकोच्यते ॥
[ ] इति ।

एतस्य लोके 'गोहूं' इति प्रसिद्धिः ।

**वल्ले निष्पावः श्वेतशिम्बिकः ॥३९२॥**

"वलि वल्लि संवरणे" वल्लते **वल्लः**, तत्र । निष्पूयते **निष्पावः**, "निरभेः पू-ल्वः" [ सिद्ध० ५.३.२१ ] इति घञ् । श्वेता शिम्बिरस्य **श्वेतशिम्बिकः** । [2]**सितशिम्बिकोऽपि** ॥३९२॥ 1

**कुलत्थे तु कालवृन्तः**

कुले तिष्ठति **कुलत्थः**, पृषोदरादित्वात् साधुः, तत्र । कालं वृन्तमस्य [:] । आह च—

[ ] इति । 1

एतस्य लोके 'कुलथी' इति प्रसिद्धि· ।

**ताम्रवृन्ता कुलत्थिका ।**

ताम्रं वृन्तमस्याः **ताम्रवृन्ता** । ह्रस्वः कुलत्थः **कुलत्थिका** । एतस्य विशेषोऽयम् ।

**आढक्यां तुवरी वर्णा** 2

आढौकते **आढकी**, "कीचक-पेचक-" [ हैमोणादिसू० ३३ ] इत्यके निपात्यते, तस्याम् । तूयते **तुवरी**, "नी-मी-कु-तु-चेर्दीर्घश्च" [ हैमोणादिसू० ४४३ ] इति वरट् प्रत्ययः दीर्घश्च ह्रस्वस्य । वर्ण्यते **वर्णा** ।

एतस्या लोके 'तुंअरि' इति प्रसिद्धिः ।

---

१ °वः शितिशिम्बिकः नि० ॥ २ 'शितशिम्बिक.' अभिधानचिन्तामणी । "सिता शिम्बिरस्य सितशिम्बिकः" इति स्वोपज्ञवृत्ती ॥

**स्यात् [1]कुल्माषे तु यावकः ॥३९३॥**

कोलति **कुल्माषः**, "कुलेश्च माषक्" [ हैमोणादिसू० ५६३ ] इत्यनेन "कुल बन्धु-संस्त्यानयोः" इत्यस्मात् किद् माषः प्रत्ययः, तत्र । **कुल्मासो**ऽपि । यौत्यम्भसा **यावकः**, णकः, अर्द्धस्विन्नो माषादिः । "धान्यविशेषः" इत्यन्ये ॥३९३॥

**नीवारे तु वनव्रीहिः**

नियतैर्व्रियते **नीवारः**, [2]व्युत्पन्नत्वात्, "नेर्वृ" [ सिद्ध० ५.३.७४ ] इति घञ्, तत्र । वनस्य व्रीहिर्**वनव्रीहिः** । आह च—

नीवारश्चन्द्रिका बोडी मुनिव्रीहिर्मुनिप्रियः ।

[ ] इति ।

एतस्य लोके 'नीवार' इति प्रसिद्धिः ।

**श्यामाक-श्यामकौ समौ ।**

श्यायते **श्यामाकः**—जघन्यो व्रीहिः, "मवाक-श्यामाक-" [ हैमोणादिसू० ३७ ] इत्याके निपात्यते । "कीचक-पेचक-" [ हैमोणादिसू० ३३ ] इत्यके निपातनात् **श्यामकः** ।

**कङ्गौ तु कङ्गुनी कङ्गुः प्रियङ्गुः पीततण्डुला ॥३९४॥**

इत आरभ्य सर्वे कङ्गुविशेषा ज्ञेयाः । कायति **कङ्गुः**, "प्री-कै-पै-नीलेरङ्गुक्" [ हैमोणादिसू० ७६१ ] इति किदङ्गुः, तत्र । "कगे रगे लगे सङ्गे" कगति **कङ्गुनी**, "दिन नग्न-" [ हैमोणादिसू० २६८ ] इति ने निपात्यते । कुत्सितं अमति—गच्छति **कङ्गुः**, "फलि-वल्यमेर्गुः" [ हैमोणादिसू० ७५८ ] इति गुः । "प्रींग्श् तृप्ति-कान्त्योः" प्रीणाति **प्रियङ्गुः**, "प्री-कै-पै-नीलेरङ्गुक्" [ हैमोणादिसू० ७६१ ] इत्यङ्गुक् । पीतास्तण्डुला अस्याः **पीततण्डुला** । एते स्त्रीलिङ्गाः ॥३९४॥

---

१ 'कुल्मासस्तु यावकः' इति दन्त्यसकारमयः पाठोऽभिधानचिन्तामणौ । स्वोपज्ञवृत्तौ "कोलति कुल्मासः, 'कुलेश्च मासक्' [ हैमोणादिसू० ५६३ ]। कुलेन मस्यति—परिणमते वा, पृषोदरादित्वात् । कुल्माषोऽपि ।" इत्येव व्याख्यातमस्ति । एतेनोपलक्षणेनैतद् ज्ञायते यद् आचार्यस्य 'माषक्'प्रत्ययवद् 'मासक्'प्रत्ययोऽप्यभिमतोऽस्तीति ॥ २ "भुन्पन्नत्वात्" इत्यभिधानचिन्तामणिस्वोपज्ञटीकायाम् ॥

**सा कृष्णा मधुका**

'सा' कङ्गुः कृष्णवर्णा मन्यते–कल्यते **मधुका**, "कञ्चुकांशुक-" [ हैमोणादिसू० ५७ ] इत्युके निपातनात् साधुः ।

**रक्ता शोधिका**

रक्तवर्णा कङ्गुः शोधयति **शोधिका**[1] ।

**मुसटी[2] सिता ।**

'सिता' श्वेता कङ्गु मुस्यते–खण्ड्यते **मुसटी**, "कपट-" [ हैमोणादिसू० १४४ ] इत्यटे निपात्यते ।

**पीता माधवी**

पीतवर्णा कङ्गु मधुन इवेयं तद्वर्णत्वाद् **माधवी**, "तस्येदम्" [ सिद्ध० ६.३.१६० ] इत्यण् ।

**अथोद्दाले कोद्रवः कोरदूषकः ॥३९५॥**

उद्दाल्यते **उद्दालः**, तत्र । केन–अम्भसा उनत्ति–क्लिद्यते **कोद्रवः**, "कैरव-मैरव-" [ हैमोणादिसू० ५१९ ] इत्यवे निपात्यते, केन उद्रौति वा । "कुरत् शब्दे" कुरन्त्यनेन कोरदूष, "कोरदूषा ऽऽटरूष-" [ हैमोणादिसू० ५६१ ] इत्यूषे निपात्यते, कोरं– भक्तं दूषयति वा, स्वार्थे के **कोरदूषकः** ॥३९५॥

**चीनके तु काककङ्गुः**

चीयते चीन', "दिन-नग्न-" [ हैमोणादिसू० २६८ ] इति ने निपात्यते, के **चीनकः**, तत्र । काकप्रिया कङ्गु **काककङ्गुः** ।

आह च—

पीततण्डुलिका कङ्गुः प्रियङ्गु' कुक्करी मता ।
सितकङ्गुस्तु मुसली रक्तकङ्गुस्तु शोधिका ॥
चीनक काककङ्गुः स्यात् श्यामाकस्तृणबीजकः ।
रालादय. कङ्गुभेदा' कोद्रवः कोरदूषक' ॥
अन्यो द्वितीयो विख्यात उद्दालो वनकोद्रवः ।
[ ] इति ।

---

१ शोधिता न० ॥ २ मुशटी नि० ॥

**यवनाले तु योनलः ।**

**जूर्णाह्वयो देवधान्यं जोन्नोला बीजपुष्पिका ॥३९६॥**

यवस्येव नालमस्य **यवनालः**, तत्र । यूयते **योनलः**, "मुरलोरल-" [ हैमोणादिसू० ४७४ ] इत्यले निपात्यते । "जूरैचि जरायाम्" जूर्यते जूर्णा, "डीयश्व्यैदितः-" [ सिद्ध० ४.४ ६१ ] इति क्तेऽनिट्त्वम्, जूर्ण इत्याह्वयोऽस्य **जूर्णाह्वयः** । देवप्रियं धान्यं **देवधान्यम्** । जुनद् नालमस्या **जोन्नाला**, पृषोदरादित्वात् । बीजाकारं पुष्पमस्या **बीजपुष्पिका** । एतस्य लोके 'जुवारि' इति प्रसिद्धिः ॥३९६॥

**शणे भङ्गा मातुलानी स्यात्**

शणति **शणम्**, तत्र । भज्यते **भङ्गा** । मा तोल्यते **मातुलानी**, "मुसुचान-" [ हैमोणादिसू० २७८ ] इत्याने निपात्यते, मायाः—श्रियस्तुलया अनितीति वा । आह च—

शणः प्रोक्तो मातुलानी जन्तुतन्तुर्महाशणः ।
[ ] इति ।

एतस्य लोके 'सण' इति प्रसिद्धिः ।

**उमा तु क्षुमाऽतसी ।**

अव्यते **उमा**, "अवेर्ह्रस्वश्च-" [ हैमोणादिसू० ३४२ ] इति किति मे साधु । क्षौत्यनया भुक्तया **क्षुमा**, "क्षु-हिभ्यां वा" [ हैमोणादिसू० ३४१ ] इति किन्मः । अतत्यनया **अतसी**, "तप्यणि-" [ हैमोणादिसू० ५६९ ] इत्यसः, न तस्यतीति वा । आह च —

अतसी मसृणा नीलपुष्पी चेलुरुमा क्षुमा ।
[ ] इति ।

एतस्या लोके 'अलसी' इति प्रसिद्धिः ।

**गवेधुकायां गवेधुः**

गूयते **गवेधुका**— [मुन्यन्नम्], "गुड ईधुक-एधुकौ" [ हैमोणादिसू० ७४ ] इत्यनेन एधुक प्रत्ययः, तस्याम् । [ गवा—अम्भसा एधते **गवेधुः**, स्त्रीलिङ्गः, ]

१ जोर्णाला मि० ॥

"मृ-मृ-तृ-त्सरि-" [ हैमोणादिसू० ७१६ ] इति बहुवचनादुः । गर्वीधुकाऽपि । आह च—

गवेधुका कर्षणी स्याद् गोजिह्वा कर्षिका मता ।
[ ] इति ।

एतस्या लोके 'गररी' इति प्रसिद्धिः ।

**वन्यतिले तु जर्तिलः ॥१९७॥**

वन्यः—वनजस्तिलो **वन्यतिलः**, तत्र । जीर्यते **जर्तिलः**, "स्थण्डिल-कपिल-" [ हैमोणादिसू० ४८४ ] इतीले निपात्यते । अरण्यजस्तिलोऽयम् ॥१९७॥

**षण्ढतिले तिलपिञ्जस्तिलपेजः**

षण्ढः—निष्फलस्तिल **षण्ढतिलः**, तत्र । निष्फलस्तिलः **तिलपिञ्जः** । **तिलपेजः**, "निष्फले तिलात् पिञ्ज-पेजौ" [ सिद्ध० ७.२.१५४ ] इति तिलशब्दाद् निष्फले वर्तमानात् पिञ्ज पेज इत्येतौ प्रत्ययौ । "पिञ्ज-पेजशब्दौ निष्फलार्थाविति तिलविषयौ" इति **चान्द्राः** । आह च—

तिलपूतस्तिलफलस्तिलपिञ्जोऽपरः सितः ।
यस्तिलो वनजातः स्यात् [ ] इति ।

एतयोर्लोके 'श्यामतिल' 'श्वेततिल' इति प्रसिद्धिः ।

**अथ सर्षपे ।**

**कदम्बकस्तन्तुभः**

सरति **सर्षपः**, "सर्तेः षप" [ हैमोणादिसू० ३१३ ] इति षपः प्रत्ययः, तत्र । कुत्सितमम्बते—शब्दायते **कदम्बकः** । तोतुभ्यते **तन्तुभः**, पृषोदरादित्वात् साधुः । आह च—

सर्षपः कटुकः स्नेही भूतघ्नो राजिकाफलः ।
तन्तुभोऽन्यः समुद्दिष्टः सिद्धार्थः श्वेतसर्षपः ॥
[ ] इति ।

एतस्य लोके 'सरसव' इति प्रसिद्धिः।

**अथ सिद्धार्थः श्वेतसर्षपः ॥३९८॥**

सिद्धप्रयोजनो रक्षोघ्नत्वात् **सिद्धार्थः**। श्वेतश्चासौ सर्षपश्च **श्वेतसर्षपः** ॥३९८॥

**राजिकायां तीक्ष्णगन्धा क्षुताभिजननः क्षवः।**
**असुरी कृष्णिका कृष्णसर्षपो राजसर्षपः ॥३९९॥**

राजते **राजिका**, णके आप्, तस्याम्। तीक्ष्णो गन्धोऽस्या **तीक्ष्णगन्धा**। क्षुतमभिजनयति **क्षुताभिजननः**। क्षौत्यनेन **क्षवः**। अस्यते–क्षिप्यते शाकादिना [ [१] शाकादौ ] **असुरी**, "वाश्यसि-" [ हैमोणादिसू० ४२३ ] इत्युरः, असुरस्त्रीव वा। कृष्णैव **कृष्णिका**; वर्णेन कर्षति कृष्णा, "घृ-वी-ह्वा-" [ हैमोणादिसू० १८३ ] इति किण्णः, स्वार्थिके के **कृष्णिका** इति वा। कृष्णश्चासौ सर्षपश्च **कृष्णसर्षपः**। सर्षपाणां राजा **राजसर्षपः**, राजदन्तादित्वात् पूर्वनिपातः। आह च—

राजक्षवक इत्यन्यो राजिका कृष्णसर्षपः।
क्षुताभिजननश्चैव स चोक्तो राजसर्षपः॥

[ धन्व० वर्ग ४ श्लो० ४३ ] इति।

एतस्या लोके 'राई' इति प्रसिद्धिः। "असुरी भिन्ना" इति [ ? अन्ये ] मन्यन्ते। यदाह—

असुरी राजिका राजी कृष्णिका रक्तसर्षपः।
तीक्ष्णगन्धा चातितीक्ष्णा क्षुरकः क्षुवकः क्षवः॥

[ धन्व० वर्ग ४ श्लो० ६० ] इति।

एतस्याश्च लोके 'असुरी' इति प्रसिद्धिः ॥३९९॥

**माषादयः शमीधान्यं**

माष आदिर्येषां मुद्गादीनां ते माषादयः। शमी–शिम्बा तत्प्रधानं धान्यं **शमीधान्यम्**।

**शूकधान्यं यवादयः।**

---

१ माषादि तु शमी° नि०॥

शूकप्रधानं धान्यं **शूकधान्यम्** । यव आदिर्येषां गोधूमादीनां ते **यवादयः** ।

**स्यात् सस्यशूके किंशारुः**

शवति शूकम्, पुं-क्लीबलिङ्गः, "घु-यु-हि-" [ हैमोणादिसू० २४ ] इति कः प्रत्ययो दीर्घत्वं च, सस्यस्य शूकं **सस्यशूकम्** , तत्र । कुत्सितं शृणाति **किंशारुः**, पुंल्लिङ्ग., "किम' श्रो णित्" [ हैमोणादिसू० ७२५ ] इत्यु' । एतस्य लोके 'ऊंबी' इति प्रसिद्धिः ।

**कणिशे सस्यशीर्षकम्** ॥४००॥

"कण शब्दे" कणति वातेन **कणिशम्** , पुं-क्लीबलिङ्ग , "कुलि-कनि-कणि-" [ हैमोणादिसू० ५३५ ] इति किद इशः, तत्र । **कनेशम**पि । सस्यमयं शीर्षमिव **सस्यशीर्षकम्** , सस्यमञ्जरीत्यर्थः । लोके 'कणसडा' इति, 'प्रधान सिरा' इत्यर्थः ॥४००॥

**स्तम्बे तु गुच्छो धान्यादेः**

स्तभ्नाति **स्तम्बः**, "तुम्ब-स्तम्ब-" [ हैमोणादिसू० ३२० ] इति बान्तो निपात्यते, तत्र । धान्यादेर्य' स्तम्ब' स नालं गुध्यति अनेन **गुच्छः**, "गुलुञ्छ-पिलिपिञ्चैधिच्छादय'' [ हैमोणादिसू० १२६ ] इति छप्रत्यये निपात्यते । उच्यते इति शेष' ।

एतस्य लोके 'गुंछउ' इति प्रसिद्धिः ।

**नाले काण्डः**

"णल गन्धे" नलति **नालम्**, अर्थाद् गुच्छस्य, त्रिलिङ्ग', ज्वलादित्वाद णः, तत्र । कणति—भज्यमान' शब्दायते **काण्डः**, पुं-क्लीबलिङ्गः, "कण्यणि-" [ हैमोणादिसू० १६९ ] इति णिद डः । एतस्य लोके 'नाल' इति प्रसिद्धिः, 'धानना कणसडा' इत्यर्थः ।

**अफले त्विह ।**

**स्यात् पलालः**

[ 'अफले' फलरहिते 'तु' पुनः 'इह' नाले ] "पल गतौ" पल्यते **पलालः**, "ऋ-कृ-मृ-" [ हैमोणादिसू० ४७५ ] इत्यालः, पुं-क्लीबलिङ्गः । **पलो**ऽपि । एतस्य लोके 'पराळ' इति प्रसिद्धिः ।

**धान्यत्वचि तुषः**

१ अभिधानचिन्तामणिस्वोपज्ञवृत्तौ 'कनिशमपि' इति पाठः ॥

धान्यस्य त्वग् धान्यत्वक्, तत्र। तुष्यति अनेन अग्निः तुषः, स्थादित्वात् क। एतस्य लोके 'तुस' इति प्रसिद्धिः।

बुसे कडङ्गरः ॥४०१॥

॥ इत्याचार्यश्रीहेमचन्द्रविरचिते निघण्टुशेषे
षष्ठो धान्यकाण्डः ॥६॥

॥ इति श्रीहेमचन्द्राचार्यविरचितो निघण्टुशेषः समाप्तः ॥

बुस्यते—उत्सृज्यते बुसः, स्थादित्वात् क., पुं-क्लीबलिङ्गः, तत्र। कडन्ति—माद्यन्त्यनेन पशवः कडङ्गरः, "कडेरेवरा-" [ हैमोणादिसू० ४४५ ] इत्यङ्गर.। एतस्य लोके 'भुस' 'ढूंढा' वा इति प्रसिद्धिः ॥४०१॥

॥ इति श्रीमद्बृहत्खरतरगच्छे श्रीजिनराजसूरिशिष्यश्रीजयसागरमहोपाध्यायपट्टानुक्रमायातवाचनाचार्यधुर्यश्रीभानुमेरुगणिशिष्यसमस्तप्रशस्तग्रन्थावलीविचक्षणश्रीज्ञानविमलोपाध्यायशिष्यवाचनाचार्यश्रीश्रीवल्लभगणिविरचितायां श्रीहेमचन्द्राचार्यकृतनिघण्टुशेषटीकायां धान्यकाण्डः षष्ठः समाप्तः ॥ ६ ॥

तत्समाप्तौ च समाप्तेयं
निघण्टुशेषटीका ॥

॥ ग्रन्थाग्रम्- ३५०० ॥



१

# प्रथमं परिशिष्टम् ।



## हेमचन्द्रीयनिघण्टुशेषमूलग्रन्थस्य पाठभेदाः ।

### सङ्केताः

पु १— सटीकस्य निघण्टुशेषस्य ७६ पत्रात्मिका मुनिश्रीपुण्यविजयस्य सम्पूर्णा प्रति ।

पु २— सटीकस्य निघण्टुशेषस्य ३२ पत्रात्मिका मुनिश्रीपुण्यविजयस्य अपूर्णा प्रति ।

पु०— निघण्टुशेषमूलमात्रस्य टिप्पणीयुता चतुष्पत्रात्मिका मुनिश्रीपुण्यविजयस्य प्रति ।

सं०— अणहिल्लपुरपत्तनसङ्घवीपाटकान्तर्गतताडपत्रीयज्ञानभण्डारसत्का निघण्टुशेषमूलमात्रस्य पत्र ४त १४ पत्रपर्यन्ता त्रुटिताऽपूर्णा ताडपत्रीया प्रति ।

नि०— निर्णयसागरमुद्रणालयाधिपतिमुद्रिताभिधानसङ्ग्रहद्वितीयभागान्तर्मुद्रितो हेमचन्द्रीयो निघण्टुशेष ।

पुपा०— पु० आदर्शे मार्जनोल्लिखितं पाठान्तरम् ।

टी०— टीकाकृता टीकायां निर्दिष्ट पाठभेद ।

(पू०)— श्लोकस्य पूर्वार्द्धम् । (उ०)— श्लोकस्योत्तरार्द्धम् ।

*

श्लोक ४(उ०) पिण्डपुष्पो स्थाने पिण्डीपुष्पो पु० ॥ ५(पू०) –दोहदः स्थाने –दोहदः पु० ॥ १० (पू०) कुसुमारोग्यः स्थाने कुसुमारेऽस्य पु० ॥ ११ (पू०) दर्वीसहो स्थाने दार्वीसहो पु० ॥ १३(पू०) कादम्बर्यः स्थाने कदम्बर्यः पु० ॥ १८(उ०) कपीतनः स्थाने कपीतकः पुपा० ॥ १९ पू०) स्थाल्यमोघा स्थाने स्थालीमोघा पु० । मोघाशब्दो अमरकोश-व्याख्यासुधायामादृतोऽस्ति ॥ २०(पू०) श्वेतपाटला स्थाने श्वेता पाटला पु० नि० ॥ २१ (पू०) घंशिका स्थाने घंशिकं नि० । (उ०) जौङ्गकमनार्यजम् स्थाने जोगकमनार्यजम् पु० योगजमनार्यकम् नि० ॥ २५(पू०) पत्राङ्गं पतङ्गं स्थाने पत्तङ्गं पत्राङ्गं पु० पत्राङ्गं पत्तङ्गं नि० ॥ २६(उ०) सुगन्धिकः स्थाने सुगन्धकः नि० ॥ २८(उ०) अगस्त्ये तु बकु-सेनः स्थाने अथागस्त्ये बकसेनः नि० । अत्र बकुसेनःशब्दोपरि तापस इति टिप्पणी पु० । शुकनाशो स्थाने शुकनासो नि० ॥ २९(उ०) –ऽश्वरोहः स्थाने अश्वरोधः नि० ॥ ३०(उ०) तमाले तु कालस्कन्धस्तापि- स्थाने कालस्कन्धस्तमाले स्यात् तापि-नि० ॥ ३१(पू०) वस्त्राख्यं स्थाने वस्त्राख्यं पु०नि० । रोमसं स्थाने रोमशं पु०नि० । (उ०) द्राविणी स्थाने द्राविडी नि० ॥ ३२(उ०) पत्रैला स्थाने भद्रैला नि० ॥ ३३(उ०) कर्पूरे स्याद् घनसारो स्थाने कर्पूरे घनसारः स्याद् नि० । हिमवा-लुका स्थाने हिमवालुकः पु०नि० ॥ ३४(उ०) कक्कोलके स्थाने कङ्कोलके नि० ।

माधवोषितं स्थाने मागधोत्थितम् सं०पु०नि० ॥ ३५(पू०) द्वीप- स्थाने डीप- स० । (उ०) वारिजंपदोपरि करिजं पुपा० ॥ ३६(पू०) श्रीपुष्पं श्याह्वयं स्थाने स्रोपुष्पं स्र्याह्वयं स० । (उ०) कपोतांह्रि- स्थाने कपोताङ्घ्रि- नि० ॥ ३७(पू०) अञ्जनकेशी धमनी स्थाने धमन्यञ्जनकेशी च नि० । (उ०) मण्डकः स्थाने मुण्डकः सं० पु० ॥ ३८(उ०) पिप्पले स्थाने पिष्पले पु० ॥ ४० (पू०) प्लक्षो वटः प्लवः शुङ्गी स्थाने प्लक्षे वटप्लवः शुङ्गी नि० प्लक्षो वटप्लक्षः शुङ्गी सं० प्लक्षे वटप्लिवस्तुङ्गी पु० । (उ०) कपीतनः कपीतः स्थाने कपीतने कपीतः पु० कपीतने कपीनः सं० नि० ॥ ४१(पू०) पर्कट्यां पर्कटी स्थाने पर्कटौ पर्कटं पु० पर्कटौ पर्टकी सं० कर्पटी पर्कटी नि० । सतीदो स्थाने सतीटो स० । लक्षणो जटी स्थाने लक्षणे नटी नि० ॥ ४३(उ०) फाल्गुनी फल्गुवाटिका स्थाने फाल्गुनी-फल्गु-वाटिकाः स० ॥ ४४(पू०) फल्गुराजी फलभारी मलयू- स्थाने फलाराजी फलभारी फलयू- नि० ॥ ४५(पू०) मधु गलफलो स्थाने मधु-राजफलो नि० ॥ ४६(पू०)-स्कन्धभ्वार- स्थाने स्कन्धवार- पु० । (उ०)कपिचूतः स्थाने कपिभूतः स० ॥ ४७(पू०) -ऽम्लपाटकः स्थाने -ऽम्रपाटकः स० पु० नि० (उ०) शुङ्गी स्थाने शृङ्गी स० पु० ॥ ४८(पू०) -ऽऽस्फोट-विष्किराः स्थाने-ऽऽफोत-विच्छुराः पु० -ऽऽस्फोत-वित्सु(च्छु)राः स० ॥ ४९(पू०) सदापुष्पी स्थाने सदापुष्पो नि० । (उ०) स्नुह्यां स्थाने त्रुट्यां नि० ।-ऽसिपत्रः स्थाने -ऽसिपुत्रः स० । स्नुक् स्थाने स्रुक् पु० नि० । गुडा स्थाने गुड. पु० ॥ ५० (पू०) सीहुण्डो गण्डीरो वज्रकण्टकः स्थाने सीहुण्डः गण्डेरी वक्रकण्टकः स० सीहुण्डः शण्डेरी वज्रकण्टकः पु० सेहुण्डः शण्डेरी चक्रकण्टकः नि० । (उ० करमन्दः स्थाने करमर्दः नि० । करामलक- स्थाने कराम्रक- स० पु० नि० ॥ ५१(पू०) स्थूलपर्कट- स्थाने स्थलपर्कट- पु० स्थलपर्कैट- नि० स्थलपटेक- स० । आविग्नः स्थाने आविघ्नः पु० । (उ०) जम्भीरो स्थाने जम्भीलो स० पु० नि० ॥५२ (पू०) दन्तशठो वक्त्रशोधी स्थाने वक्त्रशोधी दन्तशठो नि० । (उ०) -कुसुमः प्रियः स्थाने -कुसुमप्रिया स० ॥ ५४ (उ०) शीधुपादपः स्थाने सीधुपादपः पु० साधुपादपः स० नि० ॥ ५५(पू०) मातुलुङ्ग्यां स्थाने मातुलिङ्ग्यां पु० । मधुकर्कटी स्थाने मधुकुक्कुटी स० पु० । (उ०) पीतपुष्पी स्थाने पूतिपुष्पी स० पु० पूतिपुष्पा नि० । महाफला स्थान महाबला नि० ॥ ५६(पू०) अम्लीका- स्थाने अम्लिका नि० । शुक्तिका चाम्लिकाऽम्लिका स्थाने शुक्तिकाऽऽम्ली चिकाम्लिका सं० पु० नि० । (उ०) तिन्तिला गुडपु- स्थाने तिन्तिडी गुरुपु- नि० ॥ ५९ (उ०) बालद्रावक स्थाने वालद्रावक स० पु० लोहद्रावक नि० ॥ ६१(उ०) अक्षिस्पन्दो स्थाने अक्षिस्यन्दो स० नि० ॥ ६२ (पू०) सूक्ष्मपत्रः स्थाने श्लक्ष्णपत्रः स० पु० नि० । (उ०) -स्ताम्रपुष्पः स्थाने -स्ताम्रपत्रः नि० ॥ ६३(पू०) नारङ्ग नागरङ्गः स्यात् त्व- स्थाने नारङ्गे स्यान्नागरङ्गस्त्व- स० पु० नि० । (उ०) योषिद्वक्त्राधि- स्थाने योगी तक्राधि- स० पु० नि० ॥ ६४ (पू०)-धावनः स्थाने धावनम् पु० । (उ०) बालपत्रश्च जिह्मशल्यः क्षितिद्रुमः स्थाने वालपत्रश्च जिह्वाशल्यं क्षितिक्षमः स० पु० चलपत्रश्च बहुशल्यः क्षितिक्षमः नि० ॥ ६५ (पू०) कामुकः स्थाने कार्मुकः स० पु० कार्मकः नि० । श्यामसारः स्थाने श्वेतसारः नि० ॥ ६६ (पू०) त्वरिमेदो स्थाने त्विरिमिदो नि० ॥ ६७(पू०) चिरजीविता

स्थाने विरञ्जाविता नि० ॥ ६८ (उ०) कुशाल्मलौ शाल्मलिको स्थाने कुत्सिते शाल्मलौ प्रोक्तो नि० ॥ ६९ (पू०) शिंशपायां स्थाने शिंशिपायां नि० । (उ०) अगुरु- स्थाने अगरु- स० । -रन्या तु शिंशपा स्थाने -रल्पा तु शिंशिपा नि० ॥ ७० (पू०) कुशिंशपा स्थाने कुशिंशिपा नि० । (उ०) कुवली स्थाने कुवलिः नि० कवली पु० । कोलिः स्थाने केलिः स० । फलितच्छदा स्थाने फेनिलच्छदा स० पु० नि० । ७१ (पू०) वज्रशल्यिका स्थाने वज्रशिल्पिका पु० नि० । (उ०) घुट्टा स्थाने घुटा पु० नि० । गोपघोण्टा स्थाने कुहा घोट्टा नि० ॥ ७२ (पू०) सक्तुफला स्थाने शकुफला स० पु० । शिम्बा स्थाने शिम्या पु० शिवा नि० ॥ ७३ (पू०) शिवाऽलोमा स्थाने शिवलोमा नि० । विनाशिनी स्थाने विनाशनी पु० । (उ०) सक्करम् स्थाने सक्कर स० साक्कर. नि० ॥ ७४(पू०) कटकीलकः स्थाने कण्टकीलकः स० पु० कण्टकीटकः नि० । (उ०) बिन्दुक स्थाने विदुक- पु० ॥ ७५(पू०) महिषाक्षः स्थाने महिषाक्षः पु० नि० महिषाख्यः स० । (उ०) नक्तञ्चरः स्थाने नक्तचरः पु० । -खलकं स्थाने -खलकः नि० । ७७(पू०) शाकपुष्पो मृदूफलः स्थाने शाकपुष्पो मृदुफलः नि० । (उ०) -जन्मागूढपत्रो स्थाने जन्मा तथा पत्रो नि० । ७८(उ०) किङ्कणिः स्थाने किङ्किणिः स० केवणि. नि० । -पादगोप- स्थाने -पात्रोप- नि० ॥ ७९ (पू०) शलाटुः स्थाने शलापुः स० । (उ०) महाकपित्थः स्थाने महाकपित्थं नि० ॥ ८०(पू०) हृद्यगन्धो स्थान हृद्यः गन्धो सं० ॥ ८२(पू०) कल्को हार्यः स्थाने कलिवासः नि० । (उ०) दैन्यो स्थाने दैत्यो पु० द्विष्यो स० दोत्यो नि० । बिभेदकः स्थाने विभेदकः स० पु० । ८३(उ०) पर्वकीटा स्थाने पर्वकाढ्या नि० ॥ ८४(पू०) तर्कारी स्थाने तकारी स० । (उ०) गणकारिका स्थाने गणिकारिका स० पु० नि० ॥ ८५(उ०) टुण्टुको स्थाने टुण्टुको सं० टुन्द्रको नि० । दीर्घवृन्तो नटः कुट- स्थाने दीर्घवृन्तश्चाथ कुट- नि० दीर्घवृन्दो नटः कुट- स० ॥ ८६(पू०) स्योनाकः स्थाने श्योनाक· नि० शोनाकः स० । शोनको जम्बूः शुकनाशः स्थाने० शोषणो जम्बुः शुकनासः नि० ॥ ८७(पू०) पत्रोर्णो स्थाने पत्तोर्णो स० पत्तूणो पु० । (उ०) -स्तीक्ष्णगर्भो स्थाने -स्तीक्ष्णगन्धो सं० पु० नि० ॥ ८८ (पू०) विद्रध्यरातिकोऽक्षीवो स्थाने विद्रध्यरातिः काक्षीवो नि० विद्रध्यरातिः काक्षीवो पु० विद्रध्यरातिकाक्षीवो स० । (उ०)दंशो-स्थाने दशो- नि० । सुभङ्गी स्थाने सुरङ्गी स० पु० नि० ॥ ८९(उ०) चित्रकृद् स्थाने रथकृद् नि० ॥ ९० पू०) -ब्रह्मकारो स्थाने- ब्रह्मकरो सं० पु० -ब्र कवरो नि० ॥ ९१(उ०) त्रिवृन्तास्यो स्थाने त्रिवृन्ताख्यो नि० । रक्तपुष्पः स्थाने रक्तपुष्पः स० पु० । क्षीरश्रेष्ठः समिद्वरः स्थाने क्षारश्रेष्ठः समिद्वरः स० पु० नि० ॥ ९२ (पू०) वातपोषो स्थाने वातपोथो नि० । यज्ञियो स्थाने याज्ञिको स० पु० नि० । (उ०) शकटाख्यो स्थाने शकटाक्षो स० पु० नि० ॥ ९३(पू०) नन्दित- स्थाने नन्दिल- सं० । (उ०) कृष्ण- स्थाने कृष्णा नि० ॥ ९४(पू०) गम्भारी स्थाने कम्भारी टी० कज्जला स्थाने कट्फला नि० । (उ०) विहारी कुमुदा हीरा स्थाने विहीरा कुमुदा हारी नि० । हीरा स्थाने वीरा टी० ॥ ९५(पू०) मधुमत्यपि स्थाने मधुपर्ण्यपि नि० । (उ०) गुच्छपुष्पः स्थाने गन्धपुष्पः नि० । सुपर्णक स्थाने सुवर्णकः स० सवर्णकः नि० ॥ ९६(पू०) दीर्घवृक्षः स्थाने

द्वीपवृक्षः स० पु० नि० । शारदी स्थान शारदो नि० ॥ ९७(पू०) शिरोरुग् देवविटपी स्थाने शिरोरुर्गेहविटपः नि० । (उ०) सुपर्णकः स्थाने सुवर्णकः स० नि० ॥ ९८ (पू०) शम्याक- स्थाने शम्पाक- नि० । (उ०) -ऽऽरेवतश्चूली स्थाने रेचनशूली सं० पु० रेवतः स्थूलः नि० ॥ ९९(पू०)-शिम्बिका स्थाने-शिविका सं० । (उ०) शारिगौरो स्थाने शौरिगौरो पु० नि० ॥ १०० (पू०) मदासर्ज· स्थाने महासर्जः नि० । (उ०) महासालः पीतसालो जीवक प्रियसालकः स्थाने महाशालः पीतशालो जीवकः प्रियशालकः सं० पु० नि०॥ १०१(पू०)-स्तिष्यः पुष्यो- स्थाने -स्तिष्यपुष्यो- स० पु० नि० । (उ०) गोमूत्रकोऽधमः स्थाने गोमूत्रगन्धकः नि० ॥ १०२(पू०)कषायी स्थाने कषायः नि०। (उ०) कार्शः शालो स्थाने कार्श्यः शालो स० पु० कार्श्यशालो नि०॥ १०३(पू०) देवसालः स्थाने देवशाकः स० पु० नि०। -ऽर्जुनाह्वयः स्थाने -ऽर्जुनाभिधः नि०। (उ०) अर्जुनः स्थाने अर्जुने नि०। ककुभ· सेव्यः सर्पणो स्थाने ककुभोऽसव्यः सूर्पर्णो सं० ककुभोऽसेव्यः सूर्पणो पु० ककुभः सेव्यः सुवर्णो नि० । श्लोकोऽयं टीकाकृता उपलब्धादर्शानुसारेण पूर्वार्द्ध-उत्तरार्द्धविपर्यासेन व्याख्यातोऽस्तीति तदनुसरणेन तथैव मुद्रितेऽस्ति। किञ्च ग्रन्थारम्भे [श्लोक २] ग्रन्थकाराचार्यपादविहितप्रसिद्धनामनिर्देशपूर्वकसम्यन्तपाठविधानप्रतिज्ञावलोकनेन प्राचीनासु प्रतिषु उपलब्धोऽयं पाठभेदरूप श्लोक एव समीचीन आभाति । स चायम्-

अर्जुने ककुभोऽसव्यः सुपर्णो धूर्त्तपादपः । देवशाकः शक्रतरुर्नदीसर्जोऽर्जुनाह्वयः ॥

इति ॥ १०४ (उ०) ध्रुवको ध्रुवः स्थाने ध्रुवसाधनः स० पु० नि०॥ १०५(पू०) महापत्रो स्थाने महापात्रो सं०। बलेसारो स्थाने बलिसारो पु० बलसारो नि० । बलप्रदः स्थाने बलप्रभः नि०। (उ०) गोत्रपुष्पो स्थाने गोत्रवृक्षो नि०॥ १०६(पू०) फलः स्थाने फलम् नि०॥ १०७(पू०) सिल्हके स्थाने सेल्हके स० सल्लिके पु० सिल्लके नि० ।-पत्रे तु जो- स्थाने -पत्रेऽप्यजो-पु०। (उ०) त्विङ्गुदी स्थाने त्वगदी स० पु० त्वगादी नि०॥ १०८(पू०)सिद्धदारु- स्थाने स्निग्धदारु- स० पु०।(उ०)पलाशिक· स्थाने पलाशिका पु०॥ १०९(पू०) पारिभद्रो स्थाने पारिभद्रे नि० । द्रुकिऽमं किलिमं स्थाने द्रुकलिमं कलिमं पु०।(उ०) देवेन्द्र-स्वर्ग- स्थाने देवद्रुः स्वर्ग- नि०॥ ११०(पू०) देव भद्रेन्द्रात् स्थाने भद्र-देवेन्द्रात् स० पु०॥ १११(पू०) मधुस्रवः स्थाने मधुश्रवः सं० पु०। (उ०)रोध्रकोष-मधु- स्थाने रोध्रकेऽथ मधु- पु०॥ ११२(पू०) मधुलः स्थाने मधुलिः पु०। वारिजो स्थाने गिरिजो पु० नि०। (उ०) नीरवृक्षो स्थाने तीरवृक्षो स० पु० नि० । गैरिकाख्यो स्थाने गौरशाको स० पु० गौरशालो नि० ॥ ११३(पू०) तिन्दुक- स्थाने तिण्डाक- सं० । स्फूर्जन- स्थाने स्फूर्जक- नि० । (उ०) कालसारो रावणो स्थाने कालशाको द्रावणो स० पु० नि० ॥ ११४(पू०) द्वितोये तिन्दुके स्थाने द्वितीयतिन्दुके स० पु० नि० । काकतिन्दु- स्थाने कालस्तिन्दु- नि० ॥ ११५(पू०) रोध्रे लोध्रः स्थाने लोध्रे रोध्रः पु० । शाबरः स्थूलवल्कलः स्थाने शाम्बरस्तनुवल्कलः सं० पु० शाबरस्तनुवल्कलः नि० । (उ०) -रोध्रस्तरुः स्थाने -रोध्रो मैत्र्यः स० पु० । रोध्रोऽनम्भः नि०॥ ११६(उ०) तिरीटो स्थाने तिरीटी सं० । शशः स्थाने शिशुः स० पु० नि० ॥ ११७(पू०) स्थूलपत्रो स्थाने स्थूलवल्को सं० नि० स्थूलवक्षो पु० । कृष्णलोध्रे स्थाने कृष्णरोध्रे नि०। (उ०) बहुपुटो स्थाने बहुपटो नि० बहुपाटो पु० । मृदुत्वको स्थाने मृदुवल्को नि० ॥ ११८(पू०)-श्लक्ष्णपत्रो स्थाने क्षिप्रपत्रो पु०॥ ११९-

(पू०) फलेलु– स्थाने कफेलु– नि०। (उ०) सेलुः स्थाने शलुः सं० पु० –स्तथा नि०॥
१२०(पू०) लकुचे लिकुचो ग्र– स्थाने बकुले कण्टकी ग्र– नि० । ग्रन्थिमत्फलः प– स्थाने
ग्रन्थिफलोऽम्बुप–पु० नि० । पनसे स्थाने पनसो सं० पु० नि० । ब्रुडुः स्थाने बुडुः सं० ।
(उ०)–पनसस्तस्य तु न्युब्जकं स्थाने–पनसस्तनु स्यात् कुब्जकं नि० ।। १२१(उ०)
मदोत्सवः स्थाने मदोद्भवः पु० नि० महोद्भवः सं०॥ १२३(उ०) सुकोशको स्थाने सुकेशको
सं० पु० नि० । कोशाम्बुश्च स्थाने केशाम्बुश्च स० पु० नि० । सुरङ्कः स्थाने सरङ्कः
पु० सुरङ्कसः नि० ॥ १२४(उ०) –म्बुजच्छदा स्थाने –म्बुकच्छदा नि० ॥
१२६(पू०) म्वसनो स्थाने छर्दनो नि०॥ १२७(पू०) –पुत्र कर्कटको स्थाने –पुत्र-
कर्कटकौ नि०। विषगन्धो स्थाने विषघातो पु०॥ १२८(पू०) कामुकः स्थाने कामुकं
नि० । फुल्लो स्थाने फुल्ली सं० । निमिद्रुमः स्थाने निमीद्रुमः स० पु० मिसिद्रुमः
नि०॥ १२९(पू०) गन्धपुष्पो स्थाने गन्धपुष्पी सं० पु० । फलोऽम्बुजातः कच्छका-
ल्यपि स्थाने –फलोऽनुवाकः कच्छकोल्यपि स० पु० नि० ॥ १३० (पू०)
अभ्रपुष्पः स्थाने अभ्रपुष्पं पु०। (उ०) स्यादम्बुवेतसे स्थाने स्यादम्लवेतसे सं०॥
१३१(उ०) तिक्तशाकः स्थाने तिक्तशाकं सं०।। १३२(उ०) शीधुवृक्षः स्थाने साधु-
वृक्षः स० पु० नि०। –रसमरि– स्थाने –रस्मरि– पु०॥ १३३(उ०) अङ्कोल्लक– स्थाने
अङ्कोलक– नि०॥ १३५(उ०) कृष्णबीजो रक्षाबीजो– स्थाने कृष्णवर्णो रक्तबीजो– नि०॥
१३६(पू०)शीतफेनः स्थाने पीतफेनः पु० नि० ॥ १३७(पू०)शक्रेष्टः स्थाने शुक्रेष्टः
पु० नि०॥ १३८(पू०) निम्बरकः कामुको स्थाने निम्बकश्च कार्मुको
नि०। (उ०) वृका– स्थाने वृक्षा– सं० पु० वृक्षो– नि०॥ १३९ (पू०)
सहस्राङ्गो स्थाने सहस्राङ्गः नि० । (उ०)–फलश्च तस्मिं– स्थाने –फलश्चा-
थास्मिं– नि० ॥ १४०(पू०) अक्षोटः स्थाने अक्षोटे पु०। गुहाश्रय स्थाने गुहाशयः नि०।
(उ०) पारापते स्थाने पारावा(?व)ते नि० । कृतमालः स्थाने रक्तमालः नि० ॥ १४३
(उ०) कुमार– स्थाने कुमारं पु०॥ १४४(पू०) पूतिकश्चिरिबि– स्थाने पूतीकश्चिरबि-
पु० नि० । (उ०)प्रकीर्णः स्थाने प्रकीर्य नि० । कलिनाशकः स्थाने कलिनाशनः पु०
नि० ॥ १४५(पू०) पूतिकरञ्जो स्थाने पूतीकरञ्जो पु० । घृतपर्णकः स्थाने घृतपूर्णक पु० ॥
१४६(पू०) बहुग्रन्थे स्थाने बहुग्रन्था नि० । हस्तिवारणी स्थाने हस्तिवारुणी पु० नि० ॥
१४७(उ०) रोहेडकः स्थाने रोहडकः नि० । रोचनः स्थाने रोचना नि० ॥ १४८
(पू०) गोपभद्रिका स्थाने गोपभद्रिकः पु० ॥ १४९(पू०) फलषाण्डवः स्थाने फलषाडवः
पु० । (उ०) रक्तबीज– स्थाने वृन्तबीज–पु० नि० । जवा स्थाने जपा पु०॥ १५०(पू०) स्याद्
धातुपुष्पी वह्निपुष्प्यग्नि– स्थाने तु धातुपुष्पा वह्निपुष्पाऽग्नि–पु० तु धातुपुष्पी बहु-
पुष्प्यग्नि–नि० । (उ०) ताम्रपुष्पी स्थाने ताम्रपर्णी नि० ॥ १५१ (पू०) ह्लादा स्थाने
ह्रदा पु० । (उ०) अश्वमूत्री कुन्दुरुकी स्थाने अश्वमूर्तिः कुन्दुरुकी नि० । –भक्षा
महेरणा स्थाने –भक्ष्या महेरुहा पु० नि० ॥ १५२ (उ०)दीर्घदण्डो स्थाने दीर्घचन्द्रो
पु० । डयडम्बरः स्थाने डयडम्बकः नि० ॥ १५३ (पू०)–मान आमण्डो स्थाने–मानश्चा-
मण्डो पु० मान आर(?द)ण्डो टी० ॥ १५४(पू०) –रवुण्डो स्थाने –राऽऽवुण्डो
पु० नि० ॥ १५५(उ०) काम्पिल्यके तु कपिलो स्थाने काम्पिल्लके तु
काम्पिल्यो पु० नि० ॥ १५६(पू०) रेचनकः स्थाने रोचनकः नि० । पटोद्कः

स्थाने **पटोदयः** नि० ॥ १५७(पू०) **कर्पास्यां** स्थाने **कार्पास्यां** नि०। **बदरी** स्थाने **बदरा** नि०। (उ०) **भारद्वाजी** स्थाने **भरद्वाजी** पु० नि० ॥ १५८(पू०) **तटरुहा** स्थाने **तरुरुहा** नि०। **शेखरी पादरोहणी** स्थाने **शेखर्यपदरोहिणी** पु० **शौरवयेदरोहिणी** नि०। (उ०) **वृक्षरुहा** स्थाने **वृक्षभक्ष्या** नि० ॥ १५९(पू०) **नन्दीमुखो** स्थाने **नन्दीवृक्षो** नि०। (उ०) **वासिका** स्थाने **वाशिका** पु० नि० ॥ १६० (उ०) **तुम्बुरा** स्थाने **तुम्बरौ** पु० नि०। **सारसो** स्थाने **सौरसो** पु० **सौरभो** नि०। **-ऽम्निकः** स्थाने **-ऽन्दकः** पु० पु१ पु२ **-ऽन्धकः** नि० ॥ १६२(पू०) **वारणबुसा** स्थाने **वारणबुशा** नि० **वारणतसा** पु०। **कोलीरस** स्थाने **कालीरस** पु० नि०। (उ०) **वक्राख्यो नहुषो नृपः** स्थाने **चक्राख्यो मधुरो नृपः** नि०। **नहुषो** स्थाने **नघुषो** पु० ॥ १६३(पू०) **ब्रह्मदारु** स्थाने **ब्रह्मचारु** नि०। (उ०) **यूपं** स्थाने **दाप** नि० ॥ १६४(पू०) **मूषको घण्टा झाटलो** स्थाने **मोक्षको घण्टा** **कन्दालो** नि० ॥ १६५(पू०) **मस्कर-**स्थाने **तस्कर-**पु०। **-सार कर्मार-तेजनाः** स्थाने **-सारः कर्मारतेजनः** पु० ॥ १६६(पू०) **विश्वदेवा झषा** स्थाने **विश्वदेवदेवा** नि०। **झषा** स्थाने **रुषा** पु०। **ह्रस्वगवेधुका** स्थान **ह्रस्वा गवेधुका** नि० पु१ पु२। (उ०) **खञ्जा** स्थाने **खण्डा** पु० नि०। **-गन्धनि-**स्थाने**-बन्धनि-** नि० ॥ १६७(पू०) **दार्वी दारुहरिद्रायां** स्थाने **दारुहरिद्रायां दार्वी** पु०। **हरिद्रुः कण्टकेरुका** स्थाने **पीता कटङ्कटेरिका** नि०। (उ०) **पीतदारुः** स्थाने **पीतदारु** नि० ॥ १६८ (पू०) **पर्जनी च कण्टकिनी कालीयकः** स्थाने **पर्जनी कर्कटकिनी कालेयकः** पु० नि०। (उ०) **ग्रन्थिपर्णं** स्थाने **ग्रन्थिपर्णी** पु० ॥ १६९ अथ श्लोकः नि० आदर्शे इत्थम्प्रकारेणोपलभ्यते—**कुक्कुरं च तथा गुच्छं शुकपुष्पं शुकच्छदम्। स्थौणेयकं वह्निचूडा सुगन्ध-ग्रन्थिकावपि** ॥ इति ॥ १७१(पू०) **लङ्कोयिका** स्थाने **लङ्कातिका** नि०। (उ०) **मरुद् माला** स्थाने **मरन्माला** नि०॥ १७२(पू०)**-ऽमोघा तन्दुलश्चित्रतन्दुला** स्थाने **मोघा तन्दुलः कृष्णतन्दुलः** पु० नि०। (उ०) **भस्मक.** स्थाने **वेल्लकः** नि०। १७३(उ०) **धूर्वहो** स्थाने **धूर्धरो** पु० **धूर्धुरो** नि०॥ १७४(पू०) **सिद्धियुगं** स्थाने **सिद्धियुगं** पु०। **वसु** स्थाने **तथा** नि०। (उ०)**-सृष्टा सुखं** स्थाने **-सृष्टसुखं** नि०। **-रथ्याह्वया** स्थाने**-रथाह्वया** पु०॥ १७५ (पू०) **पीतरक्तश्चारुश्च सुप्रभः** स्थाने **पीतो रक्तश्चरुसरुश्यवः** नि० **पीतरक्तश्चारुसरुस्सव** पु०। (उ०) **सुरभिः** स्थाने **सुलभः** नि० ॥ १७७(पू०)**-दल्पास्थि** स्थान **दल्पास्ति** पु० नि०। (उ०)**परापरः परुश्चेरुः** स्थाने **परापरः परुश्चैव** पु० **परोऽपरः परश्चैव** नि० ॥ १७८(पू०) **त्वग्रजः** स्थाने **त्वग्रुजः** नि०। **काकपर्कटी**स्थाने **काककर्कटी** नि० **काकपर्कटिः** पु०॥ १७९ (पू०) **तले तालो** स्थाने **ताले तलो** पु०नि० ॥ १८० (पू०) **नालिकेलो** स्थाने **नारिकेरो** नि०। (उ०) **पूगे क्रमुकगूवाक खपुरा नील-** स्थाने **पूगे गूवाकः क्रमुकः पूगी च नील-** नि०। **-वल्कलः** स्थाने**-कल्कलः** नि०॥ १८१ (पू०) **घोण्टाऽस्य फल-** स्थाने **पतस्य फल-** नि० ॥ १८२ (पू०) **मृत्युपुष्पा** स्थान **मृत्युपुष्पा** पु० **मृतुपुष्पा** पुपा०॥ १८३ (उ०) **स्युरेतास्तृण-जातयः** स्थाने **स्युरेते तृणपादपाः** पु०नि०॥

१८४ (पू०) **च** स्थाने **तु** पु० नि०। **नीलसिन्धुकः** स्थाने **नीलसन्धिकः** पु० नि०। (उ०) **शीतसहेन्द्रसुरसाविन्द्राणी सिन्दुवारिका** स्थाने **शीतसहा च सुरसा चेन्द्राणी सिन्दुवारकः** पु० नि० ॥ १८५ (उ०) **गोलोमी** स्थाने

गोलोमा नि०। भूतवेश्यपि स्थाने भूतकेश्यपि पु० नि० पु१ पु२ ॥ १८६ (पू०) नीलिका च सा स्थाने नीलिका स्नुता पु० नालिका स्नुता नि० ॥ १८७ (पू०) भूतवेशी स्थाने भूतकेशी पु० नि०। सत्यनामा स्थाने सत्यनाम्नी नि० ॥ १८८ (पू०) गन्धफली स्थाने गन्धफला पु०। फली स्थाने फला पु०। (उ०) वर्णभेदिनी स्थाने पर्णभेदिनी नि० ॥ १८९ (पू०) मधुयष्ट्यां स्थाने मधुरायां नि०। -स्तलक्षणं स्थाने -तल्लक्षणा नि०। (उ०) नीरजा- स्थाने जलजा- पु० नि० ॥ १९० (पू०) तुरगी कञ्चुका स्थाने तुरङ्गी कम्बुका नि०। (उ०) लोककर्ण्यपि स्थाने कोलकर्ण्यपि पु० नि०॥ १९१ (उ०) वृश्चिकाली स्थाने वृश्चिकाला नि०॥ १९२ (पू०) उदग्रधूमकपुष्पा स्थाने दुग्धवम्यामपुष्पी पुपा०। -पुष्पा स्थाने पुच्छा नि०। -घाननी स्थाने -घानिनी पु०नि०। (उ०) कर्कटशृङ्ग्यां तु शृङ्गी स्थाने शृङ्गी तु कर्कटशृङ्ग्या नि०॥ १९३ (पू०) मञ्जीर- स्थाने मञ्जरि- नि० मञ्जरी- पु२।। १९४ (उ०) क्षुद्रा भण्टाकी स्थाने क्षुद्रभण्टाकी पु० नि० ॥ १९५ (पू०) विशदा स्थाने विशदः नि० विशिखा पुपा०। (उ०) शृगालिका स्थाने मृगालिका नि० ॥ १९६ (पू०) कूष्माण्डी चाश्व-स्थाने भूकूष्माण्डश्च-पु०नि०। (उ०)-ऽपरा स्थाने मता पु०॥ १९७(उ०)ऋक्षगन्धे-स्थाने ऋष्यगन्धे-पु०नि०। १९८ (पू०) पृश्णिपर्ण्यां स्थाने पृश्निपर्ण्यां नि० पृष्ठिपर्ण्यां पु०। पृथक्पर्णी स्थाने पृथुकर्णी पु०। (उ०) शृगालविन्ना स्थाने शृगालवित्ता पु० शृगालवर्णा नि०। कलशिर्धृतिला स्थाने कलशी धृतिला नि० कलसी घृतैला पु० ॥ १९९ (पू०) -र्यङ्ह्रिपर्णी स्थाने -र्यङ्घ्रिपर्णी नि०। (उ०) -गोखुराः स्थाने-कोखुराः पु० ॥ २०० (पू०) षडङ्गो गोकण्टस्त्रिकण्टस्त्रिककण्टकः स्थाने षडङ्गी गोकण्टस्त्रिकण्टस्तु त्रिकस्त्रिकः नि०। -स्त्रिककण्टकः स्थाने -स्त्रिकटस्त्रिकः पु०। (उ०) श्वदंष्ट्रः स्थाने स्वदंष्ट्रा पु० स्वदंष्ट्रः नि० ॥ २०१ (पू०) षडङ्गो भूक्षुरः स्थाने षडङ्गस्तूक्षुरः नि०। (उ०) शीघ्रोपशल्योपचित्रो-स्थाने शीघ्रा विशल्या च चित्रो- नि० ॥ २०२ (उ०) वारुणी गजचिर्भिटी स्थाने वारुणी चापि चिर्भिटी नि० ॥ २०३ (पू०) तु गजस्फुटा स्थाने भुजगस्फटा पु०नि०। (उ०) श्वेतपुष्पी मधुपुष्पी पर्वपुत्री विषौषधी स्थाने श्वेतपुष्पा मधुपुष्पा पर्वपुष्पा विषौषधिः नि० श्वेतपुष्पा मधुपुष्पी पर्वपुष्पी विषौषधी पु० ॥ २०४ (पू०) -शल्या स्थाने -शल्यः नि० -शल्यी पु० ॥ २०७ (पू०) वृश्ची च दीर्घपत्रः शिलाटकः स्थाने वृश्चीवो दीर्घपत्रः शिलारिका पु० वृश्चीरो दीर्घपत्रा शिलाटिका नि० ॥ २०८ (पू०) क्रूरा मण्ड- स्थाने क्रूरमण्ड- नि०। (उ०) -वर्षाकेतु- स्थाने -वर्षकेतु- नि० -वर्षः केतु- पु०। २०९ (पू०)-लता दुर्मदा लव-स्थाने लता दुर्मना लव- पु लता कङ्गुनी लव- नि० ॥ २१० (पू०) माषपर्ण्यामार्द्रमाषा मांसमाषा महासहा स्थाने मषपर्णा सूर्यपर्णी पाण्डुश्चापि महासहा नि०। (उ०) अश्वपुच्छी स्थाने अश्वपुच्छा पु० नि०। सिंहवृन्ता स्थाने सिंहवृत्ता पु० ॥ २११ (पू०) काकमुद्रा स्थाने काकमुद्गा पु० नि०। वर्णा स्थाने वन्या नि० पर्णी पु०। (उ०) शिम्बी स्थाने शिवा नि०। ह्रासा रङ्गणी शूर्प- स्थाने ह्रासी रिङ्गिणी सूर्प- पु० ह्रासी रङ्गणी सूर्य-नि० ॥ २१२ (पू०) -मामला स्थाने-ममला पु० नि०। बहुपत्री स्थाने बहुपुत्री

पु० बहुपुत्रा नि० । (उ०) तामलक्ययज्झटाऽज्झाटा ता-स्थाने तामलक्युत्कटा झाटा ता-पु० तामलक्युज्झटा झायता-नि० । च तमालिनी स्थाने तुन्नमालिनी पु० तुन्नमालिनी नि० ॥ २१३ (उ०) रजनिर्गौरी स्थाने रजनी गौरी पु० नि० ॥ २१४ (पू०) पिङ्गा स्थाने पिण्डा पु० पु१ । (उ०) प्रपुनाटे स्थाने प्रपुन्नाटे पु० नि० । -अक्रहू- स्थाने -अक्रक-पु० -अक्राक- नि० ॥ २१५ (पू०) पद्माटैड-स्थाने पुन्नाटैड- पु० । (उ०) मुण्डनिका स्थाने मुण्डितिका पु० । -बोधनी स्थाने बोधिनी नि० ॥ २१६ (उ०) तु व्यथा स्थाने त्वव्यथा नि० ॥ २१७ (पू०) लोचनीया स्थाने लोभनीया पु० नि० । (उ०)-नाशनी स्थाने -नाशिनी नि० ॥ २१८ (उ०) कृष्णफलीन्दुलेखा स्थाने कृष्णफला दुर्लेखा नि० ॥ २२० (पू०)-गन्धा सुगन्धा वीरितपत्रिका स्थाने -गन्धा तु सुगन्धा वारिपत्रका नि० । (उ०) विषमर्दनी स्थाने विषमर्दिनी नि० ॥ २२१ (पू०) छत्राकी स्थाने छत्राक्षी पु० । (उ०) कठिञ्जरः स्थाने कुठिञ्जरः पु० नि० ॥ २२२ (उ०) करालकः स्थाने खरालकः नि० ॥ २२३ (पू०) कालतालः स्थाने काकतालः नि० । (उ०)-ऽऽपीता राक्षसी स्थाने प्रेतराक्षसी पु० नि०॥ २२४ (पू०) ग्राम्या स्थाने प्रस्या पु० यस्या नि० । (उ०) मरिचकः खरपत्रोऽल्पपत्रकः स्थाने प्रस्थपुष्पः खरपत्रोऽपत्रकः नि० ॥ २२५ (पू०) जम्भीरो स्थाने जम्भारो पु० । (उ०) त्रायमाणायां त्रायन्ती कृतत्राणाऽद्रिसानुजा स्थाने त्रायन्ती त्रायमाणायां कृतत्राणाऽङ्ग्रिसानुजा नि०॥ २२६ (पू०) बलभद्रिका स्थाने बीलभद्रिका पु० । (उ०) सुहृत्त्राणा स्थाने सुहृत् त्राणा पु० नि० ॥ २२७ (उ०) वीरमूलो स्थाने दूरमूलो पु० नि० ॥ २२८ (पू०) अधिकण्टकः कुनाशस्ताम्रमूली प्रतोदनी स्थाने कुनाशकोऽधिष्ठकश्च ताम्रमूली प्रबोदनः नि० । अधिकण्टकः स्थाने अविकण्टकः पु० । (उ०) दुःस्पर्शा स्थाने दुःस्पर्शः पु०नि० । -ऽनन्ता स्थाने-ऽमन्ला पु० ॥ २३० (पू०) वाष्प-स्थाने बाष्प- पु० । (उ०) पारिभव्यं कौरव्यं स्थाने पारिभाव्यं कौरवं नि० पारिभद्रं कौरवं पु० ॥ २३१ (उ०) वक्राणि स्थाने वक्त्राणि पु० । कचम् स्थाने रुचम् पु० नि० ॥ २३२ (पू०) शठ्या स्थाने शठ्यां पु०नि० । गन्धोली स्थाने गन्धाली नि० । (उ०) कर्चूरः स्थाने कर्बुरः नि० । पृथुपलाशिका स्थाने पृथुपलासिका पु० पृथुफलाशिका नि०॥ २३३ (पू०) पलावालुके स्थाने पलुवालुके पु० । (उ०) -लुकमेल्वालं स्थाने -लुकमेल्वालु पु०नि० । दुर्वर्णं स्थाने दुर्वर्ण- नि० दुर्वारं पु० ॥ २३४ (पू०) सङ्कोच-स्थाने सङ्कोचं पु० टी० । वरम् स्थाने शकम् पु० शुकम् नि० । (उ०) धीरं स्थाने हीरं पु०नि० ॥ २३५ (पू०) वर्णं स्थाने वरम् पु० नि० । (उ०) रजनि स्थाने रजनी पु० नि०॥ २३६ (उ०)-सायनी स्थाने -सायिनी नि० ॥ २३७(उ०) जातिसूतं स्थाने जात्यमृतं पु० नि० ॥ २३८ (पू०) बालपुष्पी स्थाने बालपुष्पा नि० वालुपुष्पा पु० । गन्धयूथिका स्थाने शङ्कयूथिका पु० नि० ॥ २३९ (उ०) सदापुष्पी स्थाने सदापुष्पो नि०॥ २४ (पू०) शाल्योदनोपमश्च सः स्थाने शाल्योश्नो यमश्व सः नि० । (उ०) नेमाली स्थाने नेवाली पु० मोमाली नि० । वनमालिनी स्थाने नवमालिनी नि०॥ २४१ (पू०)सतला सुकुमाराऽतिसुरभिः स्थाने सत्सला सुकुराराऽतिसुरतिः नि० । शशिगन्धिका स्थाने शिशुगन्धिका पु० नि० ॥ २४२ (पू०) प्रमोदनी स्थाने प्रमोदिनी पु० । (उ०) गवाक्षी स्थाने गवाक्षा नि० ॥ २४३ (पू०)

-नन्दा स्थाने -नन्दी नि० । त्र्यवा सुरूपा स्थाने त्र्यवसुरूपा नि० । -बन्धनी स्थाने बन्धना पु० नि० ॥ २४४ (पू०)कुमार्यां कणिका चारु-स्थाने कुमार्यां तु वर्णिचारु-नि० । -केसरा स्थाने-केशरा पु० । (उ०)-तरणी गन्धा-स्थाने -तरणिर्गन्धा-नि० ॥ २४५ (उ०) कुरबकः स्थाने कुरुबकः नि० कुरकः स्यात् पु० ॥ २४६ (पू०) सैरेयकः स्थाने सैरेयके पु० ॥ २४७ (उ०) पीतभद्रः प्रलोभ्यपि स्थाने पीत-भद्रा प्रलोल्यपि पु० ॥ २४९ (उ०) शोकरा स्थाने शीतला पु० नि० ॥ २५०(पू०) काली स्थाने काला पु० नि० । (उ०) तुत्था स्थाने तुच्छा पु० नि० ॥ २५२ (पू०) पाण्डु-राङ्गः स्थाने पाण्डुरागः पु० नि०॥ २५३ (उ०) मातुलपुत्रकम् स्थाने मातुलपत्रकम् नि० ॥ २५४ (पू०) क्षीरपुष्पी स्थाने क्षीरपुष्पा पु० । शिवा ब्राह्मी कि-स्थाने शिवब्रह्मी कि-पु० शिवब्रह्म कि- नि० ॥ २५५ (उ०) द्राविडः स्थान द्राविडं पु० द्रविडः नि० ॥ २५६ (पू०) अजमोदायां तु मोचा स्थाने मोचा मस्त्वजमोदायां नि० ॥ २५७ (पू०) ब्रह्मदर्भो स्थाने ब्रह्मदर्भा नि० । (उ०) यमानी स्थाने यमनी नि० । यवसाह्वया स्थाने यवसाह्वयः पु० नि० ॥ २५८ (पू०) सहदेवायां तु दण्डो-स्थाने सहदेव्यां तथा दण्डो- नि० । गोवन्दनी स्थाने गोव-न्दना नि० ॥ २५९ (पू०) रजको रजनामकः स्थाने रजः कवचनामकः पु० नि० । (उ०)गोजिह्वायां स्थान गोजिकायां नि०॥ २६० (पू०)भद्रावन्यो स्थाने भद्रोवन्यो-नि०।(उ०) वाटी वाट्यालको वाट्य-स्थाने वाट्यालकस्तथा वाट्य-नि० ॥ २६१(उ०)ऋक्षगन्धा स्थाने ऋष्यगन्धा पु० नि०॥ २६३ (पू०) वाट्यायनी स्थाने वाट्यायिनी नि० । (उ०) गन्धवल्ली स्थाने गन्धवली पु० नि० । मङ्गल्या च प्रसा- स्थाने मङ्गल्यार्थप्रसा- पु० नि०॥ २६४(पू० मुसल्यां स्थाने मुशल्यां पु० । महावृषा स्थाने महाविषा नि० । (उ०) वृष्यकन्दा स्थाने वृक्षकन्दा पु० । सुमूला स्थाने समूला नि० ॥ २६५ (उ०) भूतघ्नं स्थाने सूतघ्नं नि० ॥ २६६ (उ०) जतुका स्थाने जातूका नि० । वंशपत्री स्थाने वंशपत्रा नि० ॥ २६७ (पू०) कबरी स्थाने करवी पु० नि० । बिल्वि-के-स्थाने बिल्वके-पु० नि० । (उ०) प्रचीबला स्थाने प्रचीबलः पु० नि० ॥२६८ (पू०) नदीकान्ता नदीकान्तो नि० । नद्याख्या स्थाने नद्यास्या पु० नि० । (उ०) काकना-सायां सुरङ्गा स्थाने काकनाशायां सुभङ्गा पु० ॥ २६९ (पू०) तस्करा स्नायुः स्थाने तस्करस्नायुः पु० नि० । (उ०) वृषभः स्थाने नगभित् नि० ॥ २७० (पू०) हपुषायां स्थाने हवुषायां पु० हमुषायां नि० । विगन्धा वपुषा च सा स्थाने विगन्धा मत्स्यगन्धिनी नि० । वपुषा स्थाने विपुषा पु० ॥ २७३ (पू०)-शिखं-महारजने स्थाने-शिखं महारञ्जनं पु० नि० । (उ०) शालपर्ण्यां स्थाने शालिपर्ण्यां पु० । पीतनी स्थाने पीतिनी नि० ॥ २७४ (पू०) शूल्यांशु- स्थाने सौम्यांशु-पु० भौमांशु- नि० । (उ०) बर्बरकः स्थाने बर्बरका पु० । वर्द्धको स्थाने वन्द्रको पु० नि० ॥ २७५ (उ०) आवर्त्त-क्या स्थाने आवर्त्तक्यां पु० नि० । पोठिका स्थाने पीतिका पु० पिच्छिका नि० ॥ २७६ (पू०) रक्तपुष्पी स्थाने रक्तपुष्पा पु० नि० । रक्तपुष्पी बिन्दुकिनी स्यान्महा-जालिनी च सा स्थाने रक्तपुष्पा बुकिनी स्यान्महाजालिनिका च सा नि० । (उ०) नेत्रपीका विसर्पणी स्थाने वेत्रमूला विसर्पिणी पु० नि० । २७७ (पू०) हढपादा स्थाने वृक्षपादा नि० । यशस्करी स्थाने यशीश्वरा पु०-ऽऽयसीश्वरा नि० । (उ०) शीता-

ऽम्बष्ठी स्थाने पीताऽम्बष्ठा पु० नि० ॥ २७८ (पू०) तेजनी स्थाने तेजिनी पु० नि० । वल्कलेति च स्थाने वल्कलेत्यपि नि० । (उ०) मिश्रेयायां ताम्रपर्णी स्थाने मिश्रेयायां तालपत्री पु० ॥२७९ (पू०)–स्तालकर्ण्यपि स्थाने–स्तालपर्ण्यपि पु० ॥ २८० (पू०) कन्द-पत्री त्वचं पत्री तलपत्रकमुन्दुरा स्थाने कन्दपत्रा त्वचं पत्रा तलपत्रकमुत्तरा पु० कन्दपत्रत्वचं पत्राऽमलपत्रकमुत्तरा नि० । (उ०) पेशी स्थाने यशी नि० ॥ २८२ (पू०) पूतना स्थाने भूतना नि० ॥ २८३ (पू०) गन्धकुटी स्थाने गन्धकटी नि० । (उ०) पौण्डर्यं स्थाने शौण्डर्यं नि० ॥ २८४ (उ०) जतूका– स्थाने जतुका नि० ॥ –वर्त्तनी स्थाने–वर्तिनी पु० नि० ॥ २८५ (पू०) संस्पर्शा स्थाने संहर्षा पु० सहर्षा नि० । (उ०) वृन्ता चर्मकशा स्थाने वृत्ता चर्मकसा पु० ॥ २८६ (पू०) समाङ्गा-ऽञ्जलिका– स्थाने ममङ्गाऽञ्जलिका– नि० समङ्गा जलका– पु० ॥ २८७ (उ०) –मण्डलको– स्थाने –मण्डलिको– पु० –मण्डलिका– नि० ॥ २८८ (पू०) –पिप्पल्यां स्थाने–पिष्पल्यां पु० । (उ०) पिप्पली स्थाने पिष्पली पु०॥ २८९ (पू०) बुकः स्थाने दकः पु० । (उ०) पाण्डुराङ्गः प्रियः स्थाने –पाण्डुरोगप्रियः नि० ॥ २९० (उ०)–विषा विषा स्थाने विषाऽरुणा नि०॥ २९१ (पू०) शालपर्ण्यपि स्थाने शालिपर्ण्यपि पु० शल्यपर्ण्यपि नि० ॥

२९२ (पू०) काकचिञ्चिका स्थाने काकविम्बिका पु० । काकनिन्दिका स्थाने काकणिन्दिका पु० नि० ॥ २९३ (उ०) -णिर्द्रमोद्घा च शीत– स्थाने -णिस्त्वमोघा च शत– पु० –णिर्द्रमोघा च शत– नि० ॥ २९४ (पू०) पापम्वेलिका स्थाने पापाचालिका पु० । विद्धकर्णिका स्थाने वृद्धकणिका नि० । (उ०) वृकतिक्ता वनतिक्ता स्थाने वृकं तिक्ता वरतिक्ता नि० । स्थापनी स्थान स्थापिर्नी नि० स्थायिनी पु० ॥ २९५ (पू०) रसाऽम्बष्ठा–स्थाने रसा त्वष्टा पु० ॥ २९६ (पू०) शतमूली स्थाने शतमूला नि०। (उ०) –ऽभीरु स्थाने भीरु पु० नि० ॥ २९७ (पू०) पुरुषद्न्तोर्ध्व– स्थाने पुरुषदन्तोर्ध्व– पु० । (उ०) भीरुः स्थाने भीरु– पु० ॥ २९९ (पू०) कटंवरा स्थाने कटम्भरा पु० नि०॥ ३०० (पू०) कपिकच्छू रात्मगुप्ता स्थाने कपिकच्छा महागुप्ता नि० कपिकच्छान्मा(च्छूवामा)त्मगुप्ता पु० । दुरभिग्रहा स्थाने दुरतिग्रहा पु० । (उ०) व्यण्डा स्थाने स्यण्डा पु० ॥ ३०१ (पू०) –शिम्बिर्ला– स्थाने –शिम्बी ला– पु० नि० । (उ०) ऋषभी स्थाने आर्षभी पु० आर्यभी नि० । दुरालसा स्थाने च दुर्लभा पु० ॥ ३०२ (उ०) भण्डी मञ्जियोजनवल्लिका स्थाने चण्डी जिङ्गी योजनवल्लिका पु० भण्डी जिङ्गी योजनवल्ल्यपि नि० ॥ ३०३ (पू०) मण्डूक स्थाने माण्डूक पु० । ३०३ श्लोकपूर्वार्धानन्तरमयमर्धः श्लोक पु० आदर्शेऽधिक उपलभ्यते-क्षत्रिणी विजया रक्ता रक्तगी वस्त्रभूषणा इति । (उ०) धार्मप–स्थाने धर्मप-पु० नि० ॥ ३०४ (पू०) यवनेष्टं शिरोवृत्तमूष– स्थाने यवनेष्टं शिरोवृत्तं मूष– नि० । (उ०) पिप्पल्यां स्थाने पिष्पल्यां पु० ॥ ३०५ (पू०) तण्डुला स्थाने तन्दुला पु० नि० ॥ ३०६ (पू०) सुमूलकं स्थाने समूलकं नि० । -कमोषणम् स्थाने-कमूषणम् नि० । (उ०) पुनश्चव्य चवनं कोल–स्थाने तथा चव्यं चवनं काल–नि० ॥ ३०७ (पू०) वशिरो स्थाने वसिरो नि० । –पिप्पली स्थाने –पिष्पली

पु० । (उ०) स्याद् गिरिकर्ण्यामास्फोता स्थाने गिरिकर्ण्यामरस्फोता नि० ॥ ३०८ पू०) श्वेतनामिका स्थाने श्वेतपुष्पिका पु० नि० ॥ ३०९ (पू०)-श्वेता गवादनी स्थाने श्वेता गवादिनी पु० -श्वेताक्षवन्दना नि० । (उ०)-वारुण्यां स्थाने-वारुणी नि० ॥ ३१० (पू०) गोडुम्बा स्थाने गोदुगुवा नि० ॥ ३१२ (पू०) भूतनाशनी स्थाने सूतनाशनी नि० ॥ ३१३ (उ०) शारदी स्थाने शरटा पु० नि० ॥ ३१४ (पू०) कृष्णा भद्रा स्थाने कृष्णा-भद्रा पु० नि० । (उ०)चन्द्नोत्पल-स्थाने शारिवोत्पल-पु० । ३१५ (उ०) स्रवा स्थाने श्रवा पु० ॥ ३१६ (पू०)-वल्कला स्थाने वल्कली नि० ।(उ०) पीलुपर्णी स्थाने पीलुपर्णा नि०॥ ३१७ (पू०) पातनी स्थाने-पातिनी नि० । (उ०)-ऽग्निमुखी सैरी दुष्पुष्पी कलि-स्थाने -ऽग्निशिखा शक्रपुष्पिका कलि-नि० । सैरी दुष्पुष्पी स्थाने सीरीन्दुपुष्पी पु० ॥ ३१८ (पू०) गुडूच्या स्थाने गडूच्या-पु० । ३१९ (पू०) लम्बा स्थाने छिन्ना पु० नि० । ३२० (पू०) देवताली स्थाने देवदाली पु० नि० । वृत्तकोशो स्थाने वृत्तकोशा नि० ॥ ३२१ (पू०) कृष्णच्छत्रा स्थाने कृतच्छत्रा पु० नि० । सुतिक्तिका स्थाने सुतिक्तका पु० नि० । (उ०) कृतवेधना स्थाने रक्तवेधना पु० नि० ॥ ३२२ (पू०) धामार्गवः स्थाने धामार्गवे पु०नि० । महाजाली महाफली स्थाने महाजला महाफला नि० । (उ०) कोशफलो स्थाने कोशफला पु० नि० ॥ ३२३ (पू०) त्वैभी स्थाने त्वभ्या नि०। (उ०) पटुपर्णी स्थाने कटुपर्णी पु० नि० ॥ ३२४ (पू०) करीषिणी स्थाने करीषणी नि० । (उ०) हेमशिखा स्थाने हेमशिखी पु० नि० ॥ ३२५ (पू०) धनहरी स्थाने वनहरी पु० नि० । (उ०) चण्डा स्थाने रण्डा पु० ॥ ३२६ (पू०) पुष्पश्रेणी न्यग्रोधी स्थाने पुत्रश्रेणी न्यग्रोधा पु० नि० । (उ०) रण्डा च स्थाने रण्डाखुः पु० रण्डाख्युः नि० ॥ ३२७ (पू०) बिशिनी बिशवत्यपि स्थाने बिसिनी बिसनाभयः पु० नि० । (उ०) पलाशिनी नालीकिनी स्थाने पलासिनी नालकिनी पु० नि० ॥ ३३१ (पू०) कुवलं कुवम् स्थाने कवलं वलम् नि० । (उ०) तत्र कुमुदं स्थाने कुमुदं चैव नि० ॥ ३३२ (पू०) रक्तसन्ध्यकम् स्थाने रक्तसन्धिकम् नि० । (उ०) कह्लारं स्थाने कल्हारं पु० नि० ॥ ३३४ (पू०) कन्दे पाद्मे स्थाने पद्मकन्दे नि० । शिफे स्थाने शफे पु० । (उ०) पद्माख्यं स्थाने पद्माक्षं पु० नि० ॥ ३३५ (पू०) पानीया पृष्ठगा स्थाने पानीयपृष्ठगा पु० नि० । (उ०) नीली स्थाने तथा नि० ॥

३३६ (पू०) मिसिः स्थाने मिषिः नि० । (उ०) छत्रपुष्प्यथवा-स्थाने छत्रपुष्पाऽथा-नि० ॥ ३३७ (उ०) सुषवी स्थाने सुषवी नि० ॥ ३३८ (पू०) कुञ्ची कालोपकालोपकुञ्चिकोत्कुञ्चिकाऽपि च स्थाने उपकुञ्ची कुञ्चिका च कालापकुञ्चिकाऽपि च नि० -कोत्कुञ्चिका-स्थाने -का कुञ्चिका पु० ॥ ३३९ (उ०) सुकन्दो स्थाने कुकन्दो पु० । वक्त्रदूषणः स्थाने वक्त्रभूषणः पु० नि० ॥ ३४० (पू०) हरणः स्थाने फरणः पु० नि० । (उ०) विमला मता स्थाने बिन्दुलाऽमला पु० बिन्दुलाऽमली नि० ॥ ३४१ (पू०) चर्मकसा स्थाने चर्मकिसा पु० चर्मा-कसा नि० ॥ ३४२ (उ०) सारणा सरणा सुप्रसरा राजबला च सा स्थाने सारणी सरणी सुप्रसरा राजबला च सा पु० सारणी सुप्रसारा च राजबला च साऽपि

[1]**गजपींपली**—वशिर [वसिर नि०] हस्तिपिप्पली [हस्तिपिप्पली पु०] श्रेयसी ।

[2]**गिरणई**—गिरिकर्णी आस्फोता [अरस्फोता नि०] विष्णुक्रान्ता अपराजिता ३०७ ।

**श्वेतगिरणई**—श्वेतनामा कटभी श्वेतनामिका [श्वेतपुष्पिका पु०नि०] श्वेतस्यन्दा अश्वखुर ।

**कालीगिरणई**—अव्यक्तगन्धिका ३०८ नीलस्यन्दा नीलपुष्पी महाश्वेता गवादनी [गवादिनी पु० अङ्गबन्दना नि०] ।

[3]**इन्द्रवारुणी**—इन्द्रवारुणी ऐन्द्री विषादनी गवादनी ३०९ इन्द्रैर्वारु क्षुद्रफला गोडुम्बा [गोद्-गुवा नि०] गवाक्षी ।

**इन्द्रवारुणीविशेष**—चित्रफला महाफला ३१० आत्मरक्षा विशाला त्रपुसी तुम्बसी

[4]**वज**—वचा उग्रगन्धा उग्रा जटिला शतपर्विका ३११ इक्षुकर्णिका गोलोमी लोमशा भूतनाशनी [सुतानशनी नि०] ।

**श्वेतवचा**—श्वेतवचा मेध्या षड्ग्रन्था हैमवती ३१२ ।

[5]**उत्पलशारिवा**—शारिवा गोपकन्या गोपवल्ली प्रतानिका गोपी आस्फोता लता श्वेता शारदी [ शरटा पु० नि० ] काष्ठशारिवा ३१३ नागजिह्वा ।

[6]**चन्दनशारिवा-कृष्णोत्पलशारिवा**—भद्रा [कृष्णभद्रा पु० नि० ] चन्दनशारिवा भद्रवल्ली कृष्णवल्ली चन्दना [ शारिवा पु० ] उत्पलशारिवा ३१४ ।

[7]**पीलउनी-मूर्वा**—मूर्वा [मौर्वी टी०] मोरटा देवी मधूश्रेणी मधुलिका देवश्रेणी मधुरसा गो-कर्णी तेजनी स्रवा [श्रवा पु० स्रुवा टी०] ३१५ धनुश्रेणी चापगुणा पीलुनी तिक्तवल्कला पीलुपर्णी [तिक्तवल्कली पीलुपर्णा नि०] स्निग्धपर्णी पृथक्त्वचू मधुमती ३१६ ।

[8]**दाडागारी-लाङ्गली**—लाङ्गली हलिनी नन्दा विशल्या गर्भपातनी [गर्भपातिनी नि०] अनन्ता अग्निमुखी [अग्निशिखा नि० टी०] सैरी दुष्पुष्पी [सीरी इन्दुपुष्पी पु० शक्रपुष्पिका नि०] कलिकारिका ३१७ ।

[9]**गुडूची-गळो**—गुडूची [ गडूची पु० ] अमृता सोमवल्ली वत्सादनी धरा छिन्नोद्भवा छिन्नरुहा विषघ्नी देवनिर्मिता ३१८ विशल्या कुण्डली लम्बा [ छिन्ना पु० नि० ] तन्त्रिका चक्रलक्षणा देवी अनन्ता मधुपर्णी जीवन्ती अमृतवल्ली ३१९ ।

[10]**देवदाली**—देवताड देवताली [देवदाली पु० नि०] वृत्तकोशा. [ वृत्तकोशा नि०] गरागरी जीमूतक तालक वेणी आखुविषघातिनी ३२० ।

[11]**कडूई-घिसाली-घींसोडी-कोशातकी**—कोशातकी कृष्णच्छत्रा [कृतच्छत्रा पु० नि०] जाली घोषा सुनिक्तिका [सुतिक्तका पु० नि०] मृदङ्गफलिका क्ष्वेडा धन्वाली कृतवेधना [रक्त-वेधना नि०] ३२१ धामार्गव पीतपुष्प महाजाली महाफली [महाजला महाफला नि०] कर्कोटकी कोशफलः [कोशफला नि०] राजकोशातकी ३२२ ।

---

१. गजपीपर ॥ २. (१) गरणी (२) कोयल ॥ ३. इन्द्रवरणा ॥ ४. (१) वज (२) घोडावज ॥ ५. काळी सारीवा ॥ ६. सारीवा ॥ ७. नावगम्यते सम्यक् ॥ ८. (१) वढवारडी (२) दूधीयो वछनाग ॥ ९. गळो ॥ १०. (१) वदाक (२) कूकडवेलो ॥ ११. कडवां तुरियां (२) घींसोडी ( सौराष्ट्रे) ॥

**हस्तिकोशातकी**—हस्तिकोशातकी ऐभी विशाला कटर्कच्छदा ।

**[1]क्षीरिणी**—क्षीरिणी पटुपर्णी [कटुपर्णी पु० नि०] धर्पणी पीतदुग्धिका ३२३ फेनक्षीरा हेमक्षीरा पीतक्षीरा करीषिणी [करीषणी नि०] हेमाह्वया हेमशिखा [हेमशिखी पु० नि०] हैमवती हिमावती ३२४ ।

**[2]शङ्खिनी**—शङ्खिनी धनहरी [वनहरी पु० नि०] तस्करी चोरपुष्पिका केशिनी ग्रन्थिका चण्डा [रण्डा पु०] श्वेतबुध्ना निशाचरी ३२५ ।

**[3]उंदिरकनी-आखुपर्णी**—आखुपर्णी [आखुकर्णी टी०] पुष्पश्रेणी न्यग्रोधी [पुत्रश्रेणी न्यग्रोधा पु० नि०] शम्बरी वृषा [वृषपर्णी टी०] चित्रा उपचित्रा रण्डा [रण्डाखु पु० रण्डाख्यु नि० चण्डा टी०] प्रत्यक्श्रेणी द्रवन्ती ३२६ ।

**[4]पोयणी**—पद्मिनी महावल्ली बिशिनी बिसवती पलाशिनी नालीकिनी [बिसिनी बिसनाभि पलाशिनी नालकिनी पु० नि०] नलिनी पुटकिनी ३२७ ।

**[5]श्वेतकमल**—कमल नलिन पद्म अरविन्द कुशेशय शतपत्र सहस्रपत्र राजीव पुष्कर ३२८ बिस प्रसूत [बिसप्रसून टी०] नालीक तामरस महोत्पल जलरुह् जलरुह जलजन्म जलज सरोरुह सरोरुह सरोजन्म सरोज पङ्करुह् पङ्करुह पङ्कजन्म पङ्कज [वारिरुह् वारिज सरसीरुह् टी०] ३२९ ।

**सिताम्भोज**—पुण्डरीक सिताम्भोज ।

**रक्तसरोरुह**—रक्तसरोरुह रक्तोत्पल कोकनद ।

**कैरविणी**—कैरविणी कुमुद्वती [कुमुदिनी टी०] ३३० ।

**उत्पल**—उत्पल कुवलय कुवेल कुवल कुव [कवल वल नि०] ।

**श्वेतोत्पल**—कुमुद [कुमुद् टी०] कैरव गर्दभाह्वय ३३१ ।

**नीलोत्पल**—इन्दीवर ।

**रक्तोत्पल**—हल्लक रक्तसन्ध्यक [रक्तसन्धिक नि०] ।

**सौगन्धिक**—सौगन्धिक कह्लार [कल्हार पु० नि०] ।

**बीजकोश**—बीजकोश वराटक ३३२ कर्णिका ।

**बिसु-पद्मनाल**—पद्मनाल मृणाल तन्तुल बिस ।

**केसर**—किञ्जल्क केसर ।

**मध्यदल-सरयम्भक**—सवर्तिका ३३३ ।

**पद्मकन्द**—करहाट शिफ [शफ पु०] ।

**पद्ममूल-उत्पलकन्द**—शालूक ।

**[6]गंठ-पद्मबीज**—पद्मबीज पद्माख्य [पद्माक्ष पु० नि०] पद्मकर्कटिका ३३४ ।

१. (१) दारुडी (गुर्जरे) (२) हिरवी (काश्मीरे) ॥ २. आंखफुटामणी ॥ ३. उंदरकणी ४. पोयणा ॥ ५ (१) कमळकाकडी (२) पबडा (सौराष्ट्रे) ॥

[1]**कुंयार-शूया**— वारिपर्णी पानीया पृष्ठगा [पानीयपृष्ठगा पु० नि०] कुम्भिका हठ ।

[2]**नीलिका**—जलशूक जलनीली नीली शैवाल शैवल [शेवाल शेपाल शेवल टी०] ३३५ ।

[3]**सोआ**—शतपुष्पा घोषा शताह्वा माधवी मिसि [मिषि नि०] अतिच्छत्रा छत्रपुष्पी [छत्रपुष्पा नि० अवाक्पुष्पा कारवी सहा ३३६ ।

[4]**श्वेतजीरा**—जीरक कणा अजाजी जरण कणजीरक ।

[5]**कालउ-जीरउ**—कारवी पृथ्वी सुगन्धा सुषवी [तुषवी नि०] पृथु ३३७ कुञ्ची [उपकुञ्ची नि० कुञ्चिका पु० नि०] काला उपकाला उपकुञ्चिका-उत्कुञ्चिका ।

[6]**लहसणु**--रसोन लशुन म्लेच्छकन्द अरिष्ट महौषध ३३८ महाकन्द ।

**लहसणविशेष**—गृञ्जन दीर्घपत्रक ।

[7]**डूंगली**—पलाण्डु यवनेष्ट सुकन्द [कुकन्द पु०] वक्त्रदूषण [वक्त्रभूषण पु० नि०] ३३९ हरण [करण पु० नि०] ।

**नीलडूंगली**—लतार्क दुर्द्रुम् ।

[8]**साथरि**—सप्तला बहुफेना सातला विमला [बिन्दुला पु० नि० अमला पु० अमली नि० ] ३४० सारी मरालिका दीप्ता फेना चर्मकसा [ चर्मकिसा पु० नि० ] यवा ।

[9]**प्रसारणी**—प्रमारणी चारुपर्णी भद्रपर्णी प्रतानिका ३४१ भद्रबला भद्रलता भद्रकाली महाबला सारणा [ सारणी पु० नि० ] सरणा [सरणी पु०] सुप्रसरा [ सुप्रसारा नि० ] राजबला ३४२ ।

[10]**ब्राह्मी**—ब्राह्मी वयःस्था मत्स्याक्षी ब्राह्मणी सोमवल्लरी सरस्वती सत्यवती सुस्वरा ब्रह्मचारिणी ३४३ ।

[11]**सूरणकन्द**—सूरण कण्डूर कन्द अर्शोघातिन् चित्रदण्डक ।

[12]**वृद्धारा**—वृद्धदारक [ वृद्धद्वारक पु० नि० ] आवेगिन् जीर्णवालक [ जीर्णवालुक नि० ] जुङ्गक ३४४ अजाण्डी [ छगलाण्डी टी० ] ऋक्षगन्धा [ वृक्षगन्धा टी० ] अन्त कोटपुष्पी [अन्तः कोटरपुष्पी पु० अन्तकोटकपुष्पी नि० ] ।

[13]**सूंचलि**—सुवर्चला मण्डूकी वदरा [ वरदा पु० ] आदित्यवल्लभा ३४५ मण्डूकपर्णी अर्कभक्ता आदित्यवल्ली सुखोद्भवा [ सुखोद्भिदा नि० ]।

[14]**भांगरउ**--भृङ्गराज भृङ्गरजस् भृङ्गार केशरञ्जन ३४६ अङ्गारक [ भङ्गारुक पु० अमारक नि० ] मेकरजस् भृङ्ग मार्कव ।

[15]**कासंद्रउ**—कासमर्द [ काशमर्द पु० ] अरिमर्द काल कनक [ कतक पु० नि० ] कर्कश [ कल ककर्कश नि० ] ३४७ ।

---

१. (१) जळकुम्भी (२) जळशंबाला ॥ २. सेवाळ ॥ ३. (१) सवा (२) सूवा ॥ ४. धोळुं जीरुं ॥ ५. शाहजीरुं ॥ ६. लसण ॥ ७. डुंगळी ॥ ८. (१) चीकाखाई (२) सीकाखाई ॥ ९. गंधमाङ्कलिया ( बगाळे ) ॥ १०. (१) बाम (२) नेवारी (३) मीरब्राह्मी ॥ ११. सूरणकन्द ॥ १२. वरधारो ॥ १३. सुरजमुखी ॥ भांगरो ॥ १४ (१) कासुन्दी (२) सुन्दरसेण ( पंचमहालप्रदेशे ) ॥

[1]**बथुआ**—वास्तुक शाकज्येष्ठ [ शाकश्रेष्ठ नि० ] प्रवाक क्षारपत्रक शाकवीर वीरशाक ताम्रपुष्प प्रसादक ३४८ ।

[2]**पलांक**—पालङ्क्या पालक्या क्षुरिका [ छुरिका नि० ] मधुसूदनी ।

[3]**डोडी**—जीवन्ती जीवनीया जीवनी [ जीवनीयजीवनी नि० ] जीववर्धनी [ जीववर्धिनी नि० ] ३४९ मङ्गल्यनामधेया [ माङ्गल्यनामधेया नि० ] शाकश्रेष्ठा यशस्करी ।

[4]**आंबडओ**—अम्ललोणिका चाङ्गेरी चुक्रिका [ चुक्रिया पु० ] रसा ३५० अम्बष्ठा अम्लोटिका [ अम्लोटिका पु० अम्लोलिका नि० ] दन्तशठा लोला अम्ललोलिका [ टोला अम्ल-टोलक पु० नि० ] नरेन्द्रमाला [ नरेन्द्रमातृ पु० नि० ] क्षुद्राम्ली चतुष्पर्णी लोणिका ३५१ ।

[5]**तण्डुलेजा**—तन्डुलीय तन्दुलीय [ पु० नि० ] मेघनाद तन्डुलिन् तन्डुलेरक [ तन्दुलिन् तन्दुलेरक पु० नि० ] गण्डीरक रक्तकाण्ड विषहरिन् [ विषहरी पु० ] अल्पमारिष ३५२ ।

**तण्डुलीयविशेष**—समठ [ समण्ठ नि० ] तोयवृत्ति गन्डीर तोयमञ्जरी समष्ठिला [ समण्ठीला नि० ] शोषहरी जलापामार्ग ओलक [ जलापामार्गतुल्यक नि० ] ३५३ ।

**मंदातांदुलिजओ—तम्डुलीयविशेष**—स्थलगण्डीर कर्बुर [ कर्बर नि० ] टङ्कदेशज ।

[6]**कमाइ**—काकमाची कामाची काकसाह्वा वायसी [ वृषायणी पु० नि० ] ३५४ ।

[7]**श्रीहस्तिनी**—श्रीहस्तिनी भूरुण्डी कुरण्डी [भूरुण्डी कुरण्डो नि०] कास्मरीरिपु [ कुरण्डिका अश्मरीरिपु पु०] ।

[8]**च(ऽऽ)डकुतिर**—सुनिषण्ण सुचिपत्र स्वस्तिक शितिवारक [ शिरिवारक नि० ] ३५५ श्रीवारक शितिवर वितुन्न कुक्कुट शिति [ शिखि पु० ] ।

[9]**मूला**—मूलक महाकन्द रुचिष्य हस्तिदन्तक ३५६ चरितका [ कुर्दितका पु० नि० ] नीलकण्ठ सेकिम [ सेकिमम् टि० ] हरिपर्णक

**बृहन्मूलक**—चाणक्यमूलक शालामर्कट [ शालमर्कट पु० नि० ] मरुसम्भव ३५७ विष्णुगुप्त विष्णुमत मिश्र बालेय [ स्थालेय पु० नि० ] मर्कट ।

[10]**हिलमोची**—हिलमोचा [ हलिमोची पु० ] शङ्खधरा जलब्राह्मी मोचिका ३५८ ।

[11]**कलम्बी**—कलम्बी शतपर्वा [ शतपूर्वा पु० ] कडम्बी [ केलम्बू नि० ] वायसी ।

[12]**कारेली**—कारवेल्ल [ कारवेल्ली नि० ] सुषवी कठिल्ल मृदुपर्णक ३५९ ।

[13]**पटोल**—पटोल पाण्डुफल कुलक कर्कशच्छद राजीफल कफहर राजमान्य [ राजिमत् नि० ] अमृताफल ३६० ।

[14]**ककोडा**—कर्कोट [ कर्कोट नि० ] किलासघ्न [ किलासघ्न पु० ] तिक्तपत्र [ तिक्तपत्र नि० ] सुगन्धक [ सुगन्धिक पु० ] ।

---

१. बथुआ ॥ २. पालक ३. (१) राडारुडी (२) खरखोडी (३) डोडी । ४. खाटी लुणी ॥ ५. तादळजो ॥ ६. (१) पीलडी (२) काळीपोपटी (३) मकोइ युनानी ॥ ७ हाथीसुंडा ॥ ८. जलकपासीया ॥ ९ मूळा ॥ १० हेलच (बंगाळे) शाकविशेषः ॥ ११. कलमी (बंगाळे) ॥ १२. कारेली ॥ १३. परवर ॥ १४ (१) ककोडा (२) कंटोळां

[1]कूष्माण्ड—कूष्माण्डक कर्कारु [कर्कारुस् टी०] ।

[2]कालिङ्गी कालिङ्गी [ कलिङ्गी पु० नि० ] बहुपुत्रिका ३६१ ।

[3]तूंबिणि—तुम्बी पिण्डफला इक्ष्वाकु तिक्तबीजा तिक्तबीजः पु० महाफला अलाबू ] अलाम्बू पु० ] क्षत्रियवरा कटुकालाबुनी [कटुकालाम्बुनी पु० ] ३६२ ।

[4]चीभडी—चिर्भिटी त्रपुसी वालुङ्की एर्वारु व्याडपत्रिका उर्वारु [ उर्वारु पु० ] कर्कटी मूत्रफला राजादनी लता ३६३ छर्दनी विपाण्डु

पक्वचिभडी—स्फुटी [ स्फटी पु० ]

[5]जीवक—कूर्चक शृङ्गक सर्ज दीर्घायुस् कूर्चशीर्षक ३६४ मङ्गल्यनामधेय जीवक [ प्रजीवक नि०] प्रियजीवक ह्रस्वाङ्गक मधुरक प्राणक चिरजीविन् ३६५

[6]पुष्करमूल—पुष्करमूल मूल वीर [ वीर पु० ] पुष्करनामक पौष्कर पुष्करजटा काश्मीर पद्मवर्णक [ पद्मकर्णक पु० ] ३६६ ।

[7]अह्मारि—वस्तगन्धा [ मस्तुगन्धा नि० ] सुगन्धा खरपुष्पी [ गन्धा खरपुष्पा पु० नि० ] शाकम्भरा कबरी [ कर्बरी नि० ] बर्बरी तुङ्गी [ चुङ्गी नि० ] पूतिमयूर ३६७ ।

गोल्हु-टिङ्कुरी-बिंबी—बिम्बी रक्तफला गोल्हा प्रवालफलशोभिका ओष्ठोपमफला तुण्डी तुण्डिका पीलुपर्णी ३६८ ।

[8]रोहीस—रौहिष श्यामक [ कामक नि० ध्यामक पु० ] पौर पूतीक [ पौरमूतीक पु० भूतीक नि० ] भूरि कत्तृण [ भूतिक तृण पु० भूतिकतृण नि० ] सौगन्धिक देवजग्ध शकल [ शकलि पु० नि० ] याम पुद्गल ३६९

गन्धतृण—मूस्तृण [ भूतृण पु० ] रौहिष [ रोहित पु० नि० ] छत्र अतिच्छत्रः [ छत्रातिच्छत्रकम् पु० नि० छत्रातिच्छत्रम् टी० ] कुटुम्बक. [ कुटुम्बकम् पु० नि० ] पूतीक भूरि पालघ्न [ भूतीक भूतपालघ्न पु०] मालातृण सुगन्धिक [ माला तृण सुगन्धिक पु० ३७० ।

[9]डाभ—दर्भ दभ [ दल पु० ] खर बर्हि वीर [ बर्हिवारा पु० बर्हि वारा नि० ] सूची कुप कुश सीरिन् [ सारी नि० ] वाजीरज गुन्द्रः [ गुन्द्रा पु० नि० ] पवित्र कुतुक [ कुतुप पु० कतप नि० ] ३७१ ।

[10]कासु—काश इक्षुगन्ध [ इक्षुगन्धा पु० नि० ] इक्षुकाण्ड श्मामलपुष्पक [ चामरपुष्पक पु० नि०] वायसेक्षु पोटगल काशेक्षु [काषाक्षु पु०] कोकिलाक्षक [ कोकिलाक्षक नि० ] ३७२ ।

बलप—बलप बल्वजा· बाल· केशिन् [ बल्वज बालकेशिन् पु० नि० ] दृढलता ।

[11]गांडउ-खेलडी—इक्षु रसाल गण्डीरी गण्डकिन् खड्गपत्रक [ क्षुरपत्रक नि० असिपत्रक टी० ३७३ ।

---

१. (१) कोल्हु (२) भूरु कोल्हु ॥ २ कलीकडी ॥ ३. कडवी तुंबडी ॥ ४. चीभडी ॥ ५. अष्टवर्गान्तर्गता दिव्यवनस्पतिः ॥ ६ पोकरमूल ॥ ७. (१) कानफोडी ( गु० ) ( २ ) हलवणी ( गु० ) ( ३ ) आकिवाकरण ( पंचमहालप्रदेशे ) ( ४ ) हुरहुर ( हिन्दी ) ॥ ८ (१) टिंडोळां (२) घीलोडां ॥ ९, रोहिसो ॥ १०. काम ॥ ११, कासडो ॥ १२, शेलडी ॥

**इक्षुभेद**--पुण्ड्र कान्तारक [ कोषकार टी० ] ।

[1]**नलु**--नल नड शून्यमध्य धमन [ गमन नि० ] मर्तक नट ३७४ आरण्यमलक [ अरण्यमलक पु० नि० ] रन्ध्रिन् पोटगल विभीषण ।

**नली**--नली नाली पु० ग्रामनलिका नाकुली केशकाविता केशकाञ्चिता पु० नि० ३७५।

**शरकड**--शर मुञ्ज बाणाह्वय स्थूलदर्भ पितामह गुन्द्र [गुञ्ज पु० नि०] तेजनक भद्रमुञ्ज याजनक क्षुर [ याजनकक्षुर नि० ] ३७६ ।

[2]**मुञ्ज**--मुञ्ज यज्ञिय मेध्य दृढत्वच् ब्रह्ममेखल ।

**बालतृण**—बालतृण शष्प शुक शालिक अङ्गुल ३७७।

[3]**तृण**-- तृण अर्जुन ।

[4]**घास**--घास यवस चारि

[5]**द्रोभ--दूर्वा**—दूर्वा शतपर्वा भार्गवी विजया जया ३७८ मङ्गल्या शाड्वला अनन्ता अमरी प्रतानिका रुहा सहस्रवीर्या श्यामाङ्गी हरिता हरिताली ३७९ ।

**श्वेतदूर्वा**—श्वेतदूर्वा गोलोमी [ शीतवीर्या शतवीर्या पु० नि० ] सिता लता ।

**गण्डदूर्वा-श्वेतदूर्वाविशेष**--गण्डदूर्वा गण्डाली वारुणी शकुलाक्षक ३८० ।

[6]**मोथ**--मुस्ता मुस्तक [ भद्रक नि० ] भद्रमुस्ता राजकशेरुक मुस्त [गुन्द्रा पु० गुन्द्री नि०] वराह वाङ्गय कुरुविन्द अम्बुदाह्वया [ अम्बुदाह्वय पु० नि० ] ३८१।

[7]**काकरहूले**—कुरुन्नट कैवर्तीमुस्तक जीविताह्वय [ जीवनाह्वय नि०] काण्डीरक [ काञ्चीरक पु० ] जीर्णबुध्न गोनर्द [ गोनन्द पु० ] गोपुर प्लव [ गोपुरप्लव नि० ] ३८२ शतपुष्प दाशपुर [दारपुर नि० ] वानेय परिपेलव जलमुस्ता मुस्तकाभ शेवालदलसम्भव ३८३

[8]**वीरण**--वीरण वीरतर वीरभद्र सुमूलक ।

[9]**उसीर**--उशीर अभय समगन्धिन् रणप्रिय ३८४ ।

[10]**लावजउ**—लामज्जक नलद अमृणाल लय [लव नि० ] लघु इष्टकापथक [ इष्टकावुष्पक पु० ] शीघ्र दीर्घमूल जलाशय ३८५।

[11]**धान्य**—धान्य सस्य सीत्य [ शैत्य पु० ] व्रीहि स्तम्बकरि ।

[12]**आशु-शालि**—आशु पाटल व्रीहि ।

[13]**षष्टिक-शालि**--गर्भपाकिन् षष्टिक ३८६ ।

[14]**शालि**--शालि कलम ।

[15]**कलमशालि**--कलम कलामक [कलायक नि०] ।

[16]**रक्तशालि**--लोहित रक्तशालि ।

---

१. नल ॥ २. मुज ॥ ३. तण ॥ ४. घास ॥ ५. (१) धरो (२) हरियाळो ॥ ६ मोथ ॥ ७. केवडीमोथ ॥ ८. वीरभण ॥ ९ वाळो ॥ १०. वसनो छोड ॥ ११ धान ॥ १२–१५, डांगर ॥ १६. लाल डांगर ॥

[1]महाशालि--महाशालि सुगन्धिक ३८७

[2]यव--यव हयप्रिय तीक्ष्णाशूक [तार्क्ष्यशूक नि०] ।

नीलयव--तोक्म ।

[3]मसूर--मङ्गल्यक मसूर ।

[4]कलायरा--कलाय सतीनक ३८८ ।

[5]चिणा--चणक हरिमन्थक ।

[6]उडद--माष मदन नन्दी वृष्य [सरी पु० नि०] बीजवर बलिन् ३८९ ।

[7]मुंग--मुद्ग प्रथन [प्रघन नि०] लोभ्य बलाट [वलाट नि०] हरित हरि ।

पीतमुद्ग--वसु खण्डीर प्रवेल जय शारद ३९० ।

कृष्णमुद्ग--प्रवर वासन्त हरिमन्थज शिम्बिक ।

वनमुद्ग--वनमुद्ग तुवरक निगूढक कुलीमक [गुलीमक पु० कुलीनक टि०] ३९१ खण्डिन् [खण्डिक पु० नि०] ।

[8]मोठ--राजमुद्ग--राजमुद्ग मकुष्ठक मयुष्ठक ।

[9]गोहूं--गोधूम सुमन ।

[10]वल्ल--वल्ल निष्पाव श्वेतशिम्बिक [सितशिम्बिक टी० शितशिम्बिक टि०] ३९२ ।

[11]कुलथी--कुलत्थ [कुलित्थ पु०] कालवृन्त ।

कुलथीविशेष--ताम्रवृन्ता [ताम्रवृन्त नि० ताम्रवृत्ता पु०] कुलत्थिका ।

[12]तूंअरि--आढकी तुवरी वर्णा [वर्ण्या पु०] ।

[13]कुल्माष--कुल्माष [कुल्मास टी० टि०] यावक ३९३ ।

[14]नीवार--नीवार वनव्रीहि ।

[15]श्यामाक--श्यामाक श्यामक ।

[16]कङ्गु--कङ्गु कङ्गुनी प्रियङ्गु पीततण्डुला ३९४ ।

कृष्णकङ्गु--मधुका ।

रक्तकङ्गु--शोभिका [शोभिता नि०] ।

सितकङ्गु--मुसटी [मुशटी नि०] ।

पीतकङ्गु-- माधवी ।

[17]कोद्रव--उद्दाल कोद्रव कोरदूषक [कूरदूषक पु०] ३९५ ।

---

१ डांगर ॥ २ जव ॥ ३. मसूर ॥ ४. लांग, वातकरवनस्पतिः 'लांग भागे टांग' इति गुर्जरोक्तेः ॥ ५ चणा ॥ ६. अडद. ॥ ७. मग ॥ ८. मठ ॥ ९. घउं ॥ १०. वाल ॥ ११. कळथी । १२. (१) तुवेर (२) तूअर (३) तुवर ॥ १३. (१) अर्धपक्व धान्यना बाकळा (२) भूवरी १४. नमारना चोखा ॥ १५. सामो ॥ १६. कांग ॥ १७. कोदरा ॥

[1]**चीनक**—चीनक काककङ्गु ।

[2]**जुवारि**—यवनाल योनल जूर्णाह्वय देवधान्य जोन्नाला [जोर्णाला नि०] बीजपुष्पिका ३९६ ।

[3]**सण**—शण भङ्गा मातुलानी ।

[4]**अलसी**—उमा क्षुमा अतसी ।

**गरटी**—गवेधुका [गवीधुका टी०] गवेधु ।

**अरण्यतिल**—वन्यतिल जर्तिल ३९७ ।

**श्यामतिल**—षण्डतिल तिलपिञ्ज तिलपेज ।

[5]**सरसव**—सर्षप कदम्बक तन्तुभ ।

**श्वेतसरसव**—सिद्धार्थ श्वेतसर्षप ३९८ ।

[6]**राई**—राजिका तीक्ष्णगन्धा क्षुताभिजनन क्षव अमुरी [आसुरी पु०] कृष्णिका कृष्णसर्षप राजसर्षप ३९९ ।

[7]**शमीधान्य**—**शिम्बाधान्य**—माष मुद्ग आदि ।

[8]**शूकधान्य**—यव गोधूम आदि ।

[9]**सस्यशूक**—सस्यशूक किंशारु

[10]**ऊंबी**—कणिश [कनेश टी० कनिश टि०] सस्यशीर्षक ४०० ।

**धान्यादिगुच्छ**—स्तम्ब

[11]**कणसडा**—नाल काण्ड ।

**तुच्छकणसडा**—पलाल ।

[12]**धान्यत्वचा**—तुष ।

[13]**भुस**—**दुंडा** बुस कडङ्गर ४०१ ।

१. (१) चीनो (२) च्येणो ॥ २ जवार ॥ ३. शण ॥ ४. अळसी ॥ ५. सरसव ॥ ६. राई ॥ ७. कठोळ ॥ ८. घउं जव आदि ॥ ९ सूंकळा १०. पोंख ॥ ११. कणसडां ॥ १२. (१) फोतरुं (२) कोदरु (३) कोरसु । १३ भूसुं ॥

# चतुर्थं परिशिष्टम् ।

## हेमचन्द्रीयनिघण्टुशेषटीकाकृन्निर्दिष्टमूलशब्दभाषार्थानां मूलसूत्रात्मकपु०आदर्शोल्लिखितभाषार्थैः सह तुलना ।

| श्लोकः | पु० अर्थः | टी० अर्थः |
|---|---|---|
| ४ | अशोक | अशोक |
| ५ प्र० | ० | वउल बकुल |
| ७ पू० | तिलक | तिलकु |
| ८ | कांचनार | कांचणयरु |
| १० पू० | चंपक | चांपउ |
| ११ | ० | नागकेसर |
| १२ पू० | नागकेसर | ० |
| १३ पू० | ० | कयंब |
| १५ पू० | कदम्बकत्रयम् | कयब |
| १६ | ० | कुडउ |
| १७ पू० | कुटजम् इन्द्रयव | कुटजबीज |
| १८ | शिरीष | सिरीसु |
| १९ | ० | पाडला |
| २० | पाटलाद्वयम् | श्वेतपाटला |
| २१ | अगरु | अगर |
| २२ पू० | कृष्णागरु | कृष्णागरु |
| २३ | श्रीखण्ड | चंदन |
| २४ पू० | बाबरु श्रीखण्ड | बाबरउ |
| २५ पू० | रक्तचंदन | रतांजणी |
| २६ पू० | चन्दनचतुष्कम् | पतंग |
| २६ | ० | कणयर |
| २७ पू० | कर्णिकार | ० |
| २८ पू० | पुन्नाग | पुन्नाग |
| २८ | अगस्त्य | अगथियउ |
| २९ | श्वेतकणवीर | श्वेतकणवीर |
| ३० पू० | कणवीरद्वयम् | रक्तकणवीर |
| ३० | ० | तमाल |
| ३१ पू० | तमाल | तमालपत्र |
| ३२ पू० | सूक्ष्म एलची | एलची |

| श्लोकः | पु० अर्थः | टी० अर्थः |
|---|---|---|
| ३३ पू० | एला | कक्कोली एला |
| ३४ पू० | कर्पूर | कपूर |
| ३५ पू० | कक्कोल | कंकोल |
| ३६ पू० | लवंग | गवल |
| ३७ पू० | नलिका=नलीनाम | नलिका |
| ३८ पू० | अतिमुक्त | अमीनउ |
| ३९ पू० | पिप्पल | पीपल |
| ३९ उ० | पारसपीपल | ० |
| ४० पू० | पीपरी | ० |
| ४० | ० | पींपरी |
| ४१ पू० | पिप्पलविशेष | ० |
| ४२ पू० | वट | वड्ड |
| ४३ पू० | उदुंबर | उंबरा |
| ४४ पू० | काकुंबरी | काकुंबरी |
| ४५ पू० | राजादनि | रायणी |
| ४६ पू० | पियालु | पियाल |
| ४७ | आम्रातक=अंबाडा | अंबाडओ |
| ४८ क्षीरार्कपर्णः | ० | आकु |
| ४९ पू० | अर्क | ० |
| ५० पू० | थोहरी | थोहरी |
| ५१ पू० | करमर्दक | करमदा |
| ५२ पू० | जंबीर | जंबीर |
| ५२ | करुण | करणा |
| ५४ | बीजपूरक | बीजउरउ |
| ५५ | मधुकर्कटी= मधुकाकडी | ० |
| ५६ | आंबिली | आंबिली |
| ५७ | तिंतिडीक | तिंतिडीक |
| ५९ पू० | ० | आम्लवेतस |

| श्लोकः | पु० अर्थः | टी० अर्थः |
|---|---|---|
| ६० पू० | अम्लवेतसद्वयम् | ० |
| ६१ | कपित्थ | कवठी |
| ६२ | अस्मंतक=आसंदानाम | आसन्ना |
| ६३ | नारंग | नारिंगु |
| ६४ | ० | खदिर |
| ६५ | खदिरद्वयम् | श्वेतखदिर |
| ६६ | अरिमेद=अहिमार | अरंजु |
| ६८ प्र० | ० | सींबली |
| ६८ | सींबलिद्वयम् | शाल्मलिविशेष |
| ६९ तृ० | ० | सीसम |
| ७० पू० | शिंशपा | शिंशपाविशेष |
| ७१ | बदरीद्वयम् | बोरि |
| ७३ तृ० | ० | खेजडी |
| ७३ | खीजडी | सागरी |
| ७४ | ईंगोरि | हिंगोटु |
| ७६ पू० | गुग्गुलु | गूगलु |
| ७६ | लींब | पारिभद्र |
| ७७ | करीर | कइर कयर |
| ७८ | विकंकत = विकाकलिनाम | काक |
| ८० पू० | बीली | बीली |
| ८१ पू० | हरीतकी | हरडइ |
| ८२ | बहेडउ | बहेडा |
| ८३ | आमली | आमला |
| ८५ पू० | अरणि | अरणी |
| ८७ पू० | टींहू | अरलू |
| ८८ | ० | शिरघू |
| ८९ पू० | शिग्रुद्वयम् | ० |
| ९० | तिनिश | तिनिश |
| ९२ पू० | पलास | पलाश |
| ९३ पू० | धव | धव |
| ९५ पू० | श्रीपर्णी | सिविनि |
| ९७ पू० | सप्तपर्ण | सातवनउ=साद डिउ सतालू |

| श्लोकः | पु० अर्थः | टी० अर्थः |
|---|---|---|
| ९९ पू० | आरग्वध=गिरि-किरमालउ मालउ | |
| १०१ पू० | ० | बीअउ |
| १०१ | बीजकद्वयम्=जीवक | ० |
| १०२ | सर्ज=ओकना | सागु |
| १०३ | अर्जुन | अर्जुन |
| १०५ पू० | शाकवृक्ष | शाक |
| १०६ | धामण | धमणउ |
| १०७ | शल्लकी | ० |
| १०८ पू० | ० | सरलउ=कुंदुरु |
| ११० पू० | देवदारुत्रयम् | देवदारु |
| १११ पू० | मधूक | ० |
| १११ | ० | महूअउ |
| ११२ | मधूकभेद | महाडोलु |
| ११३ | ० | टींहू |
| ११४ | तिन्दुकद्वयम् | काकटींहू |
| ११५ | ० | श्वेतलोध्र |
| ११७ प्र० | ० | मुनिलोध्र |
| ११७ पू० | लोध्रद्वयम् | ० |
| ११८ पू० | भूर्ज | भूर्ज |
| ११९ | गूंदी | गूंदी |
| १२० 'मत्फल' | ० | वडहर |
| १२० तृ० | ० | कटहर |
| १२० | लकुच | ० |
| १२२ वसन्तपादप | ० | आंबउ |
| १२२ | आम्र | ० |
| १२४ पू० | राजाम्र | राजाम्र |
| १२५ सुगन्धिपत्रा | ० | जांबू |
| १२५ | जम्बूत्रयम् | जम्बूविशेष |
| १२७ | मींडहलु | मयणहल |
| १२८ पू० | कूबावृक्ष | कूबउ |
| १२९ पू० | निचुल | इजर |
| १३० पू० | ० | वेतस |
| १३१ पू० | वेतसद्वयम् | वेतसविशेष |
| १३२ | वरुण | वरुणा |

| श्लोकः | पु० अर्थः | टी० अर्थः | श्लोकः | पु० अर्थः | टी० अर्थः |
|---|---|---|---|---|---|
| १३३ | अकुल | आंकुल | १६६ | गंगेटी | गांगेटी |
| १३५ पू० | भल्लातक | भीलामा | १६८ पू० | दारुहरिद्रा | दारुहलद |
| १३६ पू० | अरिष्ट=आरीठव | अरीठा | १६९ | ग्रन्थिपर्णी=गांठिवनी | थुणीयउ |
| | ओसड | | १७१ | स्पृक्काद्वयम् | पीक |
| १३७ | निंब | नींब | १७२ | विडग | विडग |
| १३८ | महानिम्ब=राजनिम्ब | | १७३ | ऋषभक=इंद्राष | ऋषभु |
| | | बकायणि | १७४ | ऋद्धि, वृद्धि | ऋद्धि, वृद्धि |
| १३९ तृ० | पीलु | पीलू, बेणु | १७५ | पद्मक | पदमाकु |
| १४० पू० | अक्षोड | अखोड | १७६ | कंकुष्ठ | ककुष्ठ |
| १४३ पू० | रुद्राक्ष | रुद्राक्ष | १७७ | परूषक | फलहा |
| १४३ | पुत्रजीव | पुत्रजीव | १७८ पू | ० | महाखर्जूरिका |
| १४५ पू० | ० | करंजूयउ | १७८ | खजूरि | पिंडखजूरि |
| १४५ | करञ्जत्रयम् | ० | १७९ पू० | ताल | ताड |
| १४६ | करंज=तिणिगछि | करञ्जभेदा· | १८० पू० | नालिकेर | नालेर |
| १४७ | रोहीतक | रोहीडउ | १८१ घोण्टा | ० | सोपारी |
| १४८ | कट्फल | कायफल | १८१ पू० | पूग | फोफलु |
| १४९ तृ० | ० | दाडिमसार | १८१ | ० | हिंताल |
| १४९ | दाडिम | ० | १८२ पू० | हिंताल | ० |
| १५० | धातुकी | धाहुडी | १८२ | केतकी | ० |
| १५२ पू० | सल्लकी | सालरि | १८४ | ० | निर्गुंडी |
| १५४ | एरण्डद्वयम् | एरंड | १८५ | निगुडी | द्वितीया निर्गुंडी |
| १५५ पू० | किंपाक | ० | १८७ पू० | निर्गुंडी | ० |
| १५६ पू० | कपिल्यक | कंपीलउ | १८८ | प्रियंगु | प्रियंगु |
| १५६ | कतकफल | कतकफल | १८९ | जेठीमधु | जेठीमधु |
| १५७ पू० | ० | वमनी | १९० | आसंधि | आसगधि |
| १५७ | कर्पासी | ० | १९१ पू० | ० | मींढासिंगी |
| १५८ | ० | कामवृक्षा, वंदा | १९२ पू० | मेषशृङ्गी | ० |
| १५९ पू० | कामवृक्ष | वंदाभेद | १९३ पू० | कर्कटशृङ्गी | काकडासिंगी |
| १६० पू० | आटरूषक | अरडूसा | १९४ पू० | रींगणी | रींगणी |
| १६१ पू० | तुंबरु | तुंबुरु | १९५ पू० | रिङ्गणीद्वयम् | बृहद्रींगणी, |
| १६२ पू० | कदली | केलि | | | डोल्हरी |
| १६२ | तगर | तगर | १९६ तृ० | ० | विदारि |
| १६३ | ब्रह्मफल | पघनस | १९७ | विदारीद्वयम् | क्षीरविदारिका |
| १६४ | मुष्कक=मुंसा | मोषउ | १९९ पू० | पृष्ठपर्णी=पीठवनी | पीठवनी |
| १६५ | वंश | वांसु | २०१ पू० | गोखरु | गोखरु |

| श्लोकः | पु अर्थः | टी० अर्थः |
| --- | --- | --- |
| २०२ पू० | दांति | दांती |
| २०३ | इन्द्रवारुणी | दर्तीविशेष |
| २०५ | अपामार्ग | आझाझाडा |
| २०६ | आर्द्रकम्, सुठी | सूठि |
| २०८ शोफघ्नी च | ० | ·साटहडा |
| २०८ | साटडीद्वयम् | साटहडी |
| २०९ | कागुणी | मालकागुणी |
| २१० | माषवनी | माषवनी |
| २११ | मुद्गवनी | मुदगवनी |
| २१२ | भूम्यामली | भुइंआमली |
| २१४ पू० | हरिद्रा | हलद्र |
| २१५ पू० | प्रपुन्नाट | पमाड |
| २१६ पू० | ० | मोडथेरी |
| २१७ पू० | मुण्डीद्वयम् | महामुंडी |
| २१८ | बाकुची=बावची | बावची |
| २१९ | रास्ना | राठ |
| २२० पू० | ० | नउली |
| २२१ पू० | नाकुली=नउली-द्वयम् | गधनउली |
| २२३ पू० | अर्जक=आजाद्वयम् | आजऊ |
| २२४ पू० | तुलसी | तुलछी |
| २२५ पू० | मरुबक | मरुअउ |
| २२६ | त्रायमाण | त्रायमाण |
| २२८ | यवासकद्वयम् | धमासउ |
| २२९ | किरात | किरायता |
| २३० | कुष्ठ | उपलोठ |
| २३१ | वालक=वालउ | वालउ |
| २३२ | सढि | शढि |
| २३३ | एलुवालुक | एलीयउ |
| २३५ पू० | कुङ्कुमद्वयम् | केसर, कुंकुम |
| २३६ पू० | ० | आइ |
| २३६ | आति | ० |
| २३७ | जातीफल | आइफल |
| २३९ गणिका | ० | जूही |
| २३९ | जूही | सुवर्णजूही, |

| श्लोकः | पु. अर्थः | टी. अर्थः |
| --- | --- | --- |
| | | शंखयूथिका |
| २४० पू० | कुंद | कुद |
| २४१ | नेमाली | नीमाली |
| २४२ | विचकिल | केवडी |
| २४३ | वार्षिका=द्विवेलु | मल्लिकाविशेष |
| २४४ | कुमारी | सेवंत्री |
| २४५ | ० | वानउ |
| २४७ पू० | सहचरमेदा= सेहरीआश्रयम् } | कटासेलउ |
| २४७ | किंकिरात | ० |
| २४८ | चित्रक | चित्रक |
| २४९ | वासन्ती | वासन्ती |
| २५१ पू० | नीली | गुली |
| २५२ पू० | दमणउ | दमनउ |
| २५३ मदनश्च | ० | धतूरउ |
| २५३ | धत्तूरक | ० |
| २५५ पू० | शङ्खपुष्पी | शखाहुली |
| २५५ | कचूरउ | कचूर |
| २५७ पू० | अजमोद | अजमोद |
| २५८ | सहदेवाद्वयम् | सहदेवी |
| २५९ पू० | पापडउ | पीतपापडा |
| २५९ | गोजिह्विका | गोभी (? गोजीभी) |
| २६१ पू० | बल | बला |
| २६३ | वलत्रितयम् | वलात्रितयम् |
| २६४ | मुशली | मुसली |
| २६५ | हिंगु | हिंगु |
| २६७ पू० | वाफी | हिंगुउत्री |
| २६८ पू० | काकजङ्घा | कालउधाडउ |
| २६९ पू० | काकनाशा | कायणी |
| २६९ | पाषाणभेद | पाषाणभेद |
| २७० | हपुषा=हउसीद्वयम् | हपुषाभेद |
| २७१ | घटरवाली | घूघरु, शणहली |
| २७२ | शण | शण |
| २७३ पू० | कुसुम्भ | कुसुंभउ |
| २७४ पू० | शालिवनी | सावनील |

| श्लोकः | पु० अर्थः | टी० अर्थः | श्लोकः | पु० अर्थः | टी० अर्थः |
|---|---|---|---|---|---|
| २७५ पू० | भारंगी | ० | ३१२ | बचा | श्वेतबचा |
| २७६ पू० | भाउली | भाडंगी | ३१४ नागनिह्वा | ० | उत्पलशारिवा |
| २७७ पू० | जवासी | जवासी | ३१४ | ऊपलशारी | चन्दनशारिवा |
| २७८ पू० | तेजवती=मींती | तेजवती | ३१६ | मूर्वा | पीलडनी |
| २७९ पू० | भीहाली | भीहाली | ३१७ | लाङ्गली=राडीगारी | राडागारी |
| २८० पू० | तालीस | तालीसपत्र | | | |
| २८१ पू० | ० | छड | ३१९ | गलो | गुडूची |
| २८२ पू० | मांसी | मासीभेद | ३२० | देवाली=पांडुरहूली | |
| २८३ पू० | सुरा | एकांगी | | | देवदाली |
| २८४ पू० | प्रपुण्डरीक | पद्म | ३२१ | कोशातकी | ० |
| २८५ पू० | जऊ | जन्तुवार | ३२२ | ० | कडूई,विशाली, |
| २८५ | कोरिणि | रोहा | | | घीसोडी |
| २८६ | ० | खयरी | ३२३ पू० | कर्कोटिका | ० |
| २८७ | रक्तपादीद्वयम् | हसपदी | ३२४ | क्षीरिणीद्वयम् | क्षीरिणी |
| २८८ | जलपिप्पली | जलपिंपली | | | स्वर्णक्षीरिणी |
| २८९ | वक्षहुल | बूअ | ३२५ | शङ्खिनी | शङ्खिनी |
| २९० | अतिविषद्वयम् | अतिविसु | ३२६ | उन्दरकनी | उंदिरकनी |
| २९१ | मेदाद्वयम् | मेद | ३२७ | पद्मिनी | पोयणी |
| २९३ | गुञ्जा | चिणउठी | ३२९ | ० | श्वेतकमल |
| २९५ पू० | पाठा | पाठ | ३३३ पू० | ० | बिसु |
| २९७ | शतावरी | शतावरी | ३३४ पू० | ० | पद्ममूल |
| २९९ | कटुक | कडू | ३३४ | कमलमेदा | गंठ |
| ३०१ | कपिकच्छू | कउंछि | ३३५ पू० | ० | कैंगा शाक, छूषा |
| ३०३ पू० | मञ्जिष्ठा | मजीठि | ३३६ | सोआ | सोआ |
| ३०४ पू० | मरिच | मिंरी | ३३७ पू० | ० | श्वेतजीरा |
| ३०५ पू० | पींपली | पींपलि | ३३८ पू० | जीरकद्वयम् | कालउ जीरउ |
| ३०६ पू० | पींपलीमूल | पींपलीमूल | ३३९ महाकन्द. | ० | ल्हसणु |
| ३०६ | चविका | चविक | ३३९ पू० | लसण | ० |
| ३०७ | गजपींपली | गजपींपली | ३४० हरणः | ० | डूंगली |
| ३०७ | ० | गिरणई | ३४० पू० | डूगली | ० |
| ३०८ पू० | ० | श्वेतगिरणई | ३४१ पू० | साथल | साथरि |
| ३०९ पू० | गिरिनई | कालीगिरणई | ३४२ | प्रसारणि | प्रसारणी |
| ३१० पू० | इन्द्रवारुणी | ० | ३४३ | ब्राह्मी | ब्राह्मी |
| ३११ पू० | इन्द्रवारुणी | ० | ३४४ पू० | सूरण | सूरणकन्द |
| ३१२ पू० | ० | वज | ३४५ पू० | वृद्धदारुक | वृद्धारा |

| श्लोकः | पु० अर्थः | टी० अर्थः |
|---|---|---|
| ३४६ पू० | सुवर्च्चला | सूंचलि |
| ३४७ पू० | भृङ्गराज | भागरउ |
| ३४७ | काशमर्द | कासंदउ |
| ३४८ | वाथल | वथुआ |
| ३४९ पू० | पालक्या | पलांक |
| ३५० पू० | डोडी | दोडी |
| ३५१ | चाङ्गेरी= आंबउत्री | आंबउत्री |
| ३५२ | तन्दुलीयक | तंडुल्लेजा |
| ३५४ पू० | मंटातावुलिजओ | ० |
| ३५४ | काकमाची | कमाइ |
| ३५६ पू० | शितावर | ष (? ख)-डकूतिर |
| ३५७ पू० | ० | मूला |
| ३५८ पू० | मूलक | बृहन्मूलक |
| ३५९ | कारेली | कारेली |
| ३६० | पटोल | पटोल |
| ३६१ पू० | कर्कोडी | कंकोडा |
| ३६२ | तुम्बी | त्रूंबिणि |
| ३६४ प्र० | ० | चीभडी |
| ३६४ पू० | चीभडीद्वयम् | ० |
| ३६५ | जीवक | जीवक |
| ३६६ | पुष्करमूल | पुष्करमूल |
| ३६७ | साथरि | जहारि |
| ३६८ | बिम्बी | गोल्हू, टिङ्करी |
| ३६९ | ० | रोहीस |
| ३७० | रोहिषद्वयम् | गन्धतृण |
| ३७१ | दर्भ | डाभ |
| ३७२ | काशद्वयम् | कासु |
| ३७३ | ० | गाडउ, सेलडी |
| ३७४ पू० | सेलडी | ० |
| ३७५ पू० | ० | नलु |
| ३७५ | नल | ० |
| ३७६ | ० | शरकड |
| ३७७ पू० | मुञ्ज | ० |

| श्लोकः | पु० अर्थः | टी० अर्थः |
|---|---|---|
| ३७७ | बालतृण | ० |
| ३७९ पू० | ० | ग्रोम |
| ३८० पू० | श्वेतदूर्वा | ० |
| ३८० | दूर्वात्रयम् | ० |
| ३८१ | मोथ | मोथ |
| ३८३ | ० | काकरहूले |
| ३८४ | औशीर | उसीर |
| ३८५ | लामज्जकम् | लावंजउ |
| ३८६ | व्रीहि | ० |
| ३८७ | शालिभेदा· | शालिविशेष |
| ३८८ शूक | ० | यव |
| ३८८ पू० | यव | ० |
| ३८८ तृ० | ० | मसूर |
| ३८९ खण्डिकश्च | ० | कलायरा |
| ३८९ पू० | ० | चिणा |
| ३८९ | ० | उडद |
| ३९० पू० | ० | मुंग |
| ३९२ खण्डी च | ० | मुद्गविशेष |
| ३९२ पू० | ० | मोठ |
| ३९२ सुमन· | ० | गोहूं |
| ३९३ प्र० | ० | कुलथी |
| ३९३ पू० | ० | कुलथीविशेष |
| ३९३ तृ० | ० | तूंअरि |
| ३९४ प्र० | ० | नीवार |
| ३९६ | ० | जुवार |
| ३९७ स्यात् | ० | सण |
| ३९७ पू० | ० | अलसी |
| ३९७ तृ० | ० | गररी |
| ३९७ | ० | अरण्यतिल |
| ३९८–स्तिलपेजः | ० | श्यामतिल, श्वेततिल |
| ३९८–स्तन्तुभः | ० | सरसव |
| ३९९ | ० | असुरी |
| ४०० तृ० | ० | ऊंबी |
| ४०१ | ० | कणसला, प्रधान सिरा |

| श्लोकः | पु० अर्थः | टी० अर्थः | श्लोकः | पु० अर्थः | टी० अर्थः |
|---|---|---|---|---|---|
| ४०१ प्र० | ० | गुंछड | ४०१ पलालः | ० | पराल |
| ४०१ | काण्ड· | धानना | ४०१ तुषः | ० | तुस |
| | | कणसडा | ४०१ | ० | भुस, छुंका |

---

# पञ्चमं परिशिष्टम् ।

## हेमचन्द्रीयनिघण्टुशेषटीकायां टीकाकृता श्रीश्रीवल्लभोपाध्यायेनोद्धृतानामवतरणश्लोकादीनामकारादिवर्णक्रमेणानुक्रमणिका ।


| श्लोकादि | पृष्ठम् |
|---|---|
| **अ** | |
| अक्षोट पार्वतीयश्च [धन्व० ५-६० पत्र १८०] | ७८ |
| अगरुः प्रवरं लोह [धन्व० ३-२५ प० ९८] | १५ |
| अगस्त्याह्वो बङ्गसेनो [ ] | १८ |
| अगुरु. स्याच्छिंशपाया [महेश्वर] [ ] | ४० |
| अग्निमन्थोऽग्निमथन–[इन्दु] [ ] | ४९ |
| अग्निमन्थोऽग्निमथन–[चन्द्रनन्दन] [ ] | ४९ |
| अङ्कोठोऽङ्कोलको रेची [धन्व० १-२५८ प० ६०] | ७४ |
| अङ्गारवल्ली बाळेय- [अमर० का० २ वर्ग ४-९०] | १५० |
| अङ्गारवल्ली शार्ङ्गस्था [धन्व० ५-११० पा० १९१] | ८१ |
| अजगन्धा खरपुष्पी [धन्व० १-१०० प० ९०] | १९७ |
| अजमोदा बस्तमोदा [धन्व०२-९८ प० ८९] [ ] | १४१ |
| अजमोदा ब्रह्मकुशा [चन्द्र०] [ ] | १४१ |
| अजशृङ्गी मेषशृङ्गी [धन्व० १-८७ प० २३] | १०७ |
| अतसी मसृणा नील- [ ] | २१६ |
| अतिमुक्त पुण्ड्रक स्यात् [अमर० का० २ वर्ग ४-७२] | २३ |
| अतिमुक्तो माधवी च [धन्व० ५-१५३ प० २०१] | २३ |
| अतिविषा शुक्लकन्दा [धन्व० १-१० प० ८] | १५८ |
| अथ कमलोत्तरम् [अमर० का० २ वर्ग ९-१०६] | १४९ |
| अथ कारवेल्ल कटिल्लक [अमर० का० २ वर्ग ४-१५५] | १५३ |
| अथ कुटज शक्रो [अमर० का० २ वर्ग ४-६६] | ११ |
| अथ द्वयो पाटलि पाटलाऽमोघा [अमर० का० २ वर्ग ४-५४] | १३ |
| अथ महौषधम् [अमर० का० २ वर्ग ४-१४८] | १८४ |
| अथ वेतसे [अमर० का० २ वर्ग ४-२९] | ७२ |
| अथ सिन्दुक । सिन्दुवारे- [अमर० का० २ वर्ग ४-६८] | १०३ |
| अथो वेल्लममोघा [अमर० का० २ वर्ग ४-१०६] | ९५ |
| अनूपसंभव प्राय [वाचस्पति ] | २०१ |
| अन्य पलाण्डुस्तु [धन्व० ४-७१ प० १४८] | १८४ |
| अन्या क्षीरविदारी स्याद् [धन्व० १-१४९ प० ३५] | ११० |
| अन्या तु दक्षिणावर्त्ता [ ] | १०७ |

| श्लोकादि | पृष्ठम् |
|---|---|
| अन्या दारुहरिद्राऽपि [धन्व० १–५७ प० १८] | ९२ |
| अन्या महासुगन्धा तु [धन्व० ४–१०५ प० १५५] | १२२ |
| अन्याऽश्वत्थफला [धन्व० ६–९ प० ७०] | १४८ |
| अन्या स्कन्धफला स्वाद्वी [मदनपाल] [ ] | ९९ |
| अन्येन्द्रवारुणी प्रोक्ता [धन्व० १–२५० प० ५८] | १६९ |
| अन्यो द्वितीयो विख्यात [ ] | २१५ |
| अपामार्गश्च शिखरी [धन्व० १–२६० प० ६०] | ११४ |
| अपामार्ग शैखरिको [अमर० का० २ वर्ग ४–८८] | ११४ |
| अप्रच्युतानुत्पन्नस्थिरै– [ ] | २ |
| अम्लिताऽपरिम्लान– [ ] | १३५ |
| अम्बुप्रसादनफल [विश्वलोचन–रान्तवर्गे १८९] | ८६ |
| अम्लभावाञ्जयेद् वातं [धन्व० १–२०७ प० ४९] | ४६ |
| अम्लीका चुक्रिका चुक्रा [धन्व० ५–३३ ] | ३४ |
| अम्लोऽम्लवेतसो भीमो [धन्व० २–९६ ] | ३५ |
| अरिमेदोऽरिमेधश्च [धन्व० ५–१३३ प० १९७] | ३८ |
| अरिष्टकस्तु मङ्गल्यः [ ] | ७६ |
| अर्कः सूर्याह्वयः पुष्पी [धन्व० ४–१३ प० १३६] | २९ |
| अर्कः सूर्येऽर्कपर्णे च [विश्वलोचन-कद्वितीये श्लो० ५] | २९ |

| श्लोकादि | पृष्ठम् |
|---|---|
| अर्काह्ववसुकास्फोट– [अमर० का० वर्ग ४–८०] | ३० |
| अर्कोऽर्कपर्णे स्फटिके [महेश्वर] [ ] | २९ |
| अर्थात् निघण्टयत्यस्मा– [व्याडि ] | ४ |
| अलर्को धवलार्के स्यात् [विश्व० कतृतीये श्लो० ३५] | ३० |
| अवल्गुज सोमराजी [अमर० का० २ वर्ग ४–९५] | १२१ |
| अव्यण्डा वृषभी गुप्ता [इन्दु० ] | १६४ |
| अशोकः शोकनाशश्च [धन्व० ५–१५९ प० २०३] | ६ |
| अशोका रोहिणी तिक्ता [धन्व० १–३८ प० १५] | १६३ |
| अश्मन्तक इन्द्रकस्तु [धन्व० १–१९४ प० ४६] | ३६ |
| अश्वखुर श्वेतपुष्पी [धन्व० ४–८४ प० १५१] | १६८ |
| अश्वगन्धा वाजिगन्धा [धन्व० १–२७२ प० ६२] | १०६ |
| असुरी राजिका राजी [धन्व० ४–६० प० १४६] | २१८ |
| अस्य फले मातुल– [अमर० का० २ वर्ग ४–७८ | १२९ |
| अहार्यं बहुवीर्यं च [इन्दु० ] | ४७ |
| **आ** | |
| आतोलनी योगवहा [इन्दु० ] | १७१ |
| आम्रश्चूतो रसालश्च [धन्व० ५–१ प० १६९] | ६८ |
| आम्रातक पीतनक [धन्व० ५–१२ प० १७१] | २९ |

| श्लोकादि | पृष्ठम् |
|---|---|
| आरग्वधो दीर्घफलो [धन्व० १–२१९ प० ५२] | ५६ |
| आशुव्रीहिः पाटलः स्यात् [ ] | २०८ |
| आम्बाख्या शालि-शीघ्रयो [दुर्ग ] | २०८ |
| **इ** | |
| इङ्गुदो भल्लकोवृक्षः [ ] | ४३ |
| इज्जलो हिज्जलो गुच्छ– [ ] | ७२ |
| इति वर्णनिघण्टोऽय [चामुण्डपण्डित ] | ४ |
| **उ** | |
| उत्तालकस्तिल्वकञ्च [ ] | ६५ |
| उदकीर्यस्तृतीयोऽन्य [धन्व० ५–१०९ प० १९१] | ८१ |
| उदुम्बरस्तु यज्ञाङ्ग [ ] | २७ |
| उशीरं च मृणालं स्या– [धन्व० ३–१४ प० ९६] | २०६ |
| **ऊ** | |
| ऊनोऽम्लेन रसेनेति [व्याडि ] | १८३ |
| **ऋ** | |
| ऋद्धिर्वृद्धि सुख सिद्धी [धन्व० १–१४५ पत्र ३४] | ९६ |
| ऋषभो धूर्वहो धीरो [धन्व० १–१२५ प० ३०] | ९६ |
| ऋष्यप्रोक्ता स्वयङ्गुप्ता [इन्दु ] | १६४ |
| **ए** | |
| एते च हिन्तालसहिता [अमर० का० २ वर्ग ५–१६९] | १०२ |
| एरण्डस्तरुणश्चित्र– [धन्व० १–२९५ प० ६७] | ८५ |
| एलावालुकमालूकं [धन्व० ३–७६ प० १११] | १२८ |
| **ऐ** | |
| ऐन्द्रीन्द्रवारुणीन्द्राह्वा [धन्व० १–२४८ पत्र. ५८] | १६८ |
| **क** | |
| ककुभस्त्वर्जुन पार्थो [ ] | ५८ |
| कक्कोल्क कृतफल [धन्व० ३–३७ प० १०२] | २२ |
| कङ्कुष्ठ काककुष्ठ तु [धन्व० ३–१४१ प० १२३] | ९७ |
| कङ्केल्लिर्हेमपुष्पश्च [ ] | ६ |
| कटङ्कटेरी पर्जन्या [धन्व० १–५९ ] | ९२ |
| कटुक त्रपुस प्रोक्त [ ] | १९५ |
| कटुका मत्स्यशकुला [धन्व० १–३७ पत्र १४] | १६३ |
| कटुकालाबुनी तुम्बी [धन्व० १–१७० पत्र ३९] | १९५ |
| कट्फल सोमवल्कश्च [धन्व० १–७३ प० २१] | ८२ |
| कण्ट आर्तस्वरे [वोपदेव धातुपाठ ] | १९ |
| कण्टकारी च दुःस्पर्शा [धन्व० १–९५ प० २५] | १०८ |
| कतकश्छेदनीयश्च [धन्व० ३–१७२ प० १२९] | ८६ |
| कतृण शकलं भूरि [धन्व० १–८० प० २१] | १९८ |
| कदली वारणबुसा [अमर० का० २ वर्ग ४–११३] | ८९ |

| श्लोकादि | पृष्ठम् |
|---|---|
| कदली सुकुमारा च [धन्व० ४-७५ प० १४८] | ८९ |
| कपित्थोऽथ दधित्थश्च धन्व २-१०२ प० ९०] | ३६ |
| कमल श्वेतमम्भोज [ ] | १७७ |
| करञ्जो नक्तमालश्च [धन्व० ५-१०७ प० १९१] | ८० |
| करमर्दकमाविग्न [धन्व० ५-१०२ प० १९० | ३१ |
| करीरं गूढपत्रं च [धन्व० ५ ९९ प० १८०] | ४४ |
| कर्कशाख्य· करम्भ स्यात् [इन्दु० ] | ८५ |
| कर्चूरको गन्धमूलो [धन्व० ३-९४ प० ११४] | १४० |
| कर्चूरको द्राविडक [अमर० का० २ वर्ग ४-१३५] | १४० |
| कर्णिकारो राजवृक्ष [धन्व० १-२२१ प० ५३] | ५६ |
| कर्पासी बदर प्रोक्तो [माला ] [ ] | ८६ |
| कर्पूर शीतलरज [धन्व० ३-३१ पत्र १०१] | २१ |
| कलाय· खण्डिक प्रोक्त– [ ] | २१० |
| कलिकारी तु हलिनी [धन्व० ४-९ प० १३५ | १७२ |
| कल्याणकश्च विज्ञेय [ ] | १०२ |
| काकजङ्घा ध्वाङ्क्षजङ्घा [धन्व० ४-२३ प० १३८] | १४६ |
| काकजम्बूर्मेघवर्णा [ ] | ७० |
| काकनासा ध्वाङ्क्षनासा [धन्व० ४-२५ प० १३९] | १४७ |
| काकमाची ध्वाङ्क्षमाची [धन्व० ४-२१ प० १३८] | १९१ |
| काकादनी काकपीलु [धन्व० ४-२७ प० १३९] | १६० |
| काकोदुम्बरिका फल्गु– [धन्व० ५-८८ प० १८७] | २७ |
| काम्पिल्यकोऽथ रक्ताङ्गो [धन्व० ३-१३८ प० १२२] | ८५ |
| कारवेल्ल कटिल्ल स्या– [ ] | १९३ |
| कालमेषी कृष्णफला [अमर० का० २ वर्ग ४-९६] | १२१ |
| कालागुर्वगुरु स्यात् तु [अमर० का० २ वर्ग ६-१२७] | १५ |
| काश. काण्डेक्षुरुद्दिष्ट [धन्व० ४-१३० प० १६०] | २०० |
| काश्मर्य काश्मरी हीरा [धन्व० १-११७ प० २८] | ५४ |
| कासमर्दोऽरिमर्दश्च [धन्व० ४-११८ प० १५७] | १८८ |
| काण्डेक्षुस्तु स्वल्पकाण्डो [वाचस्पति ] | २०१ |
| किराततिक्तको हैम [धन्व० १-३३ प० १४] | १२६ |
| किंशुको वीतशोकश्च [धन्व० ५-१६१ प० २०३] | ५२ |
| कुङ्कुमं रुधिरं रक्त– [धन्व० ३-१२ प० ९५] | १२९ |
| कुचन्दनं पतङ्गं च [धन्व० ३-६ प० ९४] | १७ |
| कुञ्चिका चोपकुञ्ची च [धन्व० २-५९ प० ८१] | १८३ |
| कुटज. कोटज कोही [धन्व० २-१३ पत्र. ७१] | १२ |
| कुठेरकस्तु वैकुण्ठ [धन्व० ४-५४ प० १४५] | १२३ |

| श्लोकादि | पृष्ठम् |
|---|---|
| कुठेरकस्तृतीयोऽन्यो [धन्व० ४–५६ प० १४५] | १२३ |
| कुन्दः सुमकरन्दश्च [धन्व० ५-१५० प० २०१] | १३२ |
| कुम्भोलूखलकं क्लीबे [अमर० का० २ वर्ग ४–३४] | ४३ |
| कुलत्थश्चक्रिकश्चक [ ] | ११३ |
| कुलिशतरु सीहुण्ड. [मेखला] [ ] | ३१ |
| कुशिंशपाऽन्या कपिला [धन्व० ५–१२१ प० १९४] | ४० |
| कुष्ठ रोगो गदो व्याधि– [धन्व० ३-४९ प० १०५ | १२७ |
| कृष्णवृन्ता कुबेराक्षी [अमर० का० २ वर्ग ४–५५] | १३ |
| केनकस्तु द्वयो [वाचस्पति ] | १०१ |
| कैडर्य पिचुमन्दश्च [धन्व० १–३४ प० १४] | १२६ |
| कोविदारे च कुद्दाल. [ ] | ८ |
| कोशातकी कृतच्छिद्रा [धन्व० १–१९२ पत्र ४६] | १७४ |
| क्रमुक पट्टिकाख्य स्यात् अमर० का २ वर्ग ४–४१] | ६४ |
| क्रमुक पट्टिका रोध्रो [धन्व० ३–१७७ पत्र. १२९] | ६५ |
| क्रियावाचित्वमाख्यातु [ ] | ४ |
| क्रोष्टुविन्ना सिंहपुच्छी [ अमर० का०२ वर्ग ४–९३ ] | १११ |
| क्षिरिणी काञ्चनी क्षीरी [ धन्व० १–२४० पत्र ५६ ] | १७५ |
| क्षीरवृक्षे हेमदुग्ध [ धन्व० ५–८६ प० १८६] | २७ |
| क्षीरिकोक्ता च राजन्या [ धन्व० ५–९१ प० १८७] | २८ |
| क्षुद्राम्र उक्तकोशश्च धन्व० ५–९ पत्र १७०] | ६९ |
| क्षुद्राम्लिका तु चाङ्गेरी [ धन्व० ५–३६ प० १७५] | १९० |
| क्षुद्राया क्षुद्रवार्त्ताक्या [ शाश्वत० श्लो० ४२०] | १०९ |
| **ख** | |
| खर्जुरी तु खरस्कन्धा [ धन्व० ५–५३ पत्र-१७८] | ९८ |
| खदिर श्वेतसारोऽन्य [ धन्व० १–२७ प० १२] | ३८ |
| खदिरो रक्तसारश्च [ धन्व० १ २५ प० ११] | ३७ |
| खपुरो लसके भद्र- [ गौड ] | १०० |
| खर्जूर केतकी ताली [ अमर० का० २ वर्ग ५–१७०] | १०२ |
| **ग** | |
| गण्डदूर्वा तु गण्डाली [ धन्व० ४-१८५ प० १६३] | २०४ |
| गण्डीरो नाम समष्ठिला | १९० |
| गर्दभाण्डे कन्दराल- [ अमर० का० २ वर्ग ४–४३] | २५ |
| गवेधुका कर्षणी स्याद् [ ] | २१७ |
| गाङ्गेरुकी नागबला [ धन्व० १–२८४ पत्र. ६५] | ९२ |
| गुग्गुलु कालनिर्यासो [ धन्व० ३–१२७ प० १२०] | ४३ |
| गुडूच्यमृतवल्ली च [ धन्व० १ १ पत्र ७] | १७३ |
| गुडौ गोलेक्षु विकृती [ शाश्वत० श्लो० ४६७] | ३१ |

| श्लोकादि | पृष्ठम् |
|---|---|
| गृञ्जनं यवनेष्टश्च [ सुश्रुत ] | १८४ |
| गोकण्टो गोक्षुरः कण्टी [धन्व० १-१०३ पत्र. २६] | ११२ |
| गोक्षुरः स्याद् गोक्षुरको [ धन्व० १-१०२ पत्र २६] | ११२ |
| गोःजह्वा गोजिका गोभी | १४० |
| गोधूम सुमन क्षुद्रो | २१३ |
| ग्रन्थिक पिप्पलीमूलं [ ] | ९३ |
| ग्रीष्माऽनिसुरभिः कान्ता [ धन्व० ५-१४० पत्र १९८] | १३३ |
| **घ** | |
| घटि क्वपि युतौ [ कविकल्पद्रुमधातुपाठ] | ४ |
| घुणप्रियाऽतिसारघ्नी | १७३ |
| **च** | |
| चक्रमर्दस्त्वेडगजो [ धन्व० ४-५ पत्र १३४] | ११९ |
| चक्रमर्द स्मृतश्चक्री | ११९ |
| चणको हरिमन्थः स्याद् | २११ |
| चण्डा धनहरी चौरी [ ] | १७५ |
| चन्दनं घनसारं च [ धन्व० ३ १ प० ९३] | १६ |
| चन्द्रलेखेन्दुलेखा च [ धन्व० १-१६६ प० ३८] | १२१ |
| चन्द्रा स्वादु विषाणी च [ धन्व० १-८६ प० २२] | १०८ |
| चम्पक सुकुमारश्च [ धन्व० ५-१४२ प० १९९] | ९ |
| चविका कोलवल्ली च [ धन्व० २-७६ प० ८५] | १६६ |
| चव्या कोलाऽथ चविका [ चन्द्रनन्दन ] | १६७ |
| चाङ्गेरी चुक्रिका दन्त– [ अमर० का० २ वर्ग ४-१४०] | १९० |
| चाणक्यमूलकं चान्यं [ धन्व ४-३५ प० १४१] | १९२ |
| चित्रको दहनो व्याल [ धन्व० २-८० प० ८६] | १३६ |
| चित्रोपचित्रा न्यग्रोधी [ अमर० का० २ वर्ग ४-८७] | १७६ |
| चिरिबिल्वो नक्तमाल [ अमर० का० २ वर्ग ४-४७] | ८० |
| चीनकः काककङ्गु स्यात् | २१५ |
| चूडामणि शीतपाकी [ धन्व० ४-२९ प० १४०] | १६० |
| **ज** | |
| जङ्घाया स्त्री पुमान् खङ्ग– [ ] | ६९ |
| जन्तुवारा जन्तुकृणा [ धन्व० ४-८८ प० १५१] | १५५ |
| जम्बीरः खरपत्रश्च [ धन्व० ४-५२ प० १४४] | १०४ |
| जम्बूः सुरभिपत्रा च [ ] | ६१ |
| जम्भीरो जम्भलो जम्भो [ धन्व० ५-१४ प० १७१] | ३२ |
| जलपिप्पल्यभिहिता [ धन्व० ४-६४ प० १४७] | १५७ |
| जातीफलं जातिसस्यं [ धन्व० ३-३५ प० १०२] | १३० |
| जाती मनोज्ञा सुमना [ धन्व० ५-१३७ प० १९८] | १३० |
| जीमूतको देवताडो [ धन्व० १-१७३ प० ४०] | १७३ |

| श्लोकादि | पृष्ठम् |
|---|---|
| जीवकः शृङ्गकः सर्जो [ धन्व० १-१२३ पृ० ३० ] | १९६ |
| जीवन्ती जीवनीया च [ धन्व० ५-१४० पृ० ३३ ] | १८९ |
| ज्ञेया जाङ्गलिका सैव [ इन्दु ] | १६४ |
| ज्योतिष्मती तु कटभी [ धन्व० १-२६७ पृ० ६१ ] | ११६ |
| **त** | |
| तगरं कुटिलं वक्र [ धन्व० ३-५३ पृ० १०६ ] | ९० |
| तण्डुलीयक उद्दिष्ट— [ धन्व० ४-११६ पृ० १५७ ] | १९० |
| तत्र शोणे कुरबक— [ अमर० का०२ वर्ग ४-७४ ] | १३६ |
| तमालपत्र पत्र स्यात् [ धन्व० २-५२ पृ० ८० ] | २० |
| तरणी रामतरणी [ धन्व० ५-१४५ पृ० १९९ ] | १३४ |
| तर्कारी वैजयन्ती च [ चन्द्रनन्दन ] | ४९ |
| तल्लक्षण क्लीतनं च [ धन्व० १-१४४ पृ० ३४ ] | १०६ |
| तस्या. फलं विनिर्दिष्टं [ धन्व० २-७८ पृ० ८५ ] | १६७ |
| तामलक्युत्तमा ताली [ धन्व० ३-८४ पृ० ११२ ] | ११८ |
| तालश्चाष्टविधो ज्ञेयो [ ] | ९९ |
| तालीसक तु तालीस [ धन्व० २-५३ पृ० ८० ] | १५३ |
| तालीसपत्र तालीसं [ ] | १५३ |
| तालो ध्वजद्रुम प्रांशु— [ धन्व० ५-६८ पृ० १६२ ] | ९९ |
| तिनिशश्चित्रकृद् नेमि· [ ] | ५२ |
| तिन्दुको नीलसारश्च [ धन्व० ५-४० पृ० १७६ ] | ६३ |
| तिन्दुकोऽन्यो द्वितीयस्तु [ धन्व० ५-४१ पृ० १७६ ] | ६३ |
| तिलक पुरुष श्रीमान् [ धन्व० ५-१५८ पृ० २०२ ] | ७ |
| तिलक पूर्णक. श्रीमान् [ धन्व० ५-१५८ पृ० २०२ ] | ७ |
| तिलपर्णी तु पत्राङ्ग [ अमर० का०२ वर्ग ६-१३२ ] | १७ |
| तिलपूतस्तिलफल— [ ] | २१७ |
| तुङ्ग पुष्पकसंज्ञ स्यात् [ इन्दु० ] | १८ |
| तुम्बुरु सारस सौरो [ धन्व० २-४२ पृ० ७८ ] | ८९ |
| तुरगी त्वश्वगन्धाया [ विश्वलोचने गान्तवर्गे ४० ] | १०६ |
| तूलं नूद च यूप च [ धन्व० ५-६४ पृ० १८१ ] | ९० |
| तृणशून्यं तु मल्लिका [ अमर० का० २ वर्ग ४-६९ ] | १३३ |
| तृतीयो मधुशिग्रु स्यात् [ ] | ५१ |
| तेजस्विनी तेजवती [ धन्व० १-२६६ पृ० ६१ ] | १५१ |
| तैलपर्णिक-गौशीर्षौ [ अमर० का० २ वर्ग ६-१३१ ] | १५ |
| त्रायमाणा कृतत्राणा [ धन्व० १-२५४ पृ० ५९ ] | १२५ |
| त्रिष्वथ पूते नवे शुद्धे [ मङ्ख ] | ५४ |

श्लोकादि पृष्ठम्

द

दन्ती शीघ्रा निकुम्भा स्या-
[ धन्व० १-२२३ प०५३ ] ११२

दमनकं पाण्डुरा
[ धन्व० .-६४ प०१०९ ] १३८

दमनो दान्तो दमो
[ ] १३८

दर्भाणां स्थाने शरैः
[ ] २०२

दालिमो दाडिम सार
[ धन्व० २-६१ प०८१ ] ८२

देवकाष्ठं भद्रकाष्ठ
[ धन्व० १-७७ प०२१ ] ६१

देवदारु स्मृत दारु
[ धन्व० १-७६ प०२१ ] ६१

दैत्योऽसुरे मुराया च
[ विश्व० ] १५४

द्रवन्ती शाम्बरी चित्रा
[धन्व० १-२२१ प०५४ ] १७६

द्वितीया गन्धमासी च
[धन्व० ३-४७ प०१०५] १५४

द्वितीया पाटला श्वेता
[धन्व० १-१२२ प०२९ ] १४

द्वितीयो रक्तपुष्पस्तु
[धन्व० ४-२ प०१३४] १९

द्वौ च कुलाय-कुलत्थौ
[ ] २०८

श्लोकादि पृष्ठम्

ध

धत्तूरकः स्मृतो धूर्तो
[धन्व० ४-७ प०१३५ ] १३९

धन्वनो गोत्रविटपी
[ ] ५९

धन्वयासो दुरालम्भा
[धन्व० १-२० प०११ ] १२५

धर्मण. सर्पभेदेऽपि
[विश्वलोचने णान्तवर्गे ५८] · ५९

धवो नन्दितरुर्गौरः
[धन्व० ६-४ प०२०४] ५३

धातकी ताम्रपुष्पी च
[धन्व० ३-१० प०११३] ८३

धामार्गवः कोशफलो
[धन्व० १-१८९ प०४५] १७४

धूलीकदम्बोऽन्य
[धन्व० ५-१०५ प०१९०] १०

ध्यात्वाऽर्हत कृतैकार्थ-
[हैमानेकार्थकोश श्लो० १] ४

न

नकुलेष्टा भुजङ्गाक्षी
[अमर० का० २ वर्ग ४-११५] १२२

नदीकूलप्रियस्तवन्य
[चन्द्र ] ७३

नदीसर्जो वीरतरु-
[अमर० का० २ वर्ग ४-४५] ५८

नलदं सेव्यममृणालं
[अमर० का० २ वर्ग ४-१६४] २०७

नलं सरोज नलिन-
[ ] १७८

नलिका विद्रुमलता
[धन्व० ३-४३ प०१०४] २३

नलो नडो नटश्चैव
[धन्व० ४-१४१ प०१६२] २०१

नाकुली सुरसा नाग-
[अमर० का० २ वर्ग ४-११४] १२२

नागपुष्पो मतो नाग
[धन्व० २-४८ पत्र. ७९] ९

नागः पन्नग-मातङ्ग-
[मेदिनी-गान्तवर्ग ८] ९

नाडी हिङ्गुपत्राशा च
[धन्व० २-४० प० ७७] १४६

| श्लोकादि | पृष्ठम् |
|---|---|
| नादेयो भेषपुष्पोऽन्य- [धन्व० ५-११७ प०१९३] | ७३ |
| नामशास्त्रे निघण्टुर्ना [वैजयन्ती ] | ४ |
| नारङ्गस्त्वक्सुगन्धः स्या- [धन्व० ५ २० प० १७२] | ३७ |
| नालिकेरो रसफल [धन्व० ५-७४ प० १८३] | १०० |
| निम्बोत्थ सर्वतोभद्र [ ] | ४४ |
| निम्बो नियमनो नेता [धन्व० १-२९ प० १३] | ७६ |
| निर्दिष्टा वै कण्टकिनी [धन्व० १-५८ प० १८] | ९२ |
| निःश्रेणिरधिरोहिण्यां [विश्वलोचने णान्तवर्गे ६१] | ९८ |
| नीलपुष्पी महाश्वेता [धन्व० ४-८५ प० १५१] | १६८ |
| नीलिनी नीलिका काली [धन्व० १-२३२ प० ५५] | १३८ |
| नीली काली क्लीतकिका [अमर० का० २ वर्ग ४-९४] | १३८ |
| नीली दूर्वा स्मृता श्यामा [धन्व० ४-१५३ प० १६२] | २०३ |
| नीवारश्चन्द्रिका बोडी [ ] | २१४ |
| नूदस्तु यूपः क्रमुको [अमर० का० २ वर्ग ४-४१] | ९० |
| नेपाल. कथितश्चान्यो [धन्व० १-३५ प० १४] | १२६ |
| **प** | |
| पङ्केरुह तामरसं [ ] | १७७ |
| पटोल. कुलकः प्रोक्त. [धन्व० १-४१ प०१७] | १९४ |

| श्लोकादि | पृष्ठम् |
|---|---|
| पथिका तुलसी पत्री [ ] | १५३ |
| पद्मकं मलयश्चारु [ ] | ९७ |
| पद्मकेसरमापीतं [धन्व० ४-१६५ प० १६७] | १८० |
| पद्मबीज तु गालोड्यं [धन्व० ४-१५९ प० १६६] | १८१ |
| पद्ममूलं तु शालूक [धन्व० ४-१६३ प० १६७] | १८० |
| पद्मिनी स्यात् पुटकिनी [धन्व० ४-१५७ प० १६६] | १७६ |
| परिपेलं प्लव वन्य [धन्व० ३ ५५ प० १०७] | २०५ |
| परूषक परु प्रोक्तो [धन्व० ५-६२ प० १८०] | ९८ |
| पर्पट स्यात् पर्पटको [धन्व० १-४५ प० १६] | १४२ |
| पलाण्डुर्यवनेष्टश्च [धन्व० ४-७१ प०१४८] | १८४ |
| पलाश किंशुक [पर्ण.] [चन्द्र ] | ५२ |
| पाटलोक्ता तु कुम्भीका [धन्व० १-१२० प० २९] | १४ |
| पाठाऽम्बष्ठाऽम्बष्ठकी च [धन्व० १-७० प० २०] | १६१ |
| पारावताह्वि कटभी [अमर० का० २ वर्ग ४-१५०] | ११६ |
| पारिभद्रे निम्बतरु- [अमर० का० २ वर्ग ४-२६] | ४४ |
| पालङ्क्या वास्तुकाकारा [ ] | १८९ |
| पाषाणभेदकोऽश्मघ्न [धन्व० १-१५७ प० ३६] | १४७ |

| श्लोकादि | | पृष्ठम् |
|---|---|---|
| पिच्छिल; शपित शेलु. | [ ] | ६७ |
| पिप्पल· केशावास- | [धन्व० ५-७८ प० १८४] | २४ |
| पिप्पली तण्डुलफला | [इन्दु० ] | १६६ |
| पिप्पली मागधी कृष्णा | [धन्व० २-७३ प० ८४] | १६६ |
| पियालोऽथ खरस्कन्ध- | [धन्व ५-७२ प० १८३] | २८ |
| पीततण्डुलिका कङ्गु | [ ] | २१५ |
| पीत कुरण्टको ज्ञेयो | [धन्व० १-२७९ प० ६३] | १३५ |
| पीतो रक्तोऽथ नीलश्च | [धन्व० १-२७८ प० ६३] | १३५ |
| पीलुपर्णी कर्मकरी | [इन्दु० ] | १७१ |
| पीलु शीतफल. स्रंसी | [धन्व० ५-५१ प० १७८] | ७७ |
| पुण्ड्रेक्षौ पुण्ड्रक सेव्यः | [वाचस्पति ] | २०१ |
| पुनर्नवाऽपरा क्रूर | [धन्व० १-२७६ प० ६३] | ११६ |
| पुनर्नवा तु शोफघ्नी | [अमर० का०२ वर्ग ४-१४९] | ११५ |
| पुनर्नवा विशाखश्च | [धन्व० १-२७४ प० ६२] | ११५ |
| पुन्नागे पुरुषस्तुङ्ग. | [अमर० का० २ वर्ग ४-२५] | १८ |
| पुष्पाण्डक. शीतभीरु· | [ ] | २०९ |
| पुष्पोऽक्षी | [वाचस्पति· ] | १२ |
| पूतिकरञ्ज· सुमनाः | [ ] | ८० |

| श्लोकादि | | पृष्ठम् |
|---|---|---|
| पृश्निपर्णी पृथक्पर्णी | [अमर० का० २ वर्ग ४-९२] | १११ |
| पृश्निपर्णी पृथक्पर्णी | [धन्व० १-९० प० २३] | १११ |
| पृश्निरल्पतनौ | [अमर० का० २ वर्ग ६-४८] | ११० |
| प्रकीर्यः पूतिकरज· | [अमर० का० २ वर्ग ४-४८] | ८० |
| प्रत्यक्पर्णी कीशपर्णी | [अमर० का० २ वर्ग ४-८९] | ११४ |
| प्रत्यक्श्रेणी सुतश्रेणी | [अमर० का० २ वर्ग ४-८८ | १७६ |
| प्रत्येकं यो भवेद् दोषो | [ ] | ३ |
| प्रपौण्डरीकं चक्षुष्यं | [धन्व० ३-९२ प० ११४] | १५५ |
| प्रसारणी सुप्रसरा | [धन्व० १-२८९ प० ६६] | १८५ |
| प्रायो जनाः सन्ति वनेचराश्च | [धन्व० १-८ प०१] | २४ |
| प्रियङ्गु प्रियवल्ली च | [धन्व० ३-१६ प० ९७] | १०५ |
| प्रोक्ताऽन्या शङ्खधवला | [धन्व० ५-१४९ प० २००] | १३१ |
| प्लक्ष. कपीतन. शुङ्गी | [धन्व० ५-८१ प० १८५] | २५ |

फ

| श्लोकादि | | पृष्ठम् |
|---|---|---|
| फलपूरो बीजपूर | [धन्व० ५-२२ प० १७३] | ३३ |
| फलं त्वेतस्य पर्कटम् | [वाचस्पति ] | २६ |
| फलानि तस्येन्द्रयवा | [धन्व० २-१५ पत्र ७१] | १२ |
| फलानि तस्येन्द्रयवा | [ ] | १२ |

| श्लोकादि | पृष्ठम् | श्लोकादि | पृष्ठम् |
|---|---|---|---|
| **ब** | | [धन्व० १-९३ प० २४] | १०९ |
| बकुल. शीधुगन्धश्च | | बृहत्खर्जूरिका श्रेणी | |
| [धन्व० ५-१५४ प० २०२] | ६ | [मदनपाल ] | ९९ |
| बदर कोलीकर्पास्यो | | ब्रह्मपर्णीति विख्याता | |
| [विश्वलोचने रान्तवर्ग १८८ | ८६ | [ ] | १११ |
| बदरी गोपघण्टा च | | ब्राह्मी सरस्वती सोमा | |
| [चन्द्र ] | ४१ | [ ] | १८६ |
| बदरी स्निग्धपत्रा च | | **भ** | |
| [इन्दु ] | ४१ | भद्रैला बृहदेला च | |
| बला भद्रादनी वाटी | | [धन्व०२ ४६ प० ७८] | २१ |
| [धन्व० १-२८० प० ६४] | १४३ | भल्लातकः स्मृतोऽरुष्को | |
| बला भद्रौदनी ह्वया | | [धन्व० ३-१४३ प० १२३] | ७५ |
| [चन्द्रनन्दन ] | १४३ | भस्मक भस्मलग्ने स्याद् | |
| बलिकाऽतिबला ज्ञेया | | [विश्वलोचने कान्तवर्गे १२९] | ९५ |
| [धन्व० १-२८६ प० ६५] | १४४ | भार्गी गर्दभशाकश्च | |
| बाकुची सोमराजी च | | [धन्व० १-६८ प० २०] | १५० |
| [धन्व० १-१६५ प० ३८] | १२१ | भूपदी शीतभीरुश्च | |
| बिभीतक· कर्षफलो | | [अमर० का० २ वर्ग ४-७०] | १३३ |
| धन्व० १-२१२ प० ५०] | ४७ | भूर्जे चर्मिमृदुत्वचौ | |
| बिम्बी रक्तफला तुण्डी | | [अमर० का० २ वर्ग ४-४६] | ६६ |
| [धन्व० १-२०२ प० ४८ | १९७ | भूर्जे भुजो बहुपुटो | |
| बिल्व. शलाटु शाण्डिल्यो | | [ ] | ६६ |
| [धन्व० १-१०६ प० २६] | ४६ | भूस्तृणो रौहिषो भूरि | |
| बिस मृणाल बिसिनी | | [धन्व० ४-४७ प० १४३] | १९९ |
| [धन्व० ४-१६१ प० १६७] | १८० | भृङ्गराजो भृङ्गरजो | |
| बीजकल्वसन काम्यः | | [धन्व० ४-११ प० १३६] | १८८ |
| [ ] | ५७ | **म** | |
| बीजकोशो सरोजस्य | | मकुष्ठको मयुष्ठ स्या— | |
| [शाश्वत० श्लो० १८०] | १७९ | [ ] | २१२ |
| बीजपूर्णोऽपर प्रोक्तो | | मञ्जिष्ठा कालमेषी च | |
| [धन्व० ५-३१ प० १७४] | ३३ | [धन्व०१-१७ प० १०] | १६४ |
| बुक बिल्वं सबुतूरं | | मदन शल्यको राठः | |
| [ ] | १५७ | [धन्व० १-१६८ प० ३९] | ७१ |
| बुको बसुक इत्युक्त | | मधुपर्णी दाहहरा | |
| [धन्व० ४ ९९ प० १३८] | १५८ | [ ] | १७३ |
| बृहती सिंहनाकान्ता | | मधुयष्टी च यष्टी च | |
| | | [धन्व० १-१४२ प० ३३] | १०६ |

| श्लोकादि | पृष्ठम् |
| --- | --- |
| मधुरा शतपुष्पाया<br>[महेश्वर ] | ३३ |
| मधूकोऽन्यो मधूलस्तु<br>[धन्व० ५-४८ प० १७७] | ६३ |
| मधूको मधुवृक्षश्च<br>[धन्व० ५-४५ प० १७७] | ६२ |
| मन्दारश्चार्कपर्णेऽत्र<br>[अमर० का० २ वर्ग ४-८१] | ३० |
| मरिचं मलिनं श्यामं<br>[धन्व० वर्ग २-८८ प० ८७] | १६५ |
| मल्लिका शीतभीरुश्च<br>[धन्व० ५-१३४ प० १९७] | १३३ |
| मसूरिका मसूरी स्या-<br>[ ] | २१० |
| महानिम्ब स्मृतोद्रेक<br>[धन्व १-३१ प० १३] | ७७ |
| महाबला वर्षपुष्पा<br>[धन्व० १-२८२ प० ६५] | १४४ |
| महाश्रावण्यथाऽन्या तु<br>[धन्व १-२६० प० ३७] | १२० |
| माषपर्णी तु काम्बोजी<br>[धन्व० १-१३६ प० ३२] | ११७ |
| मासरोहिण्यतिरुहा<br>[धन्व० ४-९४ प० १५३] | १५६ |
| मासी कृष्णजटा हिंस्रा<br>[धन्व० ३-४५ प० १०४] | १५३ |
| मासी जटा भूतकेशी<br>[ ] | १५४ |
| मिश्रेया तालकर्णी च<br>[धन्व० २-४ प० ६९] | १५२ |
| मुद्गपर्णी क्षुद्रसहा शिम्बी<br>[धन्व० १-१३८ प० ३२] | ११७ |
| मुद्गपर्णी क्षुद्रसहा सूर्प-<br>[ ] | ११७ |
| मुद्गपर्णी तु काकमुद्गा<br>[अमर० का० २ वर्ग ४-११३] | ११७ |

| श्लोकादि | पृष्ठम् |
| --- | --- |
| मुद्गो वलाटो मङ्गल्या<br>[ ] | २१२ |
| मुरा गन्धवती दैत्या<br>[धन्व० ३-६७ प० १०९] | १५४ |
| मुसली खलिनी ताल-<br>[ ] | १४५ |
| मुस्तमस्तुधरो मेघो<br>[धन्व० १-४० प० १५] | २०५ |
| मुष्ककी मोक्षको घण्टा<br>[धन्व० ५-१३२ प० १९६] | ९१ |
| मूर्वा मधुरसा देवी<br>[धन्व० १-१३ प० ९] | १७१ |
| मूलकं हरिपर्णं च<br>[धन्व० ४-३३ प० १४०] | १९२ |
| मूलं च पिप्पलीमूलं<br>[धन्व० २-७५ प० ८४] | १६६ |
| मूलं पुष्करमूलं च<br>[धन्व० १-६६ प० १९] | १९६ |
| मृदुदर्भ कुशो बर्हि<br>[धन्व० ४-१३३ प० १६१ | १९९ |
| मेदा ज्ञेया मणिच्छिद्रा<br>[धन्व० १-१२७ प० ३०] | १५९ |
| मेषशृङ्गी मेण्ढवल्ली<br>[मदनपाल ] | १०७ |
| **य** | |
| यवतिक्ता शङ्खिनी च<br>[धन्व० १-२५६ प० ५९] | १५१ |
| यवानी दीपको दीप्यो<br>[धन्व० २-९१ प० ८८] | १४१ |
| यवे च तीक्ष्णशूको<br>[ ] | २१० |
| यूथशालिनी<br>[धन्व० ५-१४९ प० २००] | १३१ |
| यूथिका बालपुष्पी च<br>धन्व० ५-१४८ प० २००] | [illegible] |

| श्लोकादि | पृष्ठम् |
|---|---|
| **र** | |
| रक्तचन्दनमप्यन्य- [धन्व० ३ ४ प० ९४] | १६ |
| रक्तपादी शमीपत्रा [धन्व० ४-१०९ प० १५५] | १५६ |
| रक्तपाथपरा प्रोक्ता [धन्व० ४-१११ प० १५६] | १५७ |
| रक्तशालिर्दीर्घशूक [ ] | २०९ |
| रक्तशालिर्लोहित स्याद् [ ] | २०९ |
| रक्ताब्जे रक्तकुमुदे [शाश्वत० श्लो० ५४०] | १७८ |
| रक्तोऽपरो हस्तिकर्णः धन्व० १-२९६ प० ६७] | ८५ |
| रञ्जनी श्रीफली तुत्था [अमर० का० २ वर्ग ४-९५] | १३८ |
| रथाभ्रपुष्पविदुल- [अमर० का० २ वर्ग ४-३०] | ७२ |
| रसवीर्यविपाकेभ्यो [ ] | २४ |
| रसायनी कुलरुहा [धन्व० १-४ प० ८] | १७३ |
| राजक्षवक इत्यन्यो [धन्व० ४-४३ प० १४३] | २१८ |
| राजाम्रातक आम्लातो [धन्व० ५-११ प० १७०] | ६९ |
| राजार्को वसुकोऽन्योऽर्को [धन्व० ४-१६ प० १३७] | ३० |
| रास्ना युक्तरसा रस्या [धन्व० १-२७० प० ६२] | १२१ |
| रोध्रः शाबरक. श्वेत- [ ] | ६५ |
| रोध्रस्तिरीट. कानीन- [ ] | ६५ |
| रोध्रो लोध्रः शाबरक- [धन्व० ३-१७१ प० १२९] | ६४ |
| रोहितको रोचनक [ ] | ८१ |
| **ल** | |
| लकुच क्षुद्रपनसो [ ] | ६७ |
| लक्ष्मीफलो गन्धगर्भ [धन्व० १-१०७ प० २७] | ४६ |
| लवङ्गं देवकुसुम [धन्व० ३-४१ प० १०४] | २२ |
| लशुनो दीर्घपत्रश्च [सुश्रुत ] | १८४ |
| लामज्जकं लघु लय- [अमर० का० २ वर्ग ४-१६५] | २०७ |
| लामज्जकं सुनालं स्या- [धन्व० ३-८६ प० ११३] | २०७ |
| लोल सूक्ष्मफलं तनु [इन्दु० ] | ४१ |
| **व** | |
| वचोग्रगन्धा गोलोमी [धन्व० २-६ प० ७०] | १६९ |
| वटो रक्तफल शृङ्गी [धन्व० ५-७६ प० १८४] | २६ |
| वनमुद्गस्तुवरक [ ] | २१२ |
| वन्दनी पुष्पशोभना [इन्दु ] | १०५ |
| वन्दाका स्याद् वृक्षरुहा [धन्व० ४-५७ प० १५३] | ८७ |
| वयस्था कुण्डली सौम्या [धन्व० १-३ प० ८] | १७३ |
| वय.स्थाऽऽमलक तिष्य [धन्व० १-२१५ प० ५१] | ४८ |
| वरुण श्वेतपुष्पश्च [धन्व० ५-११९ प० १९३] | ७४ |

| निघण्टुशेषटीका | धन्वन्तरीयनिघण्टु |
|---|---|
| किराततिक्तको हैम. काण्डतिक्तः किरातक. ।<br>भूनिम्बोऽनार्यतिक्तश्च कैरातो रामसेनक· ॥<br>कैडर्य. पिचुमन्दश्च निम्बो रिष्टो वरत्वचः ।<br>छर्दनो हिङ्गुनिर्यास· प्रियमालश्च पर्वतः ॥<br>नेपाल· कथितश्चान्यो जात्यश्चैष ज्वरान्तक<br>नाडीतिक्तोऽर्द्धतिक्तश्च निद्रारि सन्निपातहा॥<br>पत्र १२६ | किराततिक्तको हैम काण्डस्तिक्त· किरातक. ।<br>भूनिम्बोऽनार्यतिक्तश्च[1] किरातो रामसेनक ॥<br>[2]कडर्य पिचुमन्दश्च निम्बोऽरिष्टो वरत्वच ।<br>छर्दिघ्नो हिङ्गुनिर्यास प्रियशालश्च पार्वत ॥<br>नेपाल[3] कथितश्चान्यो जातिभेदो ज्वरान्तकः ।<br>महातिक्तश्च तिक्तश्च निद्रारि सन्निपातहा ॥<br>वर्ग १ श्लो० ३३-३५ पत्र १४ |
| कुष्ठं रोगो गदो व्याधिरुत्पलं पाकलं रुजा ।<br>पत्र १२७ | कुष्ठं रोगोऽगदो व्याधिरुत्पल पाकलं रुजा ।<br>वर्ग ३ श्लो० ४९ पत्र. १०५ |
| वाल्कं वारि तोयं च ह्रीवेरं जलमम्बु च ।<br>केशं वज्रमुदीच्य च पिङ्गमाचमन कचम् ॥<br>पत्र १२७ | बालक वारि तोयं च ह्रीबेरं जलमम्बु च ।<br>केश्यं वज्रमुदीच्यं च पिङ्गमाचमनं कचम् ॥<br>वर्ग १ श्लो० ४७ पत्र १६ |
| शटी षटी पलाशः स्यात् ज्ञेया पृथुपलाशिका<br>सुगन्धमूला गन्धोली षड्ग्रन्था सुव्रता वधू ।<br>पत्र १२८ | सटी सठी पलाशश्च ज्ञेया पृथुपलाशिका ।<br>सुगन्धमूला गन्धाली षड्ग्रन्था सुव्रता वधू ॥<br>वर्ग १ श्लो० ६१ पत्र १८ |
| एलावालुकमालूक वालुकं हरिवालुकम् ।<br>एल्वालकं कपित्थ च दुर्वर्णं प्रसरं दृढम् ॥<br>पत्र १२८-१२९ | एलावालुकमालुकं वालुक हरिवालुकम् ।<br>एल्वालुकं कपित्थ[4] स्याद् दुर्वर्णं प्रसर दृढम् ॥<br>वर्ग ३ श्लो०७६ पत्र १११ |
| कुङ्कुमं रुधिरं रक्तमसृगसं च पीतकम् ।<br>काश्मीरं चारु वाल्हीकं सङ्कोच पिशुन वरम्॥<br>पत्र.१२९ | कुङ्कुमं रुधिरं रक्तमसृगल च पीतकम् ।<br>काश्मीरं चारु वाह्लीक सङ्कोचं पिशुनं वरम् ।<br>वर्ग ३ श्लो०१२ पत्र. ९५ |
| जाती मनोज्ञा सुमना राजपुत्री प्रियंवदा ।<br>मालती हयगन्धा च चेतिका तैलभाविनी ॥<br>पत्र १३० | जाती मनोज्ञा सुमना राजपुत्री प्रियंवदा ।<br>मालती हयगन्धा च चेतिका [5]तैलभाविनी ॥<br>वर्ग ५ श्लो० १३७ पत्र. १९८ |
| जातीफल जातिसस्य शालूकं मालतीफलम् ।<br>मज्जासारं जातिशृङ्गं पुट सौमनस फलम् ॥<br>पत्र १३० | जातीफल जातिसस्यं शालूक मालतीफलम् ।<br>[6]मदशौण्डं जातिशृङ्गं पुटं सौमनस फलम् ।<br>वर्ग ३ श्लो०३५ पत्र. १०२ |
| यूथिका बालपुष्पी च पुष्पगन्धा गुणोज्ज्वला ।<br>गणिका चारुमोटा च शिखण्डी ॥<br>पत्र. १३१<br>स्वर्णयूथिका ॥ | यूथिका बालपुष्पा तु पुष्पगन्धा गुणोज्वला ।<br>[7]गणिका चारुमोदा च शिखण्डी ॥<br>वर्ग ५ श्लो० १४८ पत्र २००<br>[8]स्वर्णयूथिका |
| यूथशालिनी<br>पत्र १३१ | सुवर्णयूथा हरिणी पीतिका पीतयूथिका ।<br>वर्ग ५ श्लो०१४८-९ पत्र. २०० |

---

१ °श्च कैरातो ख ग ङ ॥ २ कौण्डर्यः क घ ङ. च. ॥ ३. °लः पथि-कश्चान्यो क ख घ ङ च ॥ ४. °त्थं च दुर्वर्णप्र° क. ख. ङ. ॥ ५ तिलभाविनी ग. ॥ ६. मज्जासारं जा° ग. ॥ ७. कणिका क. ङ. ॥ ८ स्वर्णपुष्पिका ङ. ॥.

| निघण्टुशेषटीका | धन्वन्तरीयनिघण्टु |
| --- | --- |
| प्रोक्ताऽन्या शङ्खधवला नामत शङ्खयूथिका ॥<br>पत्र १३१ | प्रोक्ताऽन्या शङ्खधवला नामत शङ्खयूथिका ।<br>वर्ग ५ श्लो० १४९ पत्र. २०० |
| कुन्द सुमकरन्दश्च श्वेतपुष्पो मनोहर ।<br>**अट्टाट्टहासो भृङ्गस्तु शुक्लशाल्योदनोपम** ।<br>पत्र १३२ | कुन्द सुमकरन्दश्च सदापुष्पो मनोहर ।<br>**अट्टहासो भृङ्गसुहृच्छुक्लः** शाल्योदनोपम ॥<br>वर्ग ५ श्लो०१५० पत्र. २०१ |
| **ग्रीष्माऽति**सुरभि कान्ता सुगन्धा वनमालिनी।<br>सुकुमारा शिखरिणी **नेमाली** नवमालिका ।<br>पत्र १३३ | **ग्रैष्मी तु** सुरभि कान्ता सुगन्धा वनमालिनी।<br>सुकुमारा शिखरिणी [1]**नेपाली वनमालिका** ॥<br>वर्ग५ श्लो० १४० पत्र १९८ |
| मल्लिका शीतभीरुश्च मदयन्ती प्रमोदनी ।<br>मदनीया गवाक्षी च भूपदष्टापदी तथा ॥<br>पत्र १३३ | मल्लिका शीतभीरुश्च मदयन्ती प्रमोदिनी ।<br>मदनीया गवाक्षी च [2]भूपदष्टपदी तथा ॥<br>वर्ग ५ श्लो०१३४ पत्र १९७ |
| वार्षिकी त्रिपुटा त्र्यस्रा सुरूपा सुभगा प्रिया ।<br>श्रीमती षट्पदानन्दा सुवर्णा मुक्तबन्धनी ॥<br>पत्र १०४ | वार्षिकी त्रिपुटा त्र्यस्रा सुरूपा सुभगा प्रिया ।<br>श्रीमती षट्पदानन्दा सुवर्णा मुक्तबन्धना ॥<br>वर्ग ५ श्लो १३६ पत्र- १९७ |
| तरणी रामतरणी **वर्णिनी** चारुकेसरा ।<br>**रम्या** कुमारी गन्धाढ्या द्विरेफगणसम्मता ॥<br>पत्र १३४ | तरणी रामतरणी **कर्णिका** चारुकेसरा ।<br>**सहा** कुमारी गन्धाढ्या द्विरेफगणसम्मता ॥<br>वर्ग ५ श्लो०१४५ पत्र. १९९ |
| सैरेयक· सहचरः सैरेयश्च सहाचरः ।<br>पत्र १३५ | सैरेयक सहचर· सैरेयश्च सहाचर ।<br>वर्ग १ श्लो० २७८ पत्र ६३ |
| पीतो रक्तोऽथ नीलश्च कुसुमैस्त विभावयेत् ॥<br>पीत· कुरण्टको ज्ञेयो रक्तः कुरबकः स्मृत ।<br>नील आर्तगलो दासी बाण ओदनपाक्यपि ॥<br>पत्र १३५ | पीतो रक्तोऽथ नीलश्च कुसुमैस्त विभावयेत् ॥<br>पीतः कुरण्टको ज्ञेयो रक्त· कुरबक स्मृत ।<br>नील आर्तगलो दासी बाण ओदनपाक्यपि ॥<br>वर्ग १ श्लो० २७८–२७९ पत्र.६३ |
| चित्रको दहनो व्याल पाठीनो दारुणोऽग्निक ।<br>ज्योतिष्को वल्लरी वह्नि· पाठी पाली **कुटः** शिखी।<br>पत्र १३६ | चित्रको दहनो व्याल [3]पाठिनो दारुणोऽग्निक ।<br>[4]ज्योतिष्को वल्लरी वह्नि· [5]पाली पाठी **कटुः** शिखी॥<br>वर्ग २ श्लो० ८० पत्र ८६ |
| वासन्ती प्रहसन्ती च सुवसन्ता वसन्तजा ।<br>**शीकरा** शीतसंवासा सेव्या भ्रमरबान्धवा ॥<br>पत्र. १३७ | वासन्ती प्रहसन्ती च सुवसन्ता वसन्तजा ।<br>**शोभना** शीतसंवासा सेव्या भ्रमरबान्धवा ॥<br>वर्ग ५ श्लो० १३९ पत्र १९८ |
| नीलिनी नीलिका **काली** ग्राम्या तूणी विशोधनी ।<br>तुत्था श्रीफलिका **मेला** भारवाही च रञ्जनी ।<br>पत्र १३८ | नीलिनी नीलिका **काला** ग्राम्या तूणी विशोधनी ।<br>तुत्था श्रीफलिका [6]**मोचा** भारवाही च रञ्जनी ॥<br>वर्ग १ श्लो० २३२ पत्र. ५५ |

१. नेवाली ख ॥ २ भूतपर्य्यपदी क ख ॥ ३ पाठीरो दा॰ ग घ. ॥ ४. ज्योतिष्कश्चा· दणोर्वह्निः ग ङ. ॥ ५. पाठी पाठिः शठः शिखी ग. ॥ ६. मेला क. ख. ग. ङ च. ॥

| निघण्टुशेषटीका | धन्वन्तरीयनिघण्टु |
| --- | --- |
| दमनकं पाण्डुरागं दान्तं गन्धोत्कटं मुनिम् ।<br>पुण्डरीकं ब्रह्मजटमृषिपुत्रं तपस्विनम्॥<br>पत्र ११८ | दमनः पाण्डुरागः स्याद् दान्तो गन्धोत्कटो मुनिः ।<br>पुण्डरीको ब्रह्मजटा तपस्वी ऋषिपुत्रक ॥<br>वर्ग ३ श्लो० ६४ पत्र १०९ |
| धत्तूरकः स्मृतो धूर्तो देवता कितव· शठः ।<br>उन्मत्तको मदनकतरुस्तलफलस्तथा ॥<br>पत्र. १३९ | धत्तूरः कनको धूर्तो देवता कितव. शठः ।<br>उन्मत्तको [1]मदनकः कालिश्च हरवल्लभः॥<br>वर्ग ४ श्लो०७ पत्र १३५ |
| शङ्खपुष्पी कम्बुपुष्पी शङ्खाह्वा शङ्खमालिनी ।<br>किरीटी शङ्खकुसुमा मेध्या वनविलासिनी ॥<br>पत्र. १४० | शङ्खपुष्पी कम्बुपुष्पी शङ्खाह्वा[2] कम्बुमालिनी ।<br>[3]तिलकी शङ्खकुसुमा मेध्या वनविलासिनी ॥<br>वर्ग ४ श्लो० ११३ पत्र.१५६ |
| कर्चूरको गन्धमूलो द्राविड काल्य एव च ।<br>वेधमुख्यो दुर्लभश्च कस्यचित् सम्मता शटी ॥<br>पत्र. १४० | कर्चूरो गन्धमूलश्च द्राविड [4]काश्यं एव च ।<br>वेधमुख्यो दुर्लभश्च कस्यचित् सम्मतः सटी॥<br>वर्ग ३ श्लो० ९४ पत्र. ११४ |
| अजमोदा बस्तमोदा दीप्यको लोचमस्तकः ।<br>खराश्वा कारवी वल्ली मोचा हस्तिमयूरकः॥<br>पत्र. १४१ | अजमोदा बस्तमोदा दीप्यको लोचमर्कटः ।<br>खराह्वा कारवी वल्लिमोंदा हस्तिमयूरिका ॥<br>वर्ग २ श्लो० ९८ पत्र ८९ |
| यवानी दीपको दीप्यो यवसाह्वा यवानिका ।<br>यमानिकोग्रगन्धा च दीपनीया च दीपनी ॥<br>पत्र १४१ | यवानी दीपको दीप्यो यवसाह्वो [5]यवाग्रजः ।<br>यवानिकोग्रगन्धा च दीपनीया च दीपनी ॥<br>वर्ग २ श्लो० ९१ पत्र ८८ |
| पर्पट स्यात् पर्पटको वरतिक्तश्च नामतः ।<br>रजो रेणुश्च पांसुश्च कवचश्चर्मकण्टक. ॥<br>पत्र १४२ | पर्पट स्यात् पर्पटको वरतिक्तः[6] सुतिक्तकः ।<br>रजो रेणुश्च [7]पांशुश्च कवचो [8]चर्मकण्टक ॥<br>वर्ग १ श्लो० ४५ पत्र १६ |
| बला भद्रौदनी वाटी समाह्वा खरयष्टिका ।<br>महासमाह्वौदनिका शीतपाक्योदनाह्वया ॥<br>पत्र. १४३ | बला भद्रौदनी वाटी समाह्वा खरयष्टिका ।<br>महासमाह्वौदनिका शीतपाक्योदनाह्वया ॥<br>वर्ग १ श्लो०२८० पत्र ६४ |
| महाबला वर्षपुष्पी तथा वाट्यायनी स्मृता ।<br>सहदेवी देवसहा पीतपुष्पी बृहत्फला ॥<br>बलिकाऽतिबला ज्ञेया वाट्यपुष्पी च कङ्कता ।<br>ऋष्यप्रोक्ता ऋक्षगन्धा सैव भूरिबला मता ॥<br>पत्र. १४४ | महाबला वर्षपुष्पी तथा वाट्यायनी स्मृता ।<br>सहदेवा देवसहा पीतपुष्पी बृहत्फला ॥<br>बलिकाऽतिबला प्रोक्ता वाट्यपुष्पी च कङ्कता ।<br>वृष्या प्रोक्ता वृष्यगन्धा सैव भूरिबला मता॥<br>वर्ग १ श्लो०२८२, २८६ पत्र. ६५ |
| वात-पित्तापहं ग्राहि बल्यं वृष्यं बलात्रयम् ।<br>पत्र. १४४ | वातपित्तापहं ग्राहि बल्यं वृष्य बलात्रयम् ।<br>वर्ग १ श्लो०२८७ पत्र. ६५ |

१ मदकरः कालि° क ख. ग. ॥ २. °ह्वा शङ्खमालिनी क. ङ. ॥ ३. तिरीटी क. ख ङ. ॥ ४. कार्ष्य क. । ५. यवानिका ख. ग. ॥ ६. तिक्तश्च नामतः । रजो क. ख. ग. घ. ङ ॥ ७ पांशुश्च ग. ङ. ॥ ८. ब्रह्मकण्टकः ग; कर्मकण्टकः त. ॥ ९ °बला वाट्यपुष्पी क. ॥ १०. °पुष्पा बृ° क. ङ. ॥

**निघण्टुशेषटीका**

हिङ्गु रामठमत्युग्रं जन्तुघ्नं भूतनाशनम् ।
अगूढगन्धं **बाल्हीकं** जरणं सूपधूपनम् ॥
पत्र १४५

हिङ्गुपत्री तु **कारवी** पृथ्वीका **पृथुका** पृथु. ।
बाष्पिका दीर्घिका तन्वी बिल्विका दारुपत्रिका ।।
नाडी हिङ्गुपलाशा **च** जतुका रामठी **रसा** ।
वशपत्री वेणुपत्री **पिण्डा** हिङ्गु शिवाटिका ॥
पत्र १४६

काकजङ्घा ध्वाङ्क्षजङ्घा **मद्ध्वाङ्क्षा सुलोमशा**
पारापतपदी दासी नदीकान्ता प्रचीबला
पत्र १४६

काकनासा ध्वाङ्क्षनासा काकतुण्डफला च सा ।
सुर**ङ्गा** तस्कर**ा** स्नायुर्ध्वाङ्क्षतुण्डफला मता ॥
पत्र १४७

पाषाणभेदकोऽश्मघ्न शिलाभेदोऽश्मभेदक ।
स चैवोपलभेदश्च **नगविध्वंसकोऽश्मभित्**॥
पत्र १४७

**हपुषा** वपुषा **विस्रा** विस्रगन्धा **विगन्धिका** ।
पत्र १४७

अन्याऽश्वत्थफला(?)कच्छूघ्नी ध्वाङ्क्षनासिका ।
पत्र १४८

शणपुष्पी बृहत्पुष्पी **स चोक्कः** शणघण्टकः ।
महाशणो माल्यपुष्पी **वामनी** कटुतिक्तका ।
पत्र १४८

शालपर्णी स्थिरा सौम्या त्रिपर्ण्यतिगुहा ध्रुवा ।
विदारिगन्धांशुमती दीर्घमला **च पीतनी** ॥
सर्वानुकारिणी तन्वी दीर्घपर्णी च पर्णिका ॥
पत्र १४९

भार्गी गर्दभशाकश्च पद्मा ब्राह्मणयष्टिका ।
अङ्गारवल्ली **हञ्जी च वर्दो बर्बरकस्तथा** ।
शुक्रमाता च कासघ्नी भृगुजा भार्ग**वपर्णिनी**।
पत्र १५०

**धन्वन्तरीयनिघण्टु**

हिङ्गु रामठमत्युग्रं जन्तुघ्नं[1] भूतनाशनम् ।
अगूढगन्धं बाह्लीकं जरणं सूपधूपनम् ॥
वर्ग २ श्लो० ३६ पत्र ७७

हिङ्गुपत्री तु **कवरी** पृथ्वीका पृथुला पृथुः ।
बाष्पिका दीर्घिका तन्वी बिल्विका दारुपत्रिका ॥
नाडी हिङ्गुपलाशा[2] तु जन्तुका रामठी **च सा** ।
वशपत्री वेणुपत्री **पिण्डहिङ्गु** शिवाटिका ॥
वर्ग २ श्लो० ३८, ४० पत्र ७७

काकजङ्घा ध्वाङ्क्षजङ्घा **काकपादा तु लोमशा** ।
पारावतपदी दासी नदीकान्ता प्रचीबला ॥
वर्ग ४ श्लो० २३ पत्र १३८

काकनासा ध्वाङ्क्षनासा काकतुण्डफला च सा ।
**सुरङ्गी** तस्करस्नायुर्ध्वाङ्क्षतुण्डफला मता ॥
वर्ग ४ श्लो० २५ पत्र १३९

पाषाणभेदकोऽश्मघ्न शिलाभेदोऽश्मभेदक ।
स चैवोपलभेदश्च **नगभिद् दृषदश्मजित्** ॥
वर्ग १ श्लो० १५७ पत्र ३६

**हपुषा विपुषा**[3]**विश्रा** विश्रगन्धाऽतिगन्धिका ।
वर्ग २ श्लो० ९ पत्र ७०

अपरा चाश्वत्थफला[4]कच्छुघ्ना ध्वाङ्क्षनाशिनी ॥
वर्ग २ श्लो० ९ पत्र ७०

[5]शणपुष्पी बृहत्पुष्पी **सा चोकना**[6] शणघण्टिका
महाशणो माल्यपुष्पी वमनी कटुतिक्तका ॥
वर्ग १ श्लो० २०० पत्र ४७

शालिपर्णी स्थिरा सौम्या त्रिपर्ण्यतिगुहा ध्रुवा ॥
विदारिगन्धाऽशुमती दीर्घमूला **सुपत्रिका** ।
सर्वानुकारिणी तन्वी दीर्घपर्णी च पर्णिका ॥
वर्ग १ श्लो० ८७, ८८, ९१ पत्र ३३

भार्गी गर्दभशाकं **च** पद्मा ब्राह्मणयष्टिका ।
अङ्गारवल्ली[7]**फञ्जी**[8]**च सैव ब्रह्मसुवर्चला**॥
[10]शुक्रमाता च कासघ्नी भृङ्गजा भार्गवा[11]**मता**॥
वर्ग १ श्लो० ६८, ६९ पत्र २०

---

१ °**घ्नं शूलनाशनम्** । क ७. ॥ २ °**शाख्यो ज** ° क. ख घ. ङ ॥ ३. **विश्वा मिश्रगन्धा** छ ॥ ४ **कच्छुघ्नी** ङ ॥ ५. **पणपुष्पी** क. ङ. च ॥ ६ ° **का पण** ° क. ॥ ७. °**धानो मा** ° क. भ ॥ ८. **फाञ्जी** ञ. ॥ ९. °**श्रीयं वर्चो बर्बरकस्तथा** ॥६॥ **ञ** ° क. छ च ॥ १०. **शुक्रमाता** ञ. ॥ ११. °**वामणीः** । ञ ॥

**निघण्टुशेषटीका**

यवतिक्ता शङ्खिनी च दृढपादा विसर्पिणी ।
नाकुली चाक्षिपिण्डा च चित्रमाला यशस्करी॥
पत्र १५१

तेजस्विनी तेजवती तेजोह्वा तेजनी तिजा ।
अश्वघ्नी वल्कला शीता पारिजाता महौजसी ॥
पत्र १५१

मिश्रेया तालकर्णी च तालपर्णी मिसिस्तथा ।
शालेय स च शालीनो नाम्ना शीतशिवो मत ॥
पत्र. १५२

तालीसकं तु तालीस पत्र तालीसपत्रकम् ।
तद्वदामलकीपत्र पत्राटयं च सुखादनम् ॥
पत्र १५३

मासी कृष्णजटा हिंस्रा नलदा जटिलाऽऽमिषी ।
जटा च पिशिता मेषी क्रव्यादी च तपस्विनी ॥
पत्र १५३

द्वितीया गन्धमासी च केशी भूतजटा स्मृता ।
पैशाची पूतना केशी भूतकेशी सुलोमशा ॥
पत्र १५४

मुरा गन्धवती दैत्या गन्धाढ्या गन्धमादनी ।
सुरभिर्भूरिगन्धा च कुटी गन्धकुटी स्मृता ॥
पत्र. १५४

प्रपौण्डरीक चक्षुष्यं पौण्डर्यं पुण्डरीयकम् ।
पौण्डरीकं शतपुष्पं सुपुष्पं सानुमानकम् ॥
पत्र १५५

जन्तुवारा जन्तुकृष्णा जतुका रजनी स्मृता ।
जननी चैव संस्पर्शा जतुका चक्रवर्तिनी ॥
पत्र १५५

मांसरोहिण्यतिरुहा वृत्ता चर्मकशा कशा ।
विकसा मांसरोहा च रुहा रक्ता प्रकीर्तिता ॥
पत्र. १५६

रक्तपादी शमीपत्रा समङ्गाऽञ्जलिकारिका ।
नमस्कारी गण्डकाली नाम्ना (?रास्ना)
खदिरिका मता ॥
पत्र. १५६

**धन्वन्तरीयनिघण्टु**

यवतिक्ता शङ्खिनी तु दृढपादा विसर्पिणी ।
नाकुली चाक्षपीडा च नेत्रमीला यशस्करी ॥
वर्ग १ श्लो० २५६ पत्र ५९

तेजस्विनी तेजवती [1]तेजोह्वा तेजनीति च ।
[2]अश्वघ्नी वल्कला शीता पारिजाता महौजसी ॥
वर्ग १ श्लो० २६६ पत्र ६१

मिश्रेया तालपर्णी तु तालपत्री मिशिस्तथा ।
शालेय स च शालीनो नाम्ना शीतशिवो मत ॥
वर्ग २ श्लो० ४ पत्र ६९

तालीसकं तु तालीसं पत्रं तालीसपत्रकम् ।
नीलमामलकीपत्रं पत्राटयं च शुकोदरम् ।
वर्ग २ श्लो० ५३ पत्र ८०

मासी कृष्णजटा हिंस्रा नलदा जटिला मिशी ।
जटा च पिशिता पेशी क्रव्यादी च तपस्विनी ॥
वर्ग ३ श्लो० ४५ पत्र १०४

द्वितीया गन्धमासी स्यात् केशी भूतजटा स्मृता ।
पिशाची पूतना केशी भूतकेशी च लोमशा ॥
वर्ग ३ श्लो० ४७ पत्र १०५

मुरा गन्धवती दैत्या गन्धाढ्या गन्धमालिनी ।
सुरभिर्भूरिगन्धा च कुटी गन्धकुटी स्मृता ॥
वर्ग ३ श्लो० ६७ पत्र. १०९

प्रपौण्डरीकं चक्षुष्यं पुण्डर्यः पुण्डरीयकम्
[3]सितपुष्पं सुपुष्पं स्याच्छ्रीपुष्प सानुजानुजम् ॥
वर्ग ३ श्लो० ९२ पत्र. ११४

जन्तुकारी जन्तुकृष्णा जतुका रञ्जनी स्मृता ।
जननी चैव संहर्षा जन्तुका चक्रवर्तिनी ॥
वर्ग ४ श्लो० ८८ पत्र १५१

मांसरोहिण्यतिरुहा वृत्ता चर्म[4]कसा च सा ।
विकसा मांसरोहा च रुहा रक्ता प्रकीर्तिता ॥
वर्ग ४ श्लो० ९४ पत्र. १५२

रक्तपादी शमीपत्रा समङ्गाऽञ्जलिकारिका ।
नमस्कारी गन्धकारी स्पर्शसंकोचपर्णिका
वर्ग ४ श्लो० १०९ पत्र. १५५

---

१. तेजोका ग ॥ २. अश्वघ्ना क कशा च त. ॥ ३. शीतपुष्पं ग ॥ ४. कषा च ग;

| निघण्टुशेषटीका | धन्वन्तरीयनिघण्टु |
| --- | --- |
| रक्तपादपरा प्रोक्ता विषमन्थिस्त्रिपादपि<br>हंसपादी हसपदी घृतमण्डलकश्च सा ।<br>पत्र १५१ | रक्तपादपरा प्रोक्ता विश्वमन्थिस्त्रिपादपि ।<br>हंसपादी हसपदी घृतमण्डलिका च सा ॥<br>वर्ग ४ श्लो० १११ पत्र. १५६ |
| जलपिप्पल्यभिहिता शारदी तोयपिप्पली<br>मत्स्यादनी मत्स्यगन्धा लाङ्गली शकुलादनी ॥<br>पत्र १५७ | जलपिप्पल्यभिहिता शारदी तोयपिप्पली ।<br>मत्स्यादनी मत्स्यगन्धा लाङ्गली शकुलादनी ॥<br>वर्ग ४ श्लो० ६४ पत्र १४७ |
| बुको वसुक इत्युक्त शिवाङ्क शिवशेखर ।<br>महापाशुपतश्चैव सुव्रत शिवमल्लिका ॥<br>पत्र. १५८ | बुको वसुक इत्युक्त शिवाह्वः शिवशेखर ।<br>महापाशुपतश्चैव सुव्रत शिवमल्लिका ॥<br>वर्ग ४ श्लो० १९ पत्र. १३८ |
| अतिविषा शुक्लकन्दा ज्ञेया विश्वा च भङ्गुरा ।<br>श्यामकन्दा प्रतिविषा शृङ्गी चोपविषा विषा ॥<br>पत्र १५८ | अतिविषा शुक्लकन्दा ज्ञेया विश्वा चभङ्गुरा ।<br>श्यामकन्दा प्रतिविषा शृङ्गी चोपविषा विषा ॥<br>वर्ग १ श्लो० १० पत्र ८ |
| मेदा ज्ञेया मणिच्छिद्रा माल्यवर्णा धराऽपि च ।<br>महामेदा देवमणिर्वसुच्छिद्रा प्रकीर्तिता ॥<br>पत्र १५९ | मेदा ज्ञेया मणिच्छिद्रा शल्यपर्णी धराऽपि च ।<br>महामेदा देवमणिर्वसुच्छिद्रा प्रकीर्तिता ॥<br>वर्ग १ श्लो० १२७ पत्र. ३० |
| काकादनी काकपीलु काकशिम्बिश्च रक्तिका ।<br>वक्रशल्या ध्वाङ्क्षनखी दुर्मोद्धा काकनन्तिका ।<br>चूडामणि शीतपाकी शिखण्डा कृष्णला मता ।<br>उच्चटा ताम्रिका गुञ्जा [चटकी काकमाह्वया] ॥<br>पत्र १६० | काकादनी काकपीलु [1]काकणन्ती च रक्तिका ।<br>वक्रशल्या ध्वाङ्क्षनखी दुर्मोहा काकणन्तिका<br>चूडामणि शीतपाकी शिखण्डी कृष्णला मता ।<br>उच्चटा ताम्रिका गुञ्जा चटकी काकमाह्वया ॥<br>वर्ग ४ श्लो० २७,२९ पत्र १३९,१४० |
| पाठाऽम्बष्ठाऽम्बष्ठकी च प्राचीना पापचेलिका ।<br>वृकतिक्ता वनतिक्ता पापिका स्थापनी वृकी ॥<br>पत्र १६१ | पाठाऽम्बष्ठाऽम्बष्ठकी च प्राचीना [2]पापचेलिका<br>वरतिक्ता वृद्धतिक्ता पाठिका स्थापनी वृकी ॥<br>वर्ग १ श्लो० ७० पत्र २० |
| शतावरी शतपदी पीवरीन्दीवरी वरी ।<br>ऋक्षप्रोक्ता द्वीपिशत्रुर्द्वीपिका खरकण्टका ॥<br>सह[स्र]वीर्याऽभीरश्च तुङ्गिनो बहुपत्रिका ।<br>महापुरुषदत्ता च शतावर्यूर्ध्वकण्टका ॥<br>पत्र १६२ | शतावरी शतपदी पीवरीन्दीवरी वरी ।<br>ऋष्यप्रोक्ता द्वीपिशत्रुर्द्वीपिका[3] चोर्ध्वकण्टका ॥<br>सहस्रवीर्या भीरुश्च [4]रङ्गिणी बहुपत्रिका ।<br>महापुरुषदन्ता च शतावर्यूर्ध्वकण्टिका ॥<br>वर्ग १ श्लो० २९१-३ पत्र ६६-६७ |
| कटुका मत्स्यशकुला मत्स्यपित्ता च रोहिणी ।<br>कृष्णभेदा चन्द्ररुहा नाम्ना कटुकरोहिणी ॥<br>अशोका रोहिणी तिक्ता चक्राङ्गी शकुलादनी ।<br>कटुरोहिण्यरिष्टा च प्रोक्ता तिक्तकरोहिणी ॥<br>पत्र १६३ | कटुका मत्स्यशकला मत्स्यपित्ता च रोहिणी ।<br>कृष्णभेदा काण्डरुहा नाम्ना कटुकरोहिणी ॥<br>अशोकरोहिणी तिक्ता चक्राङ्गी शकुलादनी ।<br>कटुरोहिण्यरिष्टा च प्रोक्ता तिक्तकरोहिणी ॥<br>वर्ग १ श्लो० ३७-३८ पत्र १४-१५ |

१. काकशिम्बी च ङ. छ ॥ २. पापचेलिका क ॥ ३ °का खरकण्टका ॥ झ ॥ ४. तुङ्गिनी ख ङ. च, ण ॥

| निघण्टुशेषटीका | धन्वन्तरीयनिघण्टु |
|---|---|
| मञ्जिष्ठा कालमेषी च समङ्गा विकसाऽरुणा ।<br>मञ्जुला रक्तयष्टिश्च भण्डी योजनवल्ल्यपि ॥<br>पत्र १६४ | मञ्जिष्ठा कालमेषी च समङ्गा विकसाऽरुणा ।<br>मञ्जुका रक्तयष्टी च भाण्डी योजनवल्ल्यपि ।<br>वर्ग १ श्लो० १७ पत्र. १० |
| मरिचं मलिनं श्यामं वेल्लजं कृष्णमूषणम् ।<br>यवनेष्टं शिरोवृत्तं कोलक धार्मपत्तनम् ॥<br>पत्र १६५ | मरिचं [1]पलितं श्यामं वल्लीजं कृष्णमूषणम् ।<br>यवनेष्टं शिरोवृत्तं कोलकं[2] धर्मपत्तनम् ॥<br>वर्ग २ श्लो० ८८ पत्र ८७ |
| पिप्पली मागधी कृष्णा चपला तीक्ष्णतण्डुला ।<br>उपकुल्या कणा श्यामा कोला शौण्डी तथोषणा ॥<br>पत्र. १६६ | पिप्पली मागधी कृष्णा चपला तीक्ष्णतण्डुला ।<br>उपकुल्या कणा श्यामा कोला शौण्डी तथोषणा ॥<br>वर्ग २ श्लो० ७३ पत्र. ८४ |
| मूलं च पिप्पलीमूल ग्रन्थिक चटकाशिर ।<br>कोलमलं कटुग्रन्थि सर्वग्रन्थिकमलकम् ॥<br>पत्र १६६ | मूलं च पिप्पलीमूलं ग्रन्थिकं[3] चविकाशिर ।<br>[4]कोलमूल [5]कटुग्रन्थि सर्वग्रन्थिकमूषणम् ॥<br>वर्ग २ श्लो० ७५ पत्र. ८४ |
| चविका कोलवल्ली च चव्य चवनमेव च ।<br>पत्र १६६ | चविका कोलवल्ली च चव्यं चविकमेव च ॥<br>वर्ग २ श्लो० ७६ पत्र ८५ |
| तस्याः फल विनिर्दिष्ट श्रेयसी हस्तिपिप्पली ।<br>पत्र १६७ | तस्याः फल विनिर्दिष्टं श्रेयसी गजपिप्पली ।<br>वर्ग २ श्लो० ७८ पत्र ८५ |
| अश्वखुर श्वेतपुष्पी श्वेता च गिरिकर्णिका ।<br>कटभी श्वेतनामा च श्वेतस्यन्दाऽपराजिता ॥<br>नीलपुष्पी महाश्वेता गिरिकर्णी गवादनी ।<br>वेशी चान्युग्रगन्धा च नीलस्यन्दा प्रकीर्तिता ॥<br>पत्र १६८ | [6]अश्वखुर श्वेतपुष्पी श्वेता च गिरिकर्णिका ।<br>[7]कटभी श्वेतनामा च श्वेतस्पन्दाऽपराजिता ॥<br>नीलपु[8]ष्पा महाश्वेता गिरीकर्णी [9]गवादनी ।<br>वल्ली चान्युग्रगन्धा च नीलस्पन्दा प्रकीर्तिता ॥<br>वर्ग ४ श्लो ८४, ८५ पत्र, १५१ |
| ऐन्द्रीन्द्रवारुणीन्द्राह्वा इन्द्रैर्वारुर्विषादनी ।<br>गवादनी क्षुद्रफला विशालाक्षी गवाक्ष्यपि ॥<br>पत्र १६८ | ऐन्द्रीन्द्रवारुणीन्द्राह्वाऽथेन्द्रवारुर्मृगादनी ।<br>गवादनी क्षुद्रफला वृषभाक्षी गवाक्ष्यपि ॥<br>वर्ग १ श्लो० २४८ पत्र. ५८ |
| अन्येन्द्रवारुणी प्रोक्ता विशाला तु महाफला ।<br>आत्मरक्षा चित्रफला तुम्बली त्रपुसी च सा<br>श्वेतपुष्पा मृगाक्षी च मृगेर्वारुर्मृगादनी ।<br>हस्तिदन्ती नागदन्ती वारुणी गजचिर्भिटी ॥<br>पत्र. १६९ | अन्येन्द्रवारुणी प्रोक्ता विशाला च महाफला ।<br>आत्मरक्षा चित्रफला त्रपुसी त्रपुसा च सा ॥<br>श्वेतपुष्पी मृगाक्षी च मृगेर्वारुर्मृगादनी ।<br>हस्तिदन्ती नागदन्ती वारुणी गजचिर्भटा ॥<br>वर्ग १ श्लो० २५०-२५२ पत्र ५८, ५९ |
| शारिवा शारदी गोपी गोपवल्ली प्रतानिका ।<br>गोपकन्या लता सीता श्वेतोक्ता काष्ठशारिवा ॥<br>पत्र १७० | सारिवा शारदा गोपा गोपवल्ली प्रतानिका ।<br>गोपकन्या [10]लताऽऽस्फोता श्वेतोक्ता काष्ठ-सारिवा ॥<br>वर्ग १ श्लो० १६१ पत्र. ३८ |

१ °चं मलिनं श्यामं ग. ङ. ॥ २. °कं चर्मपत्रकम् ङ ॥ ३. °कं वटिकाशिरः ख ग ॥ ४. कौल° ख. ग. ॥ ५. कणाग्रन्थि ग ॥ ६. अश्वखुरः क ज. ग. ॥ ७. कटभिः श्वे° क. ङ. ॥ ८. °पुष्पी क. ख. प. ढ. ॥ ९. गवाद्दिनी क. ख. ग. ङ. ॥ १०. लताऽऽस्फोटा क. ॥

## निघण्टुशेषटीका

शारिवाऽन्या कृष्णमूला कृष्णा चन्दनशारिवा ।
भद्रा चन्दनगोपी च चन्दना कृष्णवल्ल्यपि ॥
पत्र. १७०

मूर्वा मधुरसा देवी पृथक्त्वक् पीलुपर्ण्यपि ।
देवश्रेणी स्वादुरसा स्निग्धपर्णी च मोरटा ॥
पत्र १७१

कलिकारी तु हलिनी विशल्या गर्भपातनी ।
लाङ्गल्यग्निमुखी सैरी दीप्ताऽनन्तेन्द्रपुष्पिका ॥
पत्र १७२

गुडूच्यमृतवल्ली च छिन्ना छिन्नरुहाऽमृता ।
छिन्नोद्भवाऽमृतलता धरा वत्सादनी स्मृता ॥
सैवोक्ता सोमवल्ली च कुण्डली चक्रलक्षणा ।
जीवन्ती मधुपर्णी च तन्त्रिका देवनिर्मिता ॥
वयस्था कुण्डली सौम्या विशल्याऽमृतसम्भवा ।
पिण्डामृता बहुच्छिन्ना सा चोक्ता कन्दरोहिणी
रसायनी कुष्ठरुहा स्वरदा ज्वरनाशनी ॥
पत्र १७३

जीमूतको देवताडो वृत्तकोशो गरागरी ।
प्रोक्ताऽऽखुविषहा वेणी देवताडो च ताडकः ॥
पत्र १७३

कोशातकी कृतच्छिद्रा जालिनी कृतवेधना ।
क्ष्वेडा सुतिक्ता घण्टाली मृदङ्गफलिका मता ॥
धामार्गव कोशफलो राजकोशातकी तथा ।
कर्कोटकी पीतपुष्पी महाजालो तथोच्यत ॥
पत्र १७४

क्षीरिणी काञ्चनक्षीरी पटुपर्णी च धर्षणी ।
तिक्तदुग्धा हैमवती हेमदुग्धा हिमावर्ना ॥
स्वर्णक्षीरी स्वर्णदुग्धा सुवर्णक्षीरिकाऽपि च ।
हिमाह्वा कनकक्षीरी हेमक्षीरा च काञ्चनी ॥
पत्र. १७५

द्रवन्ती शम्बरी चित्रा न्यग्रोधी मूषकाह्वया ।
प्रत्यक्श्रेणी वृषा रण्डा पुत्रश्रेण्याखुपर्णिका ॥
पत्र १७६

## धन्वन्तरीयनिघण्टु

सारिवाऽन्या कृष्णमूली कृष्णा चन्दनसारिवा ।
भद्रा चन्दनगोपा तु चन्दना कृष्णवल्ल्यपि ॥
वर्ग १ श्लो० १६२ पत्र ३८
मूर्वा मधुरसा देवी पृथक्पर्णी त्रिपर्ण्यपि ।
देवश्रेणी स्वादुरसा स्निग्धपर्णी च मोरटा ॥
वर्ग १ श्लो० १३ पत्र. ९
कलिकारी तु हलिनी विशल्या गर्भपातिनी ।
लाङ्गल्याऽग्निमुखी सीरी दीप्ता नक्तेन्दुपुष्पिका
श्लो०९ पत्र. १३५

गुडूच्यमृतवल्ली च छिन्ना छिन्नरुहाऽमृता ।
छिन्नोद्भवाऽमृतलता धारा वत्सादनी स्मृता ॥
सैवोक्ता सोमवल्ली च कुण्डली चक्रलक्षणा ।
प्रोक्ता रागकुमारी च छिन्नाङ्गी ज्वरनाशिनी ॥
जीवन्ती मधुपर्णी च तन्त्रिका देवनिर्मिता ।
वयस्था मण्डली सौम्या विशल्याऽमृतसम्भवा ॥
पिण्डामृता बहुच्छिन्ना सा चोक्ता कन्दरोहिणी ।
रसायनी मृत्तिका च चन्द्रहासा भिषग्जिता
कन्या कन्दोद्भवा कन्दाऽमृतकन्दा गुडूचिका ।
वर्ग १ श्लो० १-५ पत्र. ७-८
जीमूतको [1]देवताडो वृत्तकोशो गरागरी ।
प्रोक्ताऽऽखुविषहा वेणी देवदाली च ताडका ॥
वर्ग १ श्लो ४० पत्र ७-८

कोशातकी कृतच्छिद्रा जालिनी कृतवेधनी ।
क्ष्वेडा सुतिक्ता घण्टाली मृदङ्गफलिका मता ॥
धामार्गव कोशफला राजकोशातकी तथा ।
कर्कोटकी पीतपुष्पा महाजाली निरुच्यते ॥
वर्ग १ श्लो० १९२,१८९ पत्र ४६-४५
क्षीरिणी काञ्चनक्षीरी कटुपर्णी च धर्षिणी ।
तिक्तदुग्धा हैमवती हेमदुग्धा हिमावती ॥
सर्वक्षीरी स्वर्णदुग्धा सुवर्णक्षीरिका[3]ऽपि च ।
[4]हेमाह्वा कनकक्षीरी हेमक्षीरी च काञ्चनी ॥
वर्ग १ श्लो० २४०,२४२ पत्र. ५६,५७
द्रवन्ती शम्बरी चित्रा न्यग्रोधा [5]मूषिकाह्वया ।
प्रत्यक्श्रेणी विषा चण्डा [6]पुत्रश्रेण्याखुपर्णिका ॥
वर्ग १ श्लो० २२९ पत्र ५४

---

१. °ताङ्गो वृत्त° क ताङ्गो गकोशा नागरा गिरा । प्रोक्ता ङ. च ॥
२. °तकी फला क ख. ग ङ. च ॥ ३. °का मना हे° क ङ. ॥ ४. हेमाङ्गा क. ॥
५. मूळका° ङ ॥ ६. पुत्रश्रृङ्ग्याखु° क. घ. ङ. च ॥

| निघण्टुशेषटीका | धन्वन्तरीयनिघण्टु |
|---|---|
| पद्मिनी स्यात् पुटकिनी नलिनी च कुमुद्वती ।<br>पलाशिनी पद्मवती वनखण्डं स चाऽऽकरः ॥[1]<br>पत्र १७६ | पद्मिनी स्यात् कुटपिनी नलिनी च कुमुद्वती ।<br>पलाशिनी पद्मवती वनेखण्डा सरोरुह ॥<br>वर्ग ४ श्लो० १५७ पत्र. १६६ |
| बिसं मृणाल बिसिनी मृणाला स्यान्मृणालिका ।<br>मृणालं पद्मनालं तु तन्तुलं नलिनीरुहम् ॥<br>पत्र १८० | बिसं मृणालं बिसिनी मृणाली स्यान्मृणालिका ।<br>मृणालकं पद्मनालं तण्डुलं नलिनीरुहम् ॥<br>वर्ग ४ श्लो० १६१ पत्र. १६७ |
| पद्मकेसरमापीत किञ्जल्क किञ्जमेव च ।<br>मकरन्द तथा तुङ्ग गौरं काञ्चनमेव च ॥<br>पत्र. १८० | पद्मकेसरमापीत किञ्जल्क किञ्जमेव च ।<br>मकरन्द तथा तुङ्ग गौर काञ्चनकं च तत् ॥<br>वर्ग ४ श्लो० १६५ पत्र १६७ |
| पद्ममूल तु शालूक शकल करहाटकम् ।<br>शालीन पद्मकन्द तु जलालूकं निगद्यते ॥<br>पत्र १८० | पद्ममूलं तु शालूक सकलं करहाटकम् ।<br>शालिन पद्मकन्द च जलालूक निगद्यते ॥<br>वर्ग ४ श्लो० १६३ पत्र १६७ |
| पद्मबीज तु गालोड्य पद्माक्षं पद्मकर्कटी ।<br>पत्र १८१ | पद्मबीज तु पद्माक्ष गालोड्यं पद्मकर्कटी ।<br>वर्ग ४ श्लो० १५९ पत्र १६२ |
| शतपुष्पा मिसिर्घोषा शिफका माधवी शिफा ।<br>अतिच्छत्रा त्ववाक्पुष्पा शताह्वा कारवी स्मृता ॥<br>पत्र १८२ | शतपुष्पा मिशिर्घोषा[2] पौतिका[3] माधवी शिफा ।<br>[4]अतिच्छत्रा त्ववाक्पुष्पी शताह्वा कारवी स्मृता ॥<br>वर्ग २ श्लो०१ पत्र ६९ |
| कुञ्चिका चोपकुञ्ची च कालिका चोपकालिका ।<br>सुषवी कुञ्चिका कुञ्चा पृथ्वी कृष्णे च जीरके<br>पत्र १८३ | उपकुञ्चा[5] चोपकुञ्ची कालिका चोपकालिका ।<br>सुषवी[6] कुञ्चिका कुञ्चा पृथ्वीका स्थूलजीरकः ॥<br>वर्ग २ श्लो०५९ पत्र ८१ |
| पलाण्डुर्यवनेष्टश्च सुकन्दो मुखदूषण ।<br>हरण<br>पत्र. १८४ | पलाण्डुर्यवनेष्टश्च सुकन्दो मुखदूषण[7] ।<br>वर्ग ४ श्लो०७१ पत्र. १४८ |
| हरणोऽन्य पलाण्डुस्तु लतार्को दुर्द्रुमश्च सः ।<br>पत्र. १८४ | हरितोऽन्य पलाण्डुश्च लतार्को दुद्रुमः[8] स्मृतः<br>वर्ग ४ श्लो०७१ पत्र १४८ |
| सातला सप्तला सारी विपुला विमलाऽमला ।<br>बहुफेना चर्मकसा फेना दीप्ता रसालिका ॥<br>पत्र १८५ | सातला सप्तला सारी विपुला [9]विमलाऽमला ।<br>बहुफेना चर्मकषा फेना दीप्ता मरालिका ॥<br>वर्ग १ श्लो०२३८ पत्र. ५६ |
| प्रसारणी सुप्रसरा सरणी सारणी च सा ।<br>चारुपर्णी राजबला भद्रपर्णी प्रतानिका ॥<br>पत्र. १८५ | प्रसारणी सुप्रसरा सरणी सारणी च सा ।<br>चारुपर्णी राजबला भद्रपर्णी प्रतानिका ॥<br>वर्ग १ श्लो०२८९ पत्र. ६६ |
| वृद्धदारक आवेगी जुङ्गको जीर्णवालकः ।<br>अन्त्रः कोटरपुष्पी स्यादजाण्डी छगलाण्ड्यपि ॥<br>पत्र. १८७ | वृद्धदारुक आवेगी जुङ्गको[10] दीर्घवालुकः ।<br>वृद्धः कोटरपुष्पी स्यादजान्त्री छागलान्त्र्यपि ॥<br>वर्ग ४ श्लो०१०७ पत्र १५५ |

१. °खण्डं स चाकरः हैमनिघण्टुशेषटीकोद्धरणे । २. °षा पौतिका क; °षा पोतिका ग. ङ, °षा शाफिका ख ॥ ३. मागधी ग. ॥ ४. आहिच्छत्रा ह्यवाक्° ख. ॥ ५. °कुञ्चीकोपकुञ्ची क्ष. ॥ ६. °वी कारवी कुञ्ची फ. ङ. ॥ ७ °दूषकः ग. घ. ॥ ८. दुद्रुमो मतः ग. ॥ ९. बिन्दुला च. १०. °कोजीर्णवालुकः ज. त. ॥

| निघण्टुशेषटीका | धन्वन्तरीयनिघण्टु |
|---|---|
| सुवर्चलाऽऽदित्यकान्ता सूर्यभक्ता सुखोद्भवा ।<br>मण्डूकपर्णी मण्डूकी वदराऽऽदित्यवल्ल्यपि ॥<br>पत्र. १८७ | सुवर्चलाऽऽदित्यकान्ता सूर्यभक्ता सुखोद्भवा ।<br>मण्डूकपर्णी मण्डूकी वरदाऽऽ¹दित्यवल्ल्यपि ॥<br>वर्ग ४ श्लो०९८ पत्र १५३ |
| भृङ्गराजो भृङ्गरजो मार्कवो भृङ्ग एव च ।<br>अङ्गारको भेकरजो भृङ्गार केशरञ्जन ॥<br>पत्र. १८८ | भृङ्गराजो भृङ्गरजो मार्कवो भृङ्ग एव च ।<br>भृङ्गारको भृङ्गरेणुर्भृङ्गार केशरञ्जन ॥<br>वर्ग ४ श्लो० ११ पत्र १३६ |
| कासमर्दोऽरिमर्दश्च कासारि कर्कशस्तथा ।<br>कालं कनक इत्युक्त स च स्यात् कासमर्दक ॥<br>पत्र १८८ | कासमर्दोऽरिमर्दश्च कासारि कर्कशस्तथा ।<br>²कालः कनक इत्युक्त स च स्यात् कासमर्दक ॥<br>वर्ग ४ श्लो०११८ पत्र १५७ |
| जीवन्ती जीवनीया च जीवनी जीववर्धनी ।<br>मङ्गल्यनामधेया च शाकश्रेष्ठा यशस्करी ॥<br>पत्र १८९ | जीवन्ती जीवनीया च जीवनी जीववर्धनी ।<br>माङ्गल्यनामधेया च शाकश्रेष्ठा यशस्करी ॥<br>वर्ग १ श्लो०१४० पत्र. ३३ |
| क्षुद्राम्लिका तु चाङ्गेरी लोणिका चाम्ललोणिका ।<br>लोला लाङ्गा चतुष्पर्णी सैवदन्तशठा मता ॥<br>पत्र १९० | क्षुद्राम्लिका तु चाङ्गेरी ⁴लोणिका चाम्ललोणिका ।<br>लोला लोणा चतुष्पर्णी सैव दन्तशठा मता ॥<br>वर्ग ५ श्लो० ३६ पत्र १७५ |
| तण्डुलीयक उद्दिष्टखण्डाला तण्डुलेरकः ।<br>गण्डीरस्तण्डुली वाजो मेघनादो घनस्वन ॥<br>पत्र १९० | तण्डुलीयक उद्दिष्टस्तण्डुलस्तण्डुलीयकः ।<br>भण्डीरस्तण्डुली बीजो मेघनादो घनस्वन ॥<br>वर्ग ४ श्लो० ११६ पत्र १५७ |
| काकमाची ध्वाङ्क्षमाची काकसाह्वा च वायसी ।<br>कट्वी कटुफला चैव रसायनवरा स्मृता ॥<br>पत्र १९१ | काकमाची ध्वाङ्क्षमाची काकाह्वा चैव वायसी ।<br>कट्वी कटुफला चैव रसायनवरा स्मृता ॥<br>वर्ग ४ श्लो० २१ पत्र १३८ |
| शितिवार सूचिपत्र शैल्या च सुनिषण्णक ।<br>श्रीवासक शितिवर स्वस्तिक कटुकः शिखी ॥<br>पत्र १९१ | शितिवार सूचिपत्र सूच्याह्वः सुनिषण्णक ।<br>श्रीवारक शितिवर स्वस्तिक कुक्कुटः शिखी ।<br>वर्ग १ श्लो०१५५ पत्र ३६ |
| मूलक हरिपर्ण च वस्तिका क्षारमेव च ।<br>नीलकन्द महाकन्द रुचिष्य हस्तिदन्तकम् ॥<br>पत्र १९२ | मूलकं हरिपर्ण च मृत्तिका क्षारमेव च ।<br>नीलकन्द महाकन्द ⁵रुचिष्य हस्तिदन्तकम् ।<br>वर्ग ४ श्लो०३३ पत्र १४० |
| चाणक्यमूलक चन्यं वालेय मरुसम्भवम् ।<br>शालामर्कटमिश्रं च विष्णुगुप्तमनन्तकम् ॥<br>पत्र १९२ | चाणाक्यमूलक चान्यच्चालेय मरुसम्भवम् ।<br>शालामर्कटकं मिश्रं विष्णुगुप्तं मतं तथा ॥<br>वर्ग ४ श्लो०३५ पत्र १४१ |

१ °दित्यपर्ण्यपि क, ङ, ॥ २. कालकण्टक इति त ॥ ३. °ल्यभागधेया च क, ङ च ॥ ४. °लोटिका क, ङ; °लोडिका भ त ॥ ५. रोचिष्यं ग ॥ ६. °गुप्तं मतं तथा छ, °गुप्तसमं तथा ग ।

| निघण्टुशेषटीका | धन्वन्तरीयनिघण्टु |
| --- | --- |
| पटोल कुलक प्रोक्त पाण्डुकः कर्कशच्छद । | पटोल कुलक प्रोक्त. पाण्डुकः कर्कशच्छद. । |
| राजीफल पाण्डुफलो राजमान्योऽमृताफल ॥ | राजीफलः पाण्डुफलो राजनामाऽमृताफल. ॥ |
| पत्र. १९४ | वर्ग १ श्लो० ४९-५० पत्र. १७ |
| कटुकालाबुनी तुम्बी लम्बा पिण्डफला तथा । | कटुकालाबुनी तुम्बी लम्बा पिण्डफला च सा । |
| इक्ष्वाकु क्षत्रियवरा तिक्तबीजा महाफला ॥ | इक्ष्वाकु क्षत्रियवरा तिक्तबीजा महाफला ॥ |
| पत्र १९५ | वर्ग १ श्लो०१७० पत्र ३९ |
| जीवक शृङ्गक सर्जो दीर्घायु कूर्चशीर्षक । | जीवक शृङ्गक क्ष्वेडो दीर्घायु कूर्चशीर्षक । |
| ह्रस्वाङ्गो मधुर स्वादु प्राणदश्चिरजीव्यपि ॥ | ह्रस्वाङ्गो मधुर स्वादु [1]प्राणदश्चिरजीव्यपि ॥ |
| पत्र १९६ | वर्ग १ श्लो० १२३ पत्र. ३० |
| मूल पुष्करमूल च पौष्करं पुष्कराह्वयम् । | मूल पुष्करमूल च पौष्करं पुष्कराह्वयम् ॥ |
| काश्मीरं पुष्करजटा वीरं तत् पद्मवर्णकम् । | काश्मीर पुष्करजटा [2]वीरं तत्फलपत्रकम् ॥ |
| पत्र १९६ | वर्ग. १ श्लो० ६६ पत्र १९ |
| अजगन्धा खरपुष्पा वस्तगन्धा सुगन्धिका । | अजगन्धा खरपुष्पा वस्तगन्धा विगन्धिका । |
| कबरी बर्बरी गन्धा तुङ्गी पूतिमयूरकः ॥ | कारवी[3] बर्बरा गन्धा तुङ्गी पूतिमयूरिका ॥ |
| पत्र १९७ | वर्ग१ श्लो० १०० पत्र. ९० |
| बिम्बी रक्तफला तुण्डी तुण्डकेरफला च सा । | बिम्वी रक्तफला तुण्डी तुण्डिकेरफला च सा |
| ओष्ठोपमफला गोह्वा पीलुपर्णी च तुण्डिका ॥ | ओष्ठोपमफला[4] गोह्वा पीलुपर्णी च तुण्डिका ॥ |
| पत्र १९७ | वर्ग १ श्लो० २०२ पत्र. ४८ |
| कत्तृण शकलं भूरि पूतीकं रौहिषं मतम् । | कत्तृणं सकल भूतिर्भूतिकं रौहिषं तृणम् । |
| ध्यामक श्यामक पौरं पुद्गलं देवजग्धकम् ॥ | ध्यामक श्यामक पौरं पाटलं [5]देवदंशकम् ॥ |
| पत्र. १९८ | वर्ग ४ श्लो० ८० पत्र २१ |
| भूस्तृणो रौहिषो भूरिः पूतिकोऽथ कुटुम्बक । | भूतृणो रौहिषो भूतिर्भूतिकोऽथ कुटुम्बक । |
| मालातृणश्च पालघ्नं छत्रकश्छत्रसंज्ञकः ॥ | मालातृणः प्रलम्बश्च छत्रोऽतिच्छत्रक-स्तथा ॥ |
| पत्र १९९ | वर्ग ४ श्लो० ४७ पत्र. १४३ |
| मृदुदर्भ कुशो बर्हि सूची वीरस्तु पत्रक । | मृदुदर्भ कुशो बर्हि [6]शुचिवीरः सुपत्रक । |
| खरोऽन्य पृथुल. सीरी गुन्द्राह्वो नीरजो निशिः ॥ | [7]खरोऽन्य. पृथुल शीरी गुन्द्रा च नीरजः स्मृतः ॥ |
| पत्र. १९९ | वर्ग ४ श्लो० १३३ पत्र. १६१ |
| काश काण्डेक्षुरुद्दिष्ट काकेक्षुर्वायसेक्षुक । | काशः काण्डेक्षुरुद्दिष्टः काकेक्षुर्वायसेक्षुक । |
| इक्ष्वारक इक्षुकाण्डः स चैवेक्षुरक स्मृत ॥ | इक्ष्वारिकेक्षुकाण्डश्च स चैवेक्षुरकः स्मृत ॥ |
| पत्र. २०० | वर्ग ४ श्लो० १३० पत्र. १६० |

---

१. प्राणदः क्षीर° च. ॥ २. चिरं ब. ॥ ३. °वी तुम्बगन्धा च तुङ्गी क ॥ ४. °केशफला क ख. ड. ॥ ५. ° फलाकोष्णा क. ख; °फला कोष्ठला ख. च. ॥ ६. देव-दुण्डकम् क. च. ॥ ७. शुचिवीरोऽथ सुपत्रकः। क. ख, ड. ॥ ८. स चाम्यः पृ° क. छ ॥

| निघण्टुशेषटीका | धन्वन्तरीयनिघण्टु |
| --- | --- |
| **नलो नडो नट**श्चैव स च पोटगल स्मृत ।<br>धमनो नर्तवो रन्ध्री शून्यमध्यो बिभीषण ॥<br>पत्र. २०१ | **नडो नटो नल**श्चैव स च पोटगल स्मृत ।<br>धमनो नर्तवो रन्ध्री शून्यमध्यो विभीषण. ॥<br>वर्ग ४ श्लो० १४१ पत्र १६२ |
| शरो बाण **इक्षुकाण्ड इक्ष्वटः** सायक क्षुर ।<br>स्थूलोऽन्य इक्षुरः प्रोक्त **इक्ष्वारश्च पिता महः** ॥<br>पत्र २०२ | शरो वाण **इषुः काण्ड उत्कटः** सायक क्षुर ।<br>स्थूलोऽन्य **इक्षुकः** प्रोक्त **इक्षुरश्चापि नामतः** ।<br>वर्ग ४ श्लो० १३५ पत्र १६१ |
| **नीलो** दूर्वा स्मृता **शस्या** शाद्वलं हरितं तथा ।<br>शतपर्वा शीतवीर्या **शीतवल्ल्यमिता लता** ॥<br>पत्र २०३-४ | नीलदूर्वा स्मृता **शष्पं** [1]शाद्वलं हरित तथा ।<br>शतपर्वा शीतवीर्या **शत**[2]**वल्ल्यपि शीतला** ॥<br>वर्ग ४ श्लो० १४३ पत्र १६२ |
| **श्वेत**दूर्वा तु गोलोमी श्वेत**दण्डी** मिता लता ।<br>महस्रवीर्याऽनन्ता च दुर्मरा भार्गवी रुहा ॥<br>पत्र २०४ | श्वेतदूर्वा तु गोलोमी श्वेत**दण्डा** [3]मिता लता ।<br>सहस्रवीर्याऽनन्ता च दुर्मरा भार्गवी रुहा ॥<br>वर्ग ४ श्लो० १४४ पत्र १६३ |
| गण्डदूर्वा **तु** गण्डाली नीबा मत्स्याक्षिकाऽपि च ।<br>**वल्ली** नाडी बलायश्च **धारणी** शकुलाक्षिका ॥<br>पत्र. २०४ | गण्डदूर्वा **च** गण्डाली नीबा मत्स्याक्षिकाऽपि च ।<br>[4]**वह्नी** नाडी कलापश्च **वारुणी** शकुलाक्षिका ॥<br>वर्ग ४ श्लो० १४५ पत्र १६३ |
| **मुस्तमम्बु**धरो मेघो घनो राजक**शे**रुक ।<br>भद्रमुस्तो वराहो**ष्ट्रो** गाङ्गेय कुरुविन्दक ॥<br>पत्र २०५ | [5]**मुस्ता चाम्बु**धरो मेघो घनो राजक**से**रुक ।<br>भद्रमुस्तो वराहोऽ**ब्दो** गाङ्गेय कुरुविन्दक ॥<br>वर्ग १ श्लो० ४० पत्र १५ |
| परिपेल प्लव वन्य गोपुर स्यात् कुटन्नटम् ।<br>**शत**पुष्पं दाशपुरं गोनर्द जीर्ण**बुध्नकम्** ॥<br>पत्र २०५ | परिपेलं प्लव वन्य गोपुर स्यात् **कुटन्नटम्** ।<br>**सित**पुष्प दासपुर गोनर्द **जीर्णपुष्पकम्** ॥<br>वर्ग ३ श्लो० ५० पत्र १०७ |
| उशीर च मृणाल स्यादभय समगन्धिकम् ।<br>रणप्रिय वीरतर वीर वीरणमूलकम् ॥<br>पत्र २०६ | उशीरं च मृणाल स्यादभयं समगन्धिकम् ।<br>रणप्रियं वीरतर वीरं वीरणमूलकम् ॥<br>वर्ग ३ श्लो० १४ पत्र. ९६ |
| लामज्जक सुनालं स्यादमृणाल लघं लघु ।<br>इष्टकापथक **शीतवीर्यं** मूल जलाशयम् ॥<br>पत्र २०७ | लामज्जक सुनाल स्यादमृणाल **लवं** लघु ।<br>इष्टकापथक **शीघ्रं दीर्घ**मूलं जलाश्रयम् ॥<br>वर्ग ३ श्लो० ८६ पत्र ११३ |
| राजक्षवक **इत्यन्यो** राजिका कृष्णसर्षपः ।<br>**क्षुताभिजनन**श्चैव **स चोको** राजसर्षप ॥<br>पत्र २१८ | राजक्षवक **इत्युक्ता** राजिका कृष्णसर्षपा ।<br>क्षुधाभिजन**का चैव सा चोक्ता** राजसर्षप. ॥<br>वर्ग ४ श्लो० ४१ पत्र १४३ |
| **असुरी** राजिका राजी **कृष्णि**का रक्तसर्षप ।<br>तीक्ष्णगन्धा चानितीक्ष्णा क्षुरक क्षुवक क्षव ॥<br>पत्र २१८ | आसुरी राजिका राजी **कृष्ण**का रक्तसर्षप ।<br>तीक्ष्णगन्धा चातितीक्ष्णा क्षु**वक क्षव**क क्षव ॥<br>वर्ग ४ श्लो. ६० पत्र. १४६ |

१. **शाद्वलं** क ग. घ. ङ छ. ण त. ॥ २. **वल्ली च शीतला** क ॥ ३. **शिता** क. ख. ग. ङ ॥ ४. **वाह्लीं** ण ॥ ५. **मुस्तमम्बुधरो** ग. छ च. छ ॥